# Āpastambaśrautasūtra

# DHŪRTASVĀMIBHĀṢYA

EDITED BY
Mahāmahopādhyāya Śāstraratnākara
PAṆḌITA A. CHINNASWĀMĪ ŚĀSTRĪ,
*Research Professor in Smṛti and Purāṇa,*
GOVERNMENT SANSKRIT COLLEGE, CALCUTTA.

**ORIENTAL INSTITUTE,**
**BARODA**
**1955**

# FOREWORD

We feel great pleasure in presenting to the world of scholars the first volume ( Praśnas I-VII ) of the Āpastamba Śrautasūtra with the Bhāṣya of Dhūrtasvāmī and the Laghuvivṛti of Mm. Pandit A. Chinnasvāmī Shastri as Vol. CXXI in the Gaekwad's Oriental Series. The work was entrusted to Mm. Pandit A. Chinnasvāmī Shastri for critical editing in 1938 and the Press-Copy was sent to the Government Press, Baroda, in 1943. The Press under heavy pressure of work could not commence printing before 1948 and took four years for completion. The contents and the index of the Sūtras were later on prepared by the learned Editor and printed in the Maharaja Sayajirao University Press which has been very prompt in finishing the work. The Press-copy of the second volume has been already received from the Editor and will be sent to the Press in the near future. It is hoped that the second volume will be published soon.

The first volume of the Āpastamba Śrautasūtra describes the Darśapūrṇamāsa in all its details, the duties of a Sacrificer, Agnyādheya, Agnihotra and Paśubandha—topics which are most important for the history of Indian Religion. The learned Editor whose contribution to Vedic and Mīmāṁsā studies is too well-known has no doubt laid under heavy obligation all the students of the Cult of Indian Sacrifice by not only giving different readings from other MSS. but also giving a lucid exposition of the technique of Sacrifice and offering his own critical remarks on several controversial points. Students of Vedic Religion will be certainly benefited by a close study of the present volume.

BARODA, *General Editor*
6-7-1955.

# प्राक्कथनम्

प्रायस्सप्तभ्यो वर्षेभ्यः पूर्वमारब्धमुद्रणोऽयमापस्तम्बश्रौतसूत्रस्य धूर्तस्वामिभाष्यसहितस्य प्रथमो भागः सप्तमप्रश्नान्तः प्रकाशं प्राप्यतेऽध्येतृजनसौकर्याय। आपस्तम्बश्रौतसूत्रग्रन्थोऽयमितः पूर्वं कलिकातानगरस्थ-एशियाटिक-सोसायटी-समित्या मुद्रितः। तत्र रुद्रदत्तकृतया व्याख्यया सह पञ्चदशप्रश्नपर्यन्तो भागः, ततश्चाऽऽसमाप्ति मूलमात्रं च मुद्रितः। एतद्व्याख्यापेक्षयाऽतिप्राचीनस्याऽतिगभीरस्य, तालवृन्तनिवासिकृतायाः श्रौतपद्धतेरपि मूलभूतस्य भाष्यस्य मुद्रणावश्यकतां मन्वानैः बडोदाप्राच्यविद्यामन्दिराध्यक्षैरस्य ग्रन्थस्य मुद्रणमारब्धम्। तत्र च मातृकासम्पादने ग्रन्थसंशोधनकार्ये चाहं नियुक्तः। तत्र भाष्यमतिगभीरमतिसंकुचितं च समुचितं विवरणमन्तरा न यथावदवबोद्धुमलमिति मन्वानेन मया भाष्यव्याख्यारूपां रामाण्डारकृतवृत्तिमवलम्ब्य टिप्पणी काचित् आवश्यकस्थलेषु संयोजिता यया भाष्याक्षराणि विवृताशयानि भवेयुरिति। मध्ये आदितः पञ्चाध्यायात्मको भाग एतस्य ग्रन्थस्य महीशूरराज्ये रामाण्डारवृत्तिसहित एव सम्मुद्य प्राकाश्यत। परं शोधयितृजनानवधानतया बह्व्योऽशुद्धयः तथैव परित्यक्ताः। अत एतत्संस्करणस्यावश्यकता तथैवाऽवतिष्ठत इति विचार्योपर्यप्यस्माभिः व्यापृतम्। इदानीं सप्तमप्रश्नान्तो भागः विदुषां पुरतस्समुपस्थाप्यते। यदि भगवाननुग्रहीष्यति एवमेव द्वितीयतृतीयावपि भागौ प्रकाशमचिरादुपेष्यत इति विभावयामो वयम्।

अत्र सूत्रकृतो महर्षेः आपस्तम्बस्य, ग्रन्थस्य सूत्रात्मकस्य, भाष्यस्य, तत्कर्तुश्च विषये यद्वक्तव्यं तत्सर्वमग्रिमभागे निरूपयितुमिष्यते। अत्र प्रथमे भागे एतद्भागीयविषयाणां एतदीयसूत्राणामेव च सूच्यन्ते निवेशिता। यथा च भागान्तरयोरप्यचिरादेव प्रकाशनं भवेत् तथानुग्रहीतुं भगवान् भवानीपतिरभ्यर्थनीयोऽस्माभिरिति—

पौष कृष्णैकादशी<br>
सं. २०१०<br>
कलिकाता, १६-१२-५३

चिन्नस्वामि शास्त्री

॥ श्रीः ॥

# आपस्तम्बश्रौतसूत्रीयं

## धूर्तस्वामिभाष्यम् ॥

### प्रथमप्रश्ने प्रथमः पटलः

[क]अथाऽतो दर्शपूर्णमासौ व्याख्यास्यामः ॥ १ ॥

अथोपोद्धातः--" यज्ञं व्याख्यास्याम " इति [1]परिभाषायां [2]यज्ञजातिवचनशब्देनैकविंशतिसंस्थस्य यज्ञस्य व्याख्या प्रतिज्ञाता । कथमेकविंशतिसंस्थो यज्ञ इति चेत्--सप्त [ख]पाकयज्ञसंस्थाः–औपासनहोमो, वैश्वदेवं, पार्वणम्, अष्टका, मासिश्राद्धं, सर्पबलिः, ईशानबलिरिति । सप्त हविर्यज्ञसंस्थाः--अग्निहोत्रं, दर्शपूर्णमासौ, आग्रयणं,

क. अत्राऽथशब्द आनन्तर्यार्थकः । आनन्तर्यञ्च किंनिरूपितमित्यपेक्षायां ' सङ्क्षेपेण यज्ञो व्याख्यातः परिभाषायाम् ' इति भाष्योक्तिमवलम्ब्य यज्ञपरिभाषाखण्डस्य पूर्ववृत्तत्वमभ्युपगम्य तदानन्तर्यमेवाऽथशब्दार्थ इति रामाण्डारेण भाष्यं व्याख्यातम् । तदन्यत्र परिभाषाप्रश्नस्य पाठेऽप्यर्थत एतत्पूर्वं द्रष्टव्यमित्येतदर्थकम् । वस्तुतस्तु–परिभाषासूत्राणि चतुर्विंशप्रश्नेऽन्त एव पठितानि सूत्रकारेण । तत्रैव चाऽध्ययनपरम्परायां पाठो दृश्यते । कपर्दिस्वामिनाऽपि " तदिदं व्याख्यानं सर्वकर्मशेषत्वादादावेव प्राप्तं सत् अन्ते कृतं कथं नु नामाऽधिकारिनिरूपणादि यथासम्भवमाचारगृह्यकर्मस्वपि प्राप्तं स्यादित्येवमर्थम् " इति वदता श्रौतगृह्योपकारार्थं श्रौतान्ते पाठ इत्यङ्गीकृतम् ।

ख. पाकयज्ञशब्दो गार्ह्यकर्मवाचकः । ' लौकिकानां पाकयज्ञशब्द ' इति गृह्य उक्तत्वात् । सर्पबलिः, ईशानबलिरिति कर्मनामधेये । तत्र प्रथमं सर्पदेवताकं चरुपिष्टद्रव्यकम् । द्वितीयं ईशानदेवताकमोदनद्रव्यकम् ।

1 परिभाषया B[2]

2 B[1] and P. Mss., read यज्ञजातिशब्देन. B[2] reads यज्ञजातिवचनयज्ञशब्देन ।

चातुर्मास्यानि, [1]निरूढपशुबन्धः, सौत्रामणी, [क]पिण्डपितृयज्ञादयो दर्विहोमा इति। सप्त [2]सोमसंस्थाश्च--अग्निष्टोमोऽ,त्यग्निष्टोम, उक्थ्यः, षोडशी, वाजपेयोऽ,तिरात्रो,ऽप्तोर्यामश्चेति[3]। अग्निष्टोमे यस्मिन् षोडशी गृह्यते राजन्यस्य सोऽत्यग्निष्टोमः । तत्र यज्ञसाधनानि हवींषि—पशुप्रभवं दशविधम्--पयो, दधि, आज्यम्, आमिक्षा, वाजिनं, वपा, त्वङ्मांसं, लोहितं, [ख]पशुरस इति । औषधं द्वादशविधम्--ओषधयः, तण्डुलाः पिष्टानि, [ग]फलीकरणानि, पुरोडाशाः, ओदनो, यवागूः, [घ]पृथुकाः, लाजाः, धानाः, सक्तवः, सुरेति । [ङ]आकाशो, वायुः, आपः, मधु, सोमः, कृष्णलानि, किंशुकानि, समिधः, शकलानि, बर्हिः, करीराणि, खर्जूराणीति स्वाहाकारवषट्कारप्रदानानि । अग्निः, शरीरं, प्राणाः, शरीरी, तुषा इत्येतान्यपि यज्ञसाधनानि हवींषि; देवतार्थत्वात्। सोमान्तानि च नित्यानि कर्माणि, [4]"नैयमिकं ह्येतदृणसंस्तुतं" इति वसिष्ठवचनात्। सोमावराध्यानि यानि श्रूयन्ते तानि कर्त्तव्यान्यवश्यमिति। [5]अतोऽफलार्थिनामपि कर्त्तव्यानि, [6]ऋणसंस्तवश्रुतेरभ्यासविधानात्, अक्रियायाश्चैन्द्राग्नपशुविधानात्, सोमस्याऽऽत्मस्परणार्थत्वाच्च । " स एतांश्चतुर्होतॄनात्मस्परणानपश्यत् " इति। अतो व्याख्यातव्यानि ।

क. पिण्डपितृयज्ञ इति यज्ञशब्दवाच्यत्वेऽपि वषट्कारेण प्रदानाभावात् दर्विहोमत्वम् ।

ख. पशुरसो वसा ।

ग. द्वितीयवारमवहन्यमानानां तण्डुलानां यास्सूक्ष्माः त्वचः, तानि फलीकरणानि ।

घ. पृथूकृतास्तण्डुलाः पृथुकाः चिपिटकाः, भ्रष्टा व्रीहयो लाजाः, भ्रष्टा यवा धानाः, चूर्णीकृता धानास्सक्तवः ।

ङ. आकाशस्य हविष्ट्वमश्वमेधे मानसग्रहे "आकाशाद्गृह्णीयात्" (आप. श्रौ., २१. १०. ३) इति विहितम् ।

च. आत्मस्परणमात्मनिष्क्रयणम् ।

1 P. Ms., reads पशुबन्धः

2 Ibid, संस्थाः

3 B2. reads अप्तोर्याम इति ।

4 नैमित्तिक ग.

5 P. and B2 Mss., read अफलार्थिनाऽपि

6 B1. Ms., reads ऋणसंस्तुति B2 reads ऋणस्तुतेः

शाखादौ दर्शपूर्णमासमन्त्राणां पूर्वमाम्नानादाधानेष्टीनामपि[क] दर्शपूर्णमासप्रकृतित्वादाधानादपि पूर्वं दर्शपूर्णमासव्याख्या क्रियते। यदि च [1]नाऽऽदितः क्रियेताऽधिकारः, यान्यङ्गान्युत्तरत्र [2]वक्ष्यन्ते तानि कस्येति न ज्ञायेरन्। अतो दर्शपूर्णमासाधिकारः क्रियते।

इदानीं पदानि—अथ, अतः, दर्शपूर्णमासौ, वि, आख्यास्यामः। अथशब्दोऽ[3]यं मङ्गलार्थः। "मङ्गलादीनि शास्त्राणि प्रथन्ते। अध्येतारः श्रोतारश्चाऽऽयुष्मन्तो भवन्ति" इति श्रुतिः। आनन्तर्यार्थो वा, लोकवेदवत्। लोके 'स्नातः, अथेदानीं भुङ्क्ते' इति। वेदे च "[ख]हृदयस्याऽग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" इति। [4]सङ्क्षेपेण यज्ञो व्याख्यातः परिभाषायाम्। विस्तरेण दर्शपूर्णमासावनन्तरमुच्येते।

अतश्शब्दो [5]हेत्वपदेशार्थः[ग]। यस्माद्दर्शपूर्णमासावव्याख्यातौ न शक्यौ प्रयोक्तुम्, अक्रियायाश्च दोषः, अत उच्येते। [घ]दृश्यते यस्मिन् क्षणे सूर्येण सङ्गतश्चन्द्रमाः सिद्धैः स क्षणो दर्शः। तद्योगादहोरात्रम्। तत्कालवर्तित्वात्प्रधानसमुदायः। कानि पुनस्तानि? [ङ]आग्नेयैन्द्राग्नयोराग्नेयसान्नाययोर्वा होम इत्युपदेशः। होमसाध्यो धर्मः[च] फलकरणमिति

क. आधानेष्टीनां आधानाङ्गभूतपवमानेष्टीनाम्।

ख. अग्नीषोमीयपश्वङ्गावदाने क्रमविधिरयम्। अवदानकाले प्रथमं हृदयस्याऽग्रभागादवद्यति होमार्थम्। अनन्तरं जिह्वाया अग्रभागात्। ततो वक्षसोऽग्रभागादिति।

ग. अपदेशः कथनम्।

घ. रुद्रदत्तस्तु—न दृश्यतेऽस्मिन् चन्द्रमा इति विपरीतलक्षणया दर्शशब्दं निर्वक्ति, खण्डयति चाऽमुं पक्षम्। See आप. श्रौ. सू. P. 2. Vol. I Calcutta edn.

ङ. असोमयाजिनः आग्नेयैन्द्राग्नौ; सोमयाजिनस्तु आग्नेयसान्नाय्ये इति विवेकः। सान्नाय्यं दधि पयश्च।

च. इदञ्च प्रभाकर (गुरु) मतानुसारेण। भट्टमते होमस्यैव धर्मत्वाभिधानात्।

1 B. and P. Mss., read न क्रियेत

2 B. P. Mss., and ग. read उच्यन्ते

3 B.[1,2] Mss. omit अयम्

4 B. and P. Mss. have संक्षेपतः for संक्षेपेण

5 हेत्वर्थः। यस्मात् ग. P. Ms., reads हेत्वर्थो यतः; B. Ms., reads हेत्वर्थे। यतः

न्यायः । [1]मास इति चन्द्रमस आख्या, [2]मासार्धमासानां मानात् । स पूर्यते यस्मिन् क्षणे स क्षणः पूर्णमासः, तद्योगादहोरात्रम् । तत्कालवर्तित्वा[3]त्प्रधानसमुदायः । [4]कानि पुनस्तानि ? [क]आग्नेयोपांशुयाजाग्नीषोमीयाणां, [5]आग्नेयोपांशुयाजयोर्वा [6]होमः । सर्वहोमेषु [7]फलकॢप्ति[ख]रिति न्यायः । दर्शश्च पूर्णमासश्च दर्शपूर्णमासौ । ' अल्पाच्तरं पूर्वं निपतती ' ति वचनात् [8]पश्चात्प्रयोगिणोऽपि दर्शशब्दस्य पूर्वनिपातस्समासे । विशब्दो विस्तरार्थः । ये [10]त्वधिकविधयः शाखान्तरस्थाः, तानपि वक्ष्याम इति । आङ् बलवदर्थे । श्रुत्यर्थसंशये [11]कारणैर्बलवद्भिरुपपाद्य विधिं वक्ष्याम इति । व्याख्यास्यामः इति । चक्षिङो व्यक्तवागभिधायिनः ख्याञादेशोऽयम् । तत्र पिण्डितार्थः—परिभाषानन्तरं दर्शपूर्णमासौ वक्ष्याम इति । यस्मादेतावन्तरेण [12]सकलं श्रौतं न प्राप्यत [13]इति । तत्र कश्चिद्ब्रूयात्--मन्त्रब्राह्मणयोर्व्याख्यातत्वादर्शपूर्णमासयोरनर्थकस्सूत्रकारयत्न इति । [14]तच्च न; [15]दुर्ज्ञानत्वाच्छ्रुत्य-

क. सोमयाजिन आग्नेयोपांशुयाजाग्नीषोमीयाः; असोमयाजिनः-आग्नेयोपांशुयाजाविति विवेकः । " आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवति " इति वचनात् ।

ख. फलकॢप्तिरित्यपूर्वमुच्यते कल्प्यतेऽनेन फलमिति ।

1 An. edn. reads मा इति
2 P. Ms., reads मानादर्धमासानां
3 An. and P. Ms., have प्रधानकर्मसमुदायः
4 P. and B² Ms., read कानि पुनः प्रधानानि
5 B.¹ Ms., read आग्नेयोपांशुहोमा वा. B² reads आग्नेयोपांशुयाजाग्नीषोमीया होमाः ।
6 P. Ms., has होम इत्युपदेशः
7 धर्मकॢप्तिः for फलकॢप्तिः in P. Ms.
8 B. Ms., reads पश्चात्प्रयोगेऽपि
9 B. Ms., reads विस्तरार्थे
10 P. Ms., reads ये त्वन्यविधयः B² omits तु
11 B. Ms., reads बलवद्भिः कारणैः
12 P. Ms., has सङ्कल्पितं सकलं श्रौतं अनिशसकलं
13 B. Ms., omits इति
14 Ibid, तन्न
15 दुर्विज्ञेयत्वाच्छ्रुत्यर्थस्य ग. B² omits अशक्यत्वात्

र्थस्य, अद्यतनैरकधिकविध्युपसंहारस्य चाऽशक्यत्वात् । अतो नाऽनर्थकस्सूत्रकारयत्न[1] इति ॥ १ ॥

## प्रातरग्निहोत्रं हुत्वाऽन्यमाहवनीयं प्रणीयाऽग्नीनन्वादधाति ॥ २ ॥

प्रातरिति कालवाच्यव्ययम् । 'सङ्गवान्तः[2] प्रात'रित्याश्वलायनेनोक्तम्, स उषसमारभ्य । अग्निहोत्रमिति कर्मनाम[3] । [4]'अग्नेर्यत्र सायमाहुति[क]रिति । " स एतद्भागधेयमभ्यजायत, यदग्निहोत्रम् । तस्मादग्निहोत्रमुच्यते " इति निर्वचनात् । तदग्निहोत्रं हुत्वा होमेना[ख]ऽऽराध्याऽग्निम् । आहूयन्तेऽस्मिन्नाहुतय इतरेभ्यो भूयस्य इति आहवनीयः । नाऽर्थान्त[5]रवचनता संज्ञाशब्दानाम् । प्रणयनं पुरस्तान्नयनम् । ' [6]तदप्याहवनीयस्य कृत्वा । अग्नयः अग्रं यज्ञेषु [7]नीयन्ते प्र[8]थममिति । अन्वाधानं आनुपूर्व्येण बलवदिन्धनं[9] अर्थसमर्थनमिति । प्रातश्शब्दोऽन्वाधानेन सम्बध्यते कथं प्रातरन्वाधानं क्रियेतेति[10] । अग्निहोत्रं हुत्वेत्यानन्तर्यार्थत्वान्मा भूदहुते प्रवृत्तिरिति । इतरथा तस्मिन्नेव हूये[ग]त

क. अनेन सायंहोमस्याऽग्निदेवताकत्वमेवाऽग्निहोत्रशब्दप्रवृत्तिनिमित्तमिति सूचितं भवति । बहुव्रीहिसमासश्चाङ्गीकृतो भाष्यकारेण ।

ख. होमस्य देवताराधनरूपत्वमभ्युपगच्छन् मीमांसकमतविरुद्धं स्वमत (याज्ञिकमत) मिति ध्वनयति भाष्यकारः ।

ग. अग्निहोत्रमिति शेषः ।

1 B. Ms., omits सूत्रकारयत्नः

2 प्रातस्सङ्गवे सायं ग.

3 P. Ms., reads नामधेयं.

4 Ibid, आग्नेय्यत्र सायं

5 Ibid, अर्थान्तरगमनं

6 B. Ms., reads तदस्याहवनीयस्य

7 Ibid, प्रणीयन्त इत्यग्नयः

8 B² P. Mss. omits प्रथमम्

9 P. Ms., and ' ग ' बलवदिन्धनेनाऽर्थसामर्थ्यं;
B. Ms. reads बलवदिन्धनेनाऽर्थसमर्थम्.

10 B. Ms., reads क्रियते

[1]यथा सायंहोमः । अर्थान्यत्वात् [2]सिद्धेऽपि 'अन्यमाहवनीयं प्रणीय' इति प्रणयनपुनर्वचनं [क]चतुर्होत्रर्थं प्रणीते मा भूत् पूर्णमासः । कथमन्य एव प्रणीयेत ? । चतुर्होतुस्सर्वेदर्शपूर्णमासार्थत्वादेकफलत्वा[3]द्वा दर्शपूर्णमासयोः । पौर्णमासार्थं प्रणीते मा भूत् दर्शः, कालभेदात् । आहवनीयग्रहणं प्रदर्शनार्थं, दक्षिणाग्नेरपि [4]प्रणयनं यथा स्यात् । यद्येकयोनिः [5]अन्वाहार्यपचनस्य पुनराहरणम् । तथा सभ्यावसथ्ययोः । उद्धृत आहवनीयेऽस्थापिते दक्षिणाग्नेर्निधानम्, आधाने तथा दृष्टत्वात् । सर्वत्रेति केचित्[6] । अन्यग्रहणं प्रातरग्निहोत्रं हुत्वाऽन्यस्य प्रणयनम्, न सायमग्निहोत्रं हुत्वेति । [ख]निशीष्टौ नक्तमाहवनीयधारणे नाऽन्यः प्रणीयते । आहवनीयग्रहणेऽक्रियमाणे धार्या अपि देशान्तरे प्रणीयेरन् । अतस्तत्क्रियते[7] । 'अग्नीनन्वादधाति' इत्यधिकारात् "देवा गातुविद" इति जपोऽप्यङ्गमग्न्यन्वाधानस्य । अतोऽस्य [ग]सोमेष्टिषु निवृत्तिः[घ] ।

तत्र सङ्क्षेपतोऽर्थः--प्रातरग्निहोत्रं हुत्वा प्रणीयाऽऽहवनीयं प्रातरन्वाधानं कर्तव्यमिति । त्रीणि चैतानि सूत्राणि--हुत्वा, प्रणीय, अन्वा-

क. अस्य खण्डनं करोति रुद्रदत्तः, See P. 3 आप. श्रौ., Vol. I Calcutta edn.

ख. "अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यो रक्षोभ्यो बिभीयात्" इति वाक्यविहितेष्टिर्निशीष्टिः । निशि कर्तव्यताविधानादस्या निशीष्टिरिति संज्ञा । See आप. श्रौ., १९. १८, १४. also तैत्तिरीयसंहिता २.२.२.२.

ग. सोमेष्टिषु सोमयागाङ्गभूतासु दीक्षणीयादीष्टिषु ।

घ. तत्र सोमार्थधारणेनैव प्रसङ्गसिद्धेः पुनरपि धारणप्रयोजनकस्याऽन्वाधानस्याऽभावसिद्धान्तादिति हृदयम् । See जै. सू., (१२-१-१९) "धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते" इति ।

1 इष्ट्यर्थं एव यथा ग.

2 P Ms., and 'ग' read प्रणयने पुनर्वचनं. B² reads सिद्धे प्रणयने अन्य......णीयेति पुनर्वचनम्

3 P. B. Mss read एकफलार्थत्वात्

4 Ad. Ms. reads नयनं

5 P B² Mss read आहार्यस्य

6 B. Ms., adds: धारणाग्रहणात् after केचित्

7 B. Ms., has तद्ग्रहणं क्रियते for तत्क्रियते

दधातीत्येवमन्तानि । [1]अर्थान्तरवाचकत्वात् । [क]उपदेशः परिहारः, अन्यशब्देनाऽग्निहोत्रविहरणविधिस्तूष्णीको [2]भवति, 'अन्या वा यजुषोत्पूय' इति वचनात् । बलवत्करणमन्वाधानम् ॥ २ ॥

**न गतश्रियोऽन्यमग्निं प्रणयति ॥ ३ ॥**

गता [3]प्राप्ता यस्य श्रीः स गतश्रीः । स उत्तरत्र व्याख्यास्यते । न तस्याऽन्यमग्निं प्रणयति; 'नित्यो गतश्रियो ध्रियत' इति वचनात् । नाऽऽरब्धव्य इह गतश्रीप्रतिषेधः । वरुणप्रघासेषु [ख]प्रतिप्रस्थातुः [4]प्रणयनं मा भूदाहवनीयस्य विभागो यथा [5]स्यादिति । अन्यग्रहणमतिप्रणीते मा भूदन्योपलक्षितस्य प्रतिषेध इति । अग्निग्रहणं प्रणीतादीनां प्रणयनप्रतिषेधो मा भूदिति ॥ ३ ॥

**"देवा गातुविदो गातुं यज्ञाय विन्दत । मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यताम्" इति जपति ॥ ४ ॥**

जपति उत्तरतो विहारस्य । [ग]चातुस्स्वर्येण सर्वे जपाः । अन्ये मन्त्रा एकश्रुत्या । [6]केचिद्यज्ञयोगार्थत्वाद्विहरणात्पूर्वं जपं कुर्वन्ति । तदनुपपन्नम्; विहरणमुक्त्वोपरि पाठात् । तैश्च समिष्टयजुस्सर्वान्ते प्रयोक्तव्यं स्यात् ॥ ४ ॥

क. उपदेशमतं तु–'आहवनीयं प्रणीय' इत्येतावतैव अन्यत्वसिद्धौ पुनरन्यग्रहणं व्यर्थप्रायमिति शङ्कापरिहारार्थम् । यथा "अन्या वा यजुषोत्पूय" ( आप. श्रौ. १-२४-४ ) इत्यत्र यजुषा मन्त्रनिवृत्तावपि अन्येषां प्रणीताधर्माणां अभिमन्त्रणादीनां यथा प्राप्तिः एवमत्रापि मन्त्रवर्जमन्येषां आग्निहोत्रिकधर्माणां प्राप्त्यर्थमन्यग्रहणमिति ।

ख. तत्र दक्षिणविहारे प्रतिप्रस्थातृकर्तृकहोमार्थमग्नेरपेक्षितत्वेन तदर्थं गार्हपत्यात्प्रणयनं प्राप्नोति, तन्मा भूत्; किन्तु सकृदेवाऽऽहवनीयं प्रणीय तं द्वेधा विभज्य दक्षिणोत्तरयोर्विहारयोर्निदध्यादिति । मतमिदं खण्डितं रुद्रदत्तेन । See P. ७ आप. श्रौ., Vol. I Calcutta edn.

ग. यज्ञे प्रयोक्तव्यस्य तानाख्यस्यैकस्वरस्य " तानो यज्ञकर्मण्यजपन्यूङ्खसामसु " इति जपादिपर्युदासादिति भावः ।

1 B. P. Mss., and An. read अन्यार्थवाचित्वात्

2 B. Ms., has न भवति for भवति

3 प्राप्ता is omitted in P. Ms.

4 P. Ms., reads: प्रणयनं 'नित्यो गतश्रिय' इति वचनान्मा भूत्

5 B. Ms., has यथा स्यादिति गतश्रीप्रतिषेधः

6 P. and B. Mss., read यज्ञप्रयोगार्थत्वात्

"[१]ममाग्ने वर्चो विहवेष्वस्त्वि" त्याहवनीयमुपसमिन्धे [२]उत्तरया गार्हपत्यमुत्तरयाऽन्वाहार्यपचनम् ॥ ५ ॥

[1]धारणसमर्थमिन्धनमुपसमिन्धनम्। तदाहवनीयस्य कृत्वा पूर्वम्। [2]गृहपतिना संयुक्तो [क]गार्हपत्योऽग्निः। तस्याऽनन्तरमुपसमिन्धनम्। [ख]'क्रूरं' यत् बीजवधादि हिंसासंयुक्तं, 'विलिष्टं' यदयथाकृतं, तदन्वाहरति प्रणाशयतीत्यन्वाहार्यः । [3]यस्मिन् स पच्यते सोऽन्वाहार्यपचनः। सभायां भवः सभ्यः। आवसथे भव आवसथ्यः। तयोस्तूष्णीं [4]समिन्धनम्। [5]याजमा[ग]नोपस्थानदर्शनात् ॥ ५ ॥

तिसृभिस्तिसृभिर्वोत्तमां तु जपेदाहवनीये वाऽऽदध्यात् ॥ ६ ॥

[6]सर्वेष्वपि कल्पेषु तिसृभिस्तिसृभिः [घ]विहव्यस्याऽपवर्गावधारणादस्मिन्नेव पक्ष उत्तमाया जपः, तुशब्दप्रयोगात्। आहवनीये वा सर्वास्समिध आदध्यात्[7] ॥ ६ ॥

क. पङ्कजादिपदवद्योगरूढोऽयं शब्दः।

ख. क्रूरमित्यादि अन्वाहार्यपचननिर्वाचकब्राह्मणव्याख्यानम्। तदित्थम्-"यद्वै यज्ञस्य क्रूरं यद्विलिष्टं तदन्वाहार्येणाऽन्वाहरति तदन्वाहार्यस्याऽन्वाहार्यत्वं" इति ( तै. सं., १-७-१. )

ग. याजमानप्रकरणे सभ्यावसथ्ययोरपि यजमानोपस्थानविधानात्तदर्थमेवाऽत्रोपसमिन्धनं तयोरपि कर्तव्यमित्यर्थः। तत्राऽयं विधिः—" अजस्रं त्वा ॰ सभापालाः + शतमिति सभ्यम्। अन्नमावसथीयं + यच्छत्वित्यावसथ्यं " इति ( आप. श्रौ., ४-२-१ )

घ. " ममाग्ने वर्चः " इत्यनुवाकस्य विहव्य इति संज्ञा। तत्र प्रथममन्त्रे विहवपदश्रवणात्।

1 धारणाय समर्थं B2 reads
2 B. Ms., reads गृहपतिसंयुक्तोऽग्निर्गार्हपत्यः
3 P. Ms., has स यस्मिन् पच्यते
4 उपसमिन्धनं for समिन्धनं in B. Ms.
5 Ad. B2 Mss read यजमान
6 P, and Ad. Mss., read सर्वेषु विकल्पेषु.
7 B.1 Ms., reads आदध्यात् सर्वाऽपि नेतरेषु. B.2 Ms, omits from तु शब्दप्रयोगात्।

१. ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम ।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेम ॥

२. मम देवा विहवे सन्तु सर्व इन्द्रावन्तो मरुतो विष्णुरग्निः।

## व्याहृतिभिरन्वाधानमेके समामनन्ति ॥ ७ ॥

[क]एकैकया व्याहृत्याऽन्वाधानम्, [ख]स्वयमातृण्णोपधाने समस्तोपदिष्टानां विभागकरणात् । अत्र तु गार्हपत्यादि[1] । व्याहृतिपक्षे वाजसनेयिनां [ग]प्राक्संस्थावचनात् । तिसृभिस्तिसृभिरेकैकस्योपदेशः[2][3] ।

अथ कर्मानुपूर्व्यम्—सारस्वत[घ]होमयोः पुरस्तात्—"दर्शपूर्णमासावारप्स्ये, ताभ्यां यावज्जीवं यक्ष्ये, स्वर्गं लोकमाप्नवानी[4]" ति सङ्कल्पः । सर्वकामानां वा कामनम् । सारस्वतान्वारम्भणीयाचतुर्होतॄणां सर्वदर्शपूर्णमासार्थत्वात् । यदा [ङ]त्वाहारपृथक्त्वे कामः, तदाऽपि सारस्वतहोमयोः पुरस्तात् "दर्शपूर्णमासावारप्स्ये, ताभ्यां यावज्जीवं यक्ष्ये, त्रिं[च]शतं वा वर्षाणि । जीर्णो वा विरमणं करिष्ये" इत्येतावदुक्त्वा

क. भूः, भुवः, सुवः, इत्येकैकया व्याहृत्या एकैकस्याऽग्नेरन्वाधानमित्यर्थः ।

ख. "भूर्भुवस्सुवरिति स्वयमातृण्णामुपदधाति" इति समुच्चयेन विहितानामपि व्याहृतीनां सूत्रकारेण पृथगेव विनियोगप्रदर्शनात् । ( See आप. श्रौ., १६. २३. १ )

ग. "महाव्याहृतिभिर्वा प्राक्संस्थम्" ( का. श्रौ., २. ६. ) इति कात्यायनः ।

घ. "सारस्वतौ होमौ पुरस्ताज्जुहुयादमावास्या वै सरस्वती पूर्णमासस्सरस्वान् तावेव साक्षादारभत ऋध्नोत्याभ्याम्" इति विहितौ सरस्वतीसरस्वदुभयदेवताकौ होमौ । सूत्रकारेण च "पूर्णा पश्चाद्यत्ते देवा अदधुरिति सारस्वतौ होमौ हुत्वाऽन्वारम्भणीयामिष्टिं निर्वपति" ( आप. श्रौ., ९. २३. ४. ) "दर्शपूर्णमासावारप्स्यमाणश्चतुर्होतारं मनसाऽनुद्रुत्याऽऽहवनीये सग्रहं हुत्वाऽथ दर्शपूर्णमासावारभते" ( आप. श्रौ., ९. २४.७. ) इत्यमी पक्षा विहिताः ।

ङ. तत्तत्फलार्थं पृथक्पृथगनुष्ठानं आहारपृथक्त्वम् । ( See आप. श्रौ., ३. १४. १०. )

च. एतेषां पक्षाणां विधानमुपरिष्टात् ( आप. श्रौ., ३. १४. १२. ) द्रष्टव्यम ।

1 Ad. Ms., omits व्याहृतिपक्षे after गार्हपत्यादि.

2 P. Ms., reads only तिसृभिरेकैकस्य.

3 The following additional lines are found in B. Ms., after उपदेशः—
यद्यपि व्याहृतिभिरुपादेयबहुत्वविवक्षा प्राप्ता, तथापि भिन्नार्थत्वात्समस्तोपदिष्टानां विभागकरणं व्याहृतिपक्षे । पूर्वोक्तबहुत्वविवक्षा न्यायेनाहवनीयाद्येव.

4 B. Ms., reads अवाप्नवानि.

ममान्तरिक्षमुरु गोपमस्तु मह्यं वातः पवतां कामे अस्मिन् ॥
मयि देवा द्रविणमायजन्तां मय्याशीरस्तु मयि देवहूतिः ।
दैव्या होतारा वनिषन्त पूर्वेऽरिष्टास्स्याम तनुवा सुवीराः ॥ ( तै. सं. ४. ७. १४. )

अहुते चतुर्होतरि[1] परित्यक्ते चाऽग्नौ दर्शपूर्णमासाभ्यां यक्ष्ये। स्वर्गं लोकमाप्नवानीत्यादयः[2] कामाः। पौर्णमास्यादौ वपनम्। ततो विद्युदसीति, आम्नानात्। विहरणं, जपः, समिन्धनमिति कर्मक्रमः प्रथमे। अन्येषु तु हुत्वाऽग्निहोत्रममुना यक्ष्य इत्युक्त्वा कामः। वपनम्, विद्युदसि, ततो विहरणादि। यदि ह्यसङ्कल्पिते क्रतौ विद्युदसि कामो वा क्रियेत न विज्ञायेत [3]कस्य क्रतोरारम्भ इति। उपदेशो–वपनं, विद्युदसि, क्रतुसङ्कल्पः, कामो, विहरणमिति ॥ ७ ॥

**सन्नयतः पलाशशाखां शमीशाखां वाऽऽहरति बहुपर्णां बहुशाखामप्रतिशुष्काग्रामसुषिराम् ॥ ८ ॥**

यस्मात्पशुभिरोषधीभ्य इन्द्रस्येन्द्रियं [क]सन्नीतमात्मनि तस्माद्दधि च पयश्च सान्नाय्यम्। "यत्समनयन् तत्सान्नाय्यस्य सान्नाय्यत्वमि" ति। तेन यो यजते स सन्नयन्नित्युच्यते। तस्य सन्नयतः, पलाशस्य शाखा पलाशशाखा। शम्याः शाखा शमीशाखा। तां आहरति। [4]पर्णानि पत्राणि। सन्नयत इति वचनात्सान्नाय्यार्था शाखा, [ख]नोपवेषार्था। लोकप्रसिद्धानां द्रव्याणामुपादानं, इहाऽनुपदेशात्। बहूनि [5]पर्णानि, बह्वयश्च

क. इयमत्र तैत्तिरीयसंहितायां सान्नाय्यब्राह्मणोक्ता कथाऽनुसन्धेया–वृत्रबधकाले इन्द्रस्य वीर्यं भूमौ निपत्य विशीर्णमभूत्। तत्कालेनौषधिरूपतामापन्नम्। तदा निर्वीर्य इन्द्रो भीतः प्रजापतेस्समीपं गत्वा स्वीयं वृत्तान्तमकथयत्। ततस्स पशूनाहूयाऽवोचदिदमिन्द्रस्येन्द्रियमोषध्यात्मना विशकलितमेकत्र सङ्गीकृत्येन्द्राय दत्तेति। तच्छ्रुत्वा पशव ओषधीश्चरित्वा तद्रसरूपेणावस्थितमिन्द्रस्येन्द्रियं स्वात्मनि समचिन्वन्। ततः पुनरदुहन् दुग्धात्मना। ततः पयः, ततश्च दधि समभवताम्। यत इन्द्रियमिन्द्रस्य पशूनामात्मनि सन्नीतं ततोऽस्य सान्नाय्यमिति नाम सम्पन्नमिति। ( See तै. सं. २. ५. ३. २. from इन्द्रस्य वृत्रं जघ्नुषः to तद्दध्नो दधित्वम्। )

ख. इदं विचार्य निर्णीतं पूर्वमीमांसायां चतुर्थद्वितये तृतीयाधिकरणे। अङ्गारनिधापनकपालोपधानार्थः काष्ठविशेष उपवेषः।

1 Ad. Ms, reads होतरित्युक्ते for होतरि परित्यक्ते.
2 B. and P. Mss., read अवाप्नवानीत्येवमादयः
3 P. Ms., reads कस्याऽयं.
4 B. Ms., omits पर्णानि पत्राणि.
5 B. Ms., reads पर्णानि पत्राणि.

शाखाः । यस्याः शाखाया अग्रं प्रत्यशुष्का अप्रतिशुष्काग्रा । असुषिरा यस्या नान्तश्छिद्रम् ॥ ८ ॥

**"यं [क]कामयेताऽपशुस्स्यादित्यपर्णां तस्मै शुष्काग्रामाहरेत्, अपशुरेव भवति । यं कामयेत पशुमान् स्यादिति बहुपर्णां तस्मै बहुशाखामाहरेत् पशुमन्तमेवैनं करोति" इति विज्ञायते ॥ ९ ॥**

अपशुत्वादयः प्रतिषेधार्थाः, अनिष्टत्वात् । [1]न ह्यशुभमृत्विक्चिन्तयेद्यजमानस्य। सूत्रकारमतिश्च "पदाभ्यासप्रतिषे[2]धास्त्वि" ति। उपदेशोऽध्वर्युकाम इति । बहुपर्णप्रशंसार्थमिति न्यायः ॥ ९ ॥

**सा या प्राच्युदीची प्रागुदीची वा भवति "इषे त्वोर्जेत्वे" ति तामाच्छिनत्ति ॥१०॥**

उत्तरा सैव केवला यस्यां नाऽन्यदुत्थितम् । वृक्षस्य प्राची वोदीची वा, [ख]ब्राह्मणेऽधिकृतत्वात् । लोके यदनर्थकं तत्पुनरुक्तं तद्वच सूत्रकारव्यवहारः । अतोऽन्वादेशेषूपसर्गबहुत्वे च न दोषः । उपदेशमतात्तूच्यते परिहारः—या त्वविरुद्धा तामेवाऽऽच्छिनत्ति । यथाऽन्या[ग] न छिद्यते पर्णमपि । आच्छिनत्ति एकयत्नेनाऽविश्रान्तः ॥ १० ॥

**अपि वा "इषे त्वा" इत्याच्छिनत्ति "ऊर्जे त्वा" इति संनमयत्यनुमार्ष्टि वा ॥ ११ ॥**

क. ब्राह्मणवाक्यस्येदमुद्धरणम्. See तै. ब्रा. ३. १. १. २.

ख. "यत्प्राचीमाहरेत् देवलोकमभिजयेत् । यदुदीचीं मनुष्यलोकं, प्राचीमुदीचीमाहरति । उभयोर्लोकयोरभिजित्यै" (तै. ब्रा., ३. १. १. ३.) इति ब्राह्मणे प्राचीत्वादेः वृक्षसंबन्धित्वावगमादिति ।

ग. यस्यां शाखायां छिद्यमानायामन्या वा शाखा, अन्यद्वा पर्णं न च्छिद्यते, तादृशीमाच्छिन्द्यादित्युपदेशमतमिति ।

1 B. Ms., reads न त्वशुभं.

2 B. Ms., reads प्रतिषेध:

सन्नमनमृजूकरणम् । मूलादारभ्याऽऽग्रात्स्पर्शनमनुमार्जनम् । छि-[क]त्वाऽपामुपस्पर्शनम् । 'छिनद्मि' 'संनमयामी' ति केचिदध्याहारं कुर्वन्ति अपूर्णार्थेषु । न तु तत्; सूत्रकारेणाऽनुपदेशात् ॥ ११ ॥

इत्यापस्तम्बश्रौतसूत्रे प्रथमा कण्डिका ॥ १ ॥

**"इमां प्राचीमुदीचीमिषमूर्जमभिसँस्कृताम् । बहुपर्णामशुष्काग्राँहरामि पशुपामहम्" इत्याहरति ॥१॥**

आहरणमन्त्रः प्रागुदीच्यामेवेति केचित्, लिङ्गात्, अनिवृत्तिर्वा । स उच्यते । [ख]भाविप्राक्त्वमुदक्त्वमत्याधान इति । अनूहश्च[ग] । केवलेऽपि प्रातर्दोहे प्रकृतिस्थस्य प्रागुदक्त्वस्य [1]संस्तवात्, जात्यैकत्वाच्च संस्तवः । यथा नवेषु लाङ्गलेषु "एभिर्वयं जीवाम" इति । यथा वा "[घ]त्वया होता सन्तनोत्यर्धमासान्" इति अर्धमाससन्तानः प्रकृतिस्थ उच्यते। विकृतावपि वेदाकृतेः कालान्तरे वर्तमानायाः स्तुतिरिति ॥ १ ॥

**"वायवस्थोपायवस्थ" इति तया षडवराध्यान् वत्सानपाकरोति ॥ २ ॥**

क. छेदनादावपामुपस्पर्शनं यज्ञपरिभाषायां विहितम्—छेदनभेदनेत्यादि ( आप. श्रौ. २४. २. ९ )

ख. "तस्यां शाखापवित्रमासजति, तस्यां प्रागग्रं शाखापवित्रमत्यादधाति, उदक्प्रातः" (आप. श्रौ. १. १२. ३, ४.) इति कालभेदेन शाखायाः प्रागग्रत्वोदगग्रत्वयोरपि विधानादुत्तरत्र तदनुसारेणेदमिति भावः । अतस्सर्वपक्षेषु मन्त्रः प्रवर्तत एवेति ।

ग. प्राच्यामुदीच्यां प्रागुदीच्यां वा शाखायां यथाम्नात एव मन्त्रः पठनीयोऽनूहेनैवेति ।

घ. वेदे दर्शपूर्णमासस्थे प्रयुज्यतेऽयं मन्त्र उत्पादनसमये । तस्य च दर्शे पूर्णमासे च क्रियमाणत्वादर्धमासयोस्सन्तानमनेन क्रियत इति संस्तूयते । विकृतावेककालानुष्ठीयमानायामप्ययं मन्त्रो वेदकरणाङ्गत्वेनाऽतिदेशेनाऽऽगच्छति । तत्राऽर्धमाससन्तानं नास्ति । तथाऽपि प्रकृतिस्थं तत्सन्तानमादायैव वेदस्तुतिः क्रियतेऽनेन मन्त्रेण । तद्वच्छाखायामपि प्रातःकालिकमुदक्त्वमादायैव स्तुतिरिति । त्वया वेदिं विविदुः इति मन्त्रारम्भः ।

1 B. Ms., reads संस्तवनात्.

[1]पृथक्करणं मातृभ्योऽपाकरणम् । तत्र मन्त्रावृत्तिः प्रतिवत्सम् । एकयत्नेनाऽशक्यत्वात् यद्यपि बहुवचनम् । अवरो भागः षट्कृत्वः । [2]कुम्भी व[क]राध्यें" ति सूत्रान्तरे ॥ २ ॥

**दर्भैः दर्भपुञ्जीलैर्वा ॥ ३ ॥**

पुञ्जीलं [3]स्तम्बः ॥ ३ ॥

**[१]"देवो वस्सविता प्रार्पयतु" इति शाखया गोचराय गाः प्रस्थापयाति ॥ ४ ॥**

गावो यत्र चरन्ति स गोचरः । तदर्थं प्रस्थापयति अघशंसान्तेन मन्त्रेण । देवभागमित्यपि[4] लभ्यते । [ख]न तूपदेशः । नाऽऽवर्तते [ग]प्रतिगु यद्येकप्रयत्नेन[5] प्रतिष्ठन्ते गावः ॥ ४ ॥

**प्रस्थितानामेकां शाखयोपस्पृशाति दर्भैर्दर्भपुञ्जीलैर्वा ॥ ५ ॥**

शाखयोपस्पर्शनं तूष्णीम् ॥ ५ ॥

**"आप्यायध्वमघ्निया इन्द्राय देवभागं" इत्येके समामनन्ति महेन्द्रायेत्येके ॥ ६ ॥**

समामनन्ति परिपठन्त्यन्ये शाखिनः ॥ ६ ॥

क. "यावतीनामेका कुम्भी दुग्धं सम्भरेत्, तावती वराध्यां मात्रा स्यात्" ( भार. श्रौ., १. २. १३ ) इति भारद्वाजसूत्रमत्राऽभिसंहितम् ।
ख. ब्राह्मणे "देवेभ्य एवैना इन्द्रायाऽप्याययति," इतीन्द्रसम्बन्धमात्रश्रवणात् ।
ग. गां गां प्रति प्रतिगु ।

1 Ad. Ms., reads अपाकरणं मातृभ्यः पृथक्करणम्.
2 B, and P. Mss., read षट्कुम्भी.
3 स्तम्बं for स्तम्बः B, and P. Mss.
4. P. Ms., reads इत्युपलभ्यते.
5 Ad. Ms., reads एकयत्नेन.
१ देवो वस्सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया इन्द्राय(महेन्द्राय) देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशꣳसः ( तै. सं. १.१.१.१ )

इन्द्रं निगमेषूपलक्षयेदिन्द्रयाजिनो महेन्द्रं महेन्द्रयाजिनः ॥ ७ ॥

निगमा मन्त्राः । उपलक्षणं क्षेपः ॥ ७ ॥

"शुद्धा अपस्सुप्रपाणे पिबन्तीश्शतमिन्द्राय शरदो दुहानाः । रुद्रस्य हेतिः परि वो वृणक्तु" इति प्रस्थिता अनुमन्त्रयते ॥ ८ ॥

"[क]इन्द्राय शरद" इति नाऽत्र महेन्द्र उपलक्षणीयः, वर्तमानप्रयोगो यस्मादुच्यते, तदनुमन्त्रणम् । तदभिसन्धाय वचनं [1]तन्मुखेनैव ॥ ८ ॥

"ध्रुवा अस्मिन् गोपतौ स्यात बह्वीः" इति यजमानस्य गृहानभिपर्यावर्तते ॥ ९ ॥

[2]गृहानभिमुखः पर्यावर्तते ॥ ९ ॥

"यजमानस्य पशून् पाहि" इत्यग्निष्ठेऽनस्यग्न्यागारे वा पुरस्तात् प्रतीचीं शाखामुपगूहति पश्चात्प्राचीं वा ॥ १० ॥

अग्न्यगारे यत्तिष्ठति निर्वपणार्थमनः तत् अग्निष्ठम् । अग्नीनामगारं अग्न्यगारम् । पुरस्तादनसोऽग्न्यगारस्य वा पुरस्तात्प्रतीचीं प्रत्य-

क. सोमयाजिनः संवत्सरानन्तरप्रयोगेऽपि 'शतमिन्द्राय' इत्येव पाठादिति भावः । यस्मात् 'शतं शरदो दुहानाः' इति वर्तमानप्रयोगः तस्मादसमवेतार्थत्वादनूह इति । मतमिदं खण्डयति रुद्रदत्तः । [see आप. श्रौ. P. 155 L. 13 An. ed..]

1 B. and P. Mss., omit तन्मुखेनैव.

2 B. and P. Mss., read यजमानस्य गृहान्.

गग्रां [1]अपरतो वा प्रागग्रां उपगूहति अप्रकाशं करोति । मूलतो निधानं संस्कारो [2]गोप्रस्थापने [3]कृतार्थायाः । अतः [क]पशौ निवृत्तिः ॥१०॥

**यो वा अध्वर्योर्गृहान् वेद गृहवान् भवति । आचतुर्थात्कर्मणोऽभिसमीक्षेतेदं करिष्यामीदं करिष्यामीति । एते वा अध्वर्योर्गृहाः । य एवं वेद गृहवान् भवतीति विज्ञायते ॥११॥**

इत्यापस्तम्बश्रौतसूत्रे प्रथमप्रश्ने द्वितीया कण्डिका ॥ २ ॥

अध्वर्युः अध्वरस्य नेता । तस्य यो वा यजमानो [4]गृहान् वेद कर्माणि तस्याऽपि गृहा भवन्तीति फलस्तुतिः, कर्माङ्गत्वात् ज्ञानस्य । न ह्युभयं कुर्यात् क्रतूप[5]कारं फलं चाऽन्तरेण वचनम् । यानि त्वनिबद्धानि सूत्रकारेण, यथा-" यो वै सप्तदश " मित्येवमादीनि, तान्यपि याजमानानि फलस्तुतेरनियतानि । समीक्षणमध्वर्योः स्वकर्मणां ध्यानम् । प्रणयनं कृत्वाऽग्नीनन्वाधास्ये । ततः शाखाहरणं, ततो वत्सापाकरणं [6]करिष्यामीत्येवं चतुर्णां चतुर्णाम् । इष्टिपशुबन्धसोमेष्वेतत् [7]ध्यानमेव कर्माणि पदार्था अध्वर्योर्गृहा इति । यत्राऽविकृतं ब्राह्मणमुच्चारयति, तत्र विज्ञायत इत्याह । उक्तं चेति [8]पदार्थप्रमाणकं कर्म उचितपदमध्वरवाचीति ॥ ११ ॥

**इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते प्रथमप्रश्ने प्रथमः पटलः ॥**

क. तत्र वत्सापाकरणस्याभावेन तदुपयुक्तशाखासंस्कारस्याऽप्यभावादिति ।

1 B 2, omits अपरतो वा प्रागग्राम्.

2 B. Mss. reads गोः कालने.

3 B. and P Mss. read कृतार्थायाश्शाखायाः, तस्मात्पशौ निवृत्तिः

4 B. and P. Mss., read तस्य इमान् गृहान्.

5 B. Ms., has क्रतूपकरणं for क्रतूपकारं.

6 B. Ms., reads करिष्ये.

7 ध्यानमेवेति 'घ' पुस्तके नास्ति ।

8 B. Ms., reads पदार्थब्राह्मणप्रमाणकं कर्म उचितपदमध्वर्युवाचीति.

उत्तरेण गार्हपत्यमसिदोऽश्वपर्शुरनडुत्पर्शुर्वा निहिता ॥ १ ॥

उत्तरेण गार्हपत्यं इत्येनबदूरवाची[1]। अदूरेणोत्तरतो गार्हपत्यस्य। असिदो दात्रकः। पर्शुः पार्श्ववङ्क्रिरश्वस्य[2]। अनो वहतीत्यनड्वान्॥ १ ॥

[१]" देवस्य त्वा सवितुः प्रसव " इत्यासिदमश्वपर्शुं वाऽऽदत्ते तूष्णीमनडुत्पर्शुम् ॥ २ ॥

यदि नोच्येत "तूष्णीमनडुत्पर्शु" मिति, [3]अर्थादानीयेताऽन्येनाऽपि। ततोऽध्वर्युरादद्यादिति विधिः। [क]वाग्यत आदद्यादित्युपदेशः ॥ २ ॥

" यज्ञस्य घोषदसी " ति गार्हपत्यमभिमन्त्र्य " प्रत्युष्टꣳरक्षः प्रत्युष्टा अरातयः" इत्याहवनीये गार्हपत्ये वाऽसिदं प्रतितपति ॥ ३ ॥

अभिमन्त्रणं प्रतितपनार्थम्। [ख]तस्मादाहवनीयस्याऽपि, यदि तस्मिन् तपनं क्रियते। तस्यैव चोत्तरतो निधानम्। गार्हपत्यग्रहणं त्वसिदा-

क. ब्राह्मणे ' देवस्य त्वा सवितुः प्रसव इत्यश्वपर्शुमादत्ते प्रसूत्यै " इति अश्वपर्शावेव मन्त्रनियमात् अर्थादेवाऽनडुत्पर्शौ मन्त्रनिवृत्तेः पुनस्तूष्णींपदोपादानं वाङ्नियमनार्थमित्युपदेशमतमिति।

ख. अत्र रुद्रदत्तो विरुन्धे पक्षद्वयेऽपि गार्हपत्यस्यैवाऽभिमन्त्रणं विदधानः। See P. 10 आप. श्रौ., Vol. I. Calcutta edn.

ग. संस्कारविधिषु सर्वेष्वयमेव नियमः। तत्र हि न संस्कार्यस्वरूपमुद्देश्यम्। स्वरूपे आनर्थक्यप्रसङ्गात्। किन्तु अपूर्वसाधनत्वाकारेणैव तेषामुद्देश्यत्वं वक्तव्यम्। ततश्च वैकल्पिकानामप्यपूर्वसाधनत्वाविशेषात् तत्राऽपि संस्काराणां प्राप्तिः। यथा व्रीहिषु विहिता धर्मा यवेष्वपि, सोमधर्माः पूतीकेष्वपि। न चाऽपूर्वसाधनत्वस्याऽन्यत्राऽपि सत्वात् तत्राऽतिप्रसक्तिरिति वाच्यम्। अनतिप्रसक्तस्यैव धर्मस्योद्देश्यतावच्छेदकत्वकल्पनात्। एतच्च पूर्वमीमांसायां तृतीयाध्याये प्रथमपादे तेषामर्थाधिकरणे (पू. मी., ३. १. ४.) विस्तरश उपपादितं तत एवाऽवगन्तव्यम्।

1 एनप्प्रत्ययोऽदूरवाची इति ग. पु.

2 P. and B2 Mss omit अश्वस्य

3 B2 reads अर्थान्नीयेत and omits अन्येनाऽपि।

१. देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे।

भिमन्त्रणनिवृत्त्यर्थम् । प्रतितपन एव वा विकल्पः । निधानमुत्तरतो गार्हपत्यस्यैव । अभिमन्त्रणञ्चैव हिरण्यकेशिमतात् ॥ ३ ॥

**न पर्शुम् ॥ ४ ॥**

पर्शोस्तपनप्रतिषेधात् वैकल्पिकेष्वेकस्मिन्नपि विधिरुपदिष्टस्सर्वार्थो भवतीति [1]ख्याप्यते ॥ ४ ॥

**[१]"प्रेयमगा" दित्युक्त्वा "उर्वन्तरिक्षमन्विहि" इति प्राचीमुदीचीं वा दिशमभिप्रव्रज्य यतः कुतश्चिद्दर्भमयं बर्हिराहरति ॥ ५ ॥**

स्त्री[2]लिङ्गनिर्देशात् 'प्रेयमगा' दित्यसिदे मन्त्रनिवृत्तिः । 'मानवी हि पर्शुस्स्वधाकृता' [3]इति मन्त्रलिङ्गात् । केचिदनिवृत्तिर्वा, असिदाकृतेरपि मनुना कृतत्वात्, अन्नमयत्वाच्च । द्रव्यस्य [क]गुणो हि लिङ्गम् । अतो न लिङ्गादरः । उभौ गमनार्थौ मन्त्रौ; "यौ गमना" विति वचनात् । 'उक्त्वे' ति [ख]मन्त्रयोरसन्धानार्थम् । अस्माकन्तु 'अथो यदेत-

क. अयमाशयः—मन्त्रे 'इयं मनुना कृता' इति स्त्रीलिङ्गनिर्देशः कृतः । तदनुरोधेन मन्त्रोऽयं पर्शावेव प्रवर्तते । असिदस्य तु पुल्लिङ्गत्वात् न तत्र मन्त्रप्रवृत्तिरिति केषांचिन्मतम् । अन्येषान्तु प्रातिपदिकस्याऽविशेषादुभयत्र प्रवर्तितुं योग्यस्य तद्गुणभूतलिङ्गनुरोधेन पर्शुमात्रे सङ्कोचो न युक्तः । गुणानुरोधेन प्रधानसंकोचस्याऽन्याय्यत्वात् । यथा हि "अदितिः पाशान् प्रमुमोक्तु" इति बहुवचनान्तस्य मन्त्रस्यैकपाशकेऽप्यग्नीषोमीयपशौ प्रवृत्तिः, न तदनुरोधेन बहुपाशके उत्कर्षः, तद्वदिति ।(See पू. मी., ९. ३. ४.)

ख. 'प्रेयमगादुर्वन्तरिक्षमन्विहि' इत्यविच्छेदेन न मन्त्रौ प्रयोक्तव्यौ; किन्तु 'प्रेयमगात्' इति मन्त्रं समग्रमुक्त्वा मध्ये विरम्याऽनन्तरं 'उर्वन्तरिक्षमन्विहि' इति मन्त्रः पठनीय इत्यर्थः ।

1 B. Ms., reads ज्ञाप्यते.

2 B. and P. Mss., read स्त्रीलिङ्गत्वात्.

3 B. Mss., read इति लिङ्गात्.

१. प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे ( तै. सं. १. १.२. १. )

दुक्त्वे' ति [1]गम्यते। "उर्वन्तरिक्षमन्विही" ति प्रत्यायनसङ्गत्या[2] इति। एवं भरद्वाजमतिश्च[क]–"यतः कुतश्चे" ति दिङ्नियमो नाऽस्ति ॥ ५ ॥

[१]"देवानां परिषूतमसि" इति दर्भान् परिषौति ॥६॥

परिषवणं लवनाय परिग्रहः ॥ ६ ॥

"विष्णोः स्तूपोऽसि" इत्यभिप्रेतानामेकं स्तम्बमुत्सृजति ॥ ७ ॥

अभिप्रेताः परिग्रहचिह्नैः परिगृहीताः। अच्छिन्नस्योत्सर्गो बुद्ध्या, 'इदं पशूना 'मिति लिङ्गात् ॥ ७ ॥

एकं वा स्तम्बं परिषूय तं सर्वं दाति ॥ ८ ॥

एकस्तम्बपरिषवणे नोत्सर्गो नाऽभिमर्शनम्–' इदं देवानामि ' ति, असन्देहात्[ख]। यथे ' दमग्ने ' रित्याग्नेये केवले। केचित्तु कुर्वन्ति। हविषोर्युगपदविच्छेदात्सन्देहः। इह त्वसन्दिग्धे क्रियत इति ॥ ८ ॥

" अतिसृष्टो गवां भाग " इति वैकां द्वे तिस्रो वा नाडीरुत्सृजति ॥ ९ ॥

क. " यतः कुतश्च दर्भमयं बर्हिराहरति " ( भा. श्रौ., १. ३. ७ ) इति भरद्वाजः।

ख. यत्र हि सन्देहः, यथा पौर्णमास्यामाग्नेयाग्नीषोमीययोरुभयहविषोर्विभागे, तत्रोभयोरसन्देहार्थं ' इदमग्नेः, इदमग्नीषोमयोः ' इति निर्देश आवश्यकः। यत्र तु सन्देह एव नास्ति, तत्र निर्देशेन न प्रयोजनम्। यथाऽमावास्यायां केवलाग्नेये। अत एव तत्र न निर्देशः। अतश्च प्रकृते एकस्तम्बग्रहणे गृहीतस्य सर्वस्यापि देवतार्थत्वेन सन्देहाभावात् निर्देशो न कर्तव्य इति। केचित्तु अत्रापि कुर्वन्ति। तेषामयमाशयः– ये उत्सृष्टा ( अधिकस्तम्बग्रहणपक्षे) दर्भाः तेषां पश्वर्थत्वनिर्देशात् तदन्येषां गृहीतानां देवतार्थत्वनिश्चयेन सन्देहाभावान्निर्देशस्यावश्यकत्वाभावेऽपि यदा निर्देशो विधीयते तेनावगम्यते निर्देशोऽयमदृष्टार्थ इति। अतश्चैकस्तम्बपरिषवणपक्षेऽपि निर्देशोऽभिमन्त्रणञ्च कर्तव्यमेवेति ॥

1 P. Ms., omits गम्यते.

2 B1 and P. Mss., have प्रत्यायनं गत्वा B2 reads प्रत्यायनाङ्गघात्।

१. देवानां परिषूतमसि वर्षवृद्धमसि ( तै. सं. १. १. २. १. )

नाडी मुष्टिः, शलाका वा ॥ ९ ॥

"इदं देवानाम्" इति परिषूतानभिमृशति, "इदं पशूनाम्" इत्यतिसृष्टान् ॥१०॥

एकस्तम्बपरिषवणे नोत्सृज्यते ॥१०॥

"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बर्हिर्देवसदनमारभे" इति विशाखेषु दर्भानारभते ॥११॥

"देवबर्हिर्मा त्वाऽन्वङ् मा तिर्यक्" इति सव्यहस्तेन संयच्छति ॥१२॥

संयच्छति [1]गृह्णाति सव्येन हस्तेन ॥ ११, १२ ॥

"पर्व ते राध्यास"मित्यसिदमधिनिदधाति ॥१३॥

'यत्परुषि दिन 'मिति लिङ्गात् । पर्वण्यधिनिदधाति ॥ १३ ॥

"आच्छेत्ता ते मारिष" मित्याच्छिनत्ति । सन्नखं मुष्टिं लुनाति, स प्रस्तरः ॥१४॥

कुल्मिमात्रोऽरत्निः, प्रादेशः, ऊर्वस्थि, जान्वस्थि, स्रुग्दण्ड इति वा तिर्यक्प्रमाणानि ॥१५॥

इति प्रथमप्रश्ने तृतीया कण्डिका ॥

कुल्मिः गोपुच्छः, गोग्रासो वा । अरत्निः [2]अन्तस्थौल्यं । द्वादशाङ्गुलविस्तारः प्रादेशः सामर्थ्यात् । ऊरोरस्थि ऊर्वस्थि । जानोरस्थि जान्वस्थि । [3]स्रुचो दण्डः स्रुग्दण्डः इति तिर्यक्प्रमाणानि स्थौल्यस्य, न तु दीर्घत्वस्य ॥ १४, १५ ॥

1 B2. An. and Ad. Mss. omit गृह्णाति.
2 B. and P. Mss. read अन्तरस्थौल्यं.
3 An. and Ad. Mss., read स्रुचि दण्ड,

"पृथिव्यास्सम्पृचः पाहि" इत्यनधो निदधाति ॥१॥

अधः [1]भुवि, न अधः अनधः। उपरिष्टान्निदधाति न भूमौ ॥ १ ॥

अयुजो मुष्टीन् लुनोति, तथा निधनानि ॥ २ ॥

न युजः अयुजः विषमाणि। निधनानि चूडाः। लुनोति लुनाति ॥ २ ॥

तेषां प्रस्तरोऽयुगर्थ इत्येके ॥ ३ ॥

अयुजः प्रस्तरेणेति एके। [2]समा मुष्टयः, निधनानि च, प्रस्तरेण विषमत्वम् ॥ ३ ॥

प्रस्तरे याथाकामी ॥ ४ ॥

यथाऽस्य काम इच्छा, तथा प्रयुङ्क्त इति कर्तुर्याथाकामित्वम्। इह वा प्रस्तरं प्रथममुष्टिं करोति। 'विष्णोःस्तूपोऽसी'ति वा। पूर्वस्माद्भागात् पुरस्तात्प्रस्तरं [3]गृह्णातीति। अन्ये त्वाहुः—प्रकृतेभ्योऽपि परिमाणेभ्योऽन्यत्परिमाणं लभ्यत इति ॥ ४ ॥

यदन्यत् परिषवणादुत्सर्जनाच्च तत् सर्वत्राऽऽवर्त्तते ॥ ५ ॥

प्रस्तरमेव मन्त्रेण दाति तूष्णीमितरदिति वाजसनेयकम् ॥ ६ ॥

सर्वस्य कृत्वा परिषवणम्। प्रस्तर एव मन्त्रेण लूयते। एकस्तम्बपरिषवणेऽप्यपरिगृहीता अपि मन्त्रेण लूयन्ते ॥ ५, ६ ॥

सर्वं लुत्वा "देवबर्हिश्शतवल्शं विरोह" इत्यालवानभिमृशति ॥ ७ ॥

1 भूमिः for भुवि, B. Ms.

2 B. Ms., reads न समा मुष्टयः

3 B2. reads प्रतिगृह्णाति.

"सहस्रवल्शा वि वय"रुहेम" इत्यात्मानम् ॥ ८ ॥

आलवाः सटाच्छेदाः ॥ ७, ८ ॥

"अदित्यै रास्नासी" ति त्रिधातु पञ्चधातु वा शुल्बं करोति ॥ ९ ॥

"अयुपिता योनि" रिति प्रतिदधाति ॥१०॥

'अदित्यै रास्नासी' ति रज्ज्ववयवाभिधानान्मन्त्रावृत्तिः ॥९, १०॥

"अदित्यै रास्नासी" त्युदगग्रं वितत्य "सुसम्भृता त्वा सम्भरामि" इति तस्मिन्निधनानि सम्भृत्य "अलुभिता योनि" रित्युत्तमे निधने प्रस्तरमत्याधाय "इन्द्राण्यै सन्नहनं" इति सन्नह्यति ॥११॥

"पूषा ते ग्रन्थिं ग्रथ्नातु" इति ग्रन्थिं करोति ॥१२॥

'सुसम्भृते' ति च । 'अलुभिते' त्यन्त्यस्य निधनस्योपरिष्टात्प्रस्तरं निदधाति ॥ ११, १२ ॥

"स ते मास्थात्" इति पुरस्तात् प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चात्प्राञ्चं वा ॥१३॥

[1]प्रत्यञ्चं प्रत्यक् क्रियासमाप्तिः ॥ १३ ॥

"आपस्त्वामश्विनौ त्वामृषयस्सप्त मामृजुः । बर्हिस्सूर्यस्य रश्मिभिरुषसां केतुमारभे" इति बर्हिरारभते । "इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे" इत्युद्यच्छति । "बृहस्पतेर्मूर्ध्ना हरामी" ति शीर्षन्नधि निधत्ते ॥१४॥

आरभते आलभते[2] ॥ १४ ॥

इति प्रथमप्रश्ने चतुर्थी कण्डिका ॥

1 B. Ms., reads प्रत्यञ्चं ग्रन्थिं प्रत्यक्

2 P. and B2. Mss. have शिरस्येव निधानम् after आलभते ।

"प्रेयमगात्" "उर्वन्तरिक्षमन्विहि" इति यौ [क]गमनौ तौ प्रत्यायनौ ॥ १ ॥

"अदित्यास्त्वोपस्थे सादयामि" इत्यन्तर्वेदि परिधिदेशेऽनधस्सादयति ॥ २ ॥

अन्तर्वेदिसमीपे यः परिधिदेशो मध्यमस्य पश्चिमे प्रदेशे निदधाति ॥ १, २ ॥

"बर्हिरसि देवङ्गमं" इत्यासन्नमभिमन्त्रयते, "देवङ्गममसि" इत्यनधो निदधाति यथा प्रागुपसादयेत् ॥ ३ ॥

यथोपसादने उत्तरं बर्हिः प्राग्भवति ॥ ३ ॥

"या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । तासां पर्व राध्यासं परिस्तरमाहरन् ॥ अपां मेध्यं यज्ञियꣳसदेवꣳ शिवमस्तु मे । आच्छेत्ता वो मारिषं जीवानि शरदश्शतम् ॥ अपरिमितानां परिमितास्सन्नह्ये सुकृताय कम् । एनो मानिगां कतमच्च नाहं पुनरुत्थाय बहुला भवन्तु" इति परिस्तरणानामधिनिधान्याच्छेदनी सन्नहनीति यथालिङ्गम् ॥ ४ ॥

परिस्तरणानामधिनिधानाच्छेदनसन्नहनानि [1]लिङ्गेषु क्रियन्ते, न मन्त्रान्त [ख]इत्युपदेशः । अथवा [2]यथालिङ्गवचनमनुवादमात्रम् । मन्त्रा-

क. याविमौ मन्त्रौ पूर्वं बर्हिराहरणार्थगमनाङ्गत्वेन विहितौ तावेव मन्त्रौ प्रत्यागमनस्याऽप्यङ्गभूतौ । प्रत्यागमनेऽपि तावेव मन्त्रौ पठेदिति यावत् ।

ख. अधिनिधानी, आच्छेदनी, इति निर्देशक्रमादेव मन्त्रव्यवस्थासिद्धेः यथालिङ्गवचनं मन्त्रान्तैः कर्मादीन् सन्निपातयेत्, ( आप. श्रौ. २४. २. १ ) इति परिभाषासिद्धस्य मन्त्रान्तकर्मानुष्ठानस्याऽपवादार्थमिति । तेन एषु मन्त्रेषु तत्तत्क्रियावाचकपदप्रयोगकाल एव क्रियारम्भ इति उपदेशमतम् ।

1 P. Ms., reads विलिङ्गेषु; B. Ms., यथालिङ्गेषु.

2 P. Ms., and B2 omit यथालिङ्गवचनमनुवादमात्रम् । मन्त्रान्त एव क्रियानुष्ठानम्.

न्त एव क्रियानुष्ठानम् । अन्तरेणाऽपि लिङ्गवचनं यथालिङ्गं विनियोगो भवति । यथा–'अग्नये त्वाऽग्नीषोमाभ्यामित्याह व्यावृत्त्या' इति [1]हविरभिमर्शने ॥ ४ ॥

**खादिरं पालाशं वैकविंशतिदारुमिध्मं करोति ॥ ५ ॥**

वैकल्पिकं भवति अभिन्नं दारु, 'सशकलान् दारूणि वे'ति व्यपदेशात् । एकविंशतिदारुरिध्मः खादिरः पालाशो वा । अतः पुनर्वचनाद्वैभीतक इध्मेऽपि परिधयो वैभीतका एव । अवभृथे च निवृत्तिः [2]सर्वत्रैव ॥ ५ ॥

**त्रयः परिधयः—पलाशकार्ष्मर्यखदिरोदुम्बरबिल्वरोहितकविकङ्कतानां ये वा यज्ञिया वृक्षाः ॥ ६ ॥**

कार्ष्मर्यः [3]श्रीपर्णिका । रोहितको वटाकृतिः ह्रस्वपर्णः । विकङ्कतो [4]गोपर्णः । उक्तानामभावे यज्ञियाः ॥ ६ ॥

**आर्द्राः शुष्का वा सत्वक्काः ॥ ७ ॥**

आर्द्राः शुष्का वेति मिश्रप्रतिषेधार्थः । सह त्वग्भिः सत्वक्काः ॥ ७ ॥

**स्थविष्ठो मध्यमोऽणीयान्द्राघीयान्दक्षिणार्ध्योऽणिष्ठो ह्रसिष्ठ उत्तरार्ध्यः ॥ ८ ॥**

स्थविष्ठः स्थूलतमः मध्यमः परिधिः । मध्याद्दक्षिणस्तनुः । अणीयान् द्राघीयान् दीर्घतमः मध्यमादेव । दक्षिणार्धे भवो दक्षिणार्ध्यः । [5]अणिष्ठः पूर्वाभ्यां तनुः । ह्रसिष्ठः ह्रस्वतमः सर्वेभ्यः । उत्तरार्धे भवः उत्तरार्ध्यः ॥ ८ ॥

1 B2 reads इत्यभिमर्शने ।
2 B2 reads सर्वत्र.
3 P. and B2. Mss. read श्रीपर्णी.
4 B2 reads गोघण्टः ।
5 B. Mss. read अणिष्ठः सर्वेभ्यः ह्रसिष्ठस्सर्वेभ्यः

द्वे आघारसमिधावनूयाजसमिदेकविंशीति ॥ ९ ॥

प्रथमस्येध्ममन्त्रस्याऽनूहः । न च निवृत्तिः काष्ठविवृद्धौ । [क]आख्यानवादादेकविंशतिधाऽवस्थितत्वादग्नेस्सम्भरामीति न[1] काष्ठानाम् । आघारसमिधोराघारार्थत्वात्तदभावे [2]निवृत्तिः । [3]तथाऽनूयाजसमित् । गणनायां द्वे युगपत् क्षिप्येते । एकविंशी चानूयाजसमित् ॥ ९ ॥

समूलानामृते मूलानां वा पूर्ववच्छुल्बं कृत्वोदगग्रं वितत्य ॥

समूलामूलनियमान्मिश्रप्रतिषेधः । एकसरः शुल्ब इत्युपदेशः । अनियमो वा, "एकसराभि"रिति [ख]क्वचिद्विधानात् । उदगग्रं वितत्य, मन्त्रेण करणमुदगग्रस्य ।

"यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन् । ततस्त्वामेकविंशतिधा सम्भरामि सुसम्भृता ॥ त्रीन् परिधीꣳस्तिस्रस्समिधो यज्ञायुरनुसञ्चरान् । उपवेषं मेक्षणं धृष्टिꣳसम्भरामि सुसम्भृते" ति शुल्ब इध्मं सम्भरति ॥१॥

काम्यनैमित्तिकानां नित्यविकारत्वात् "[ग]यत्कृष्णो रूपमि"त्यस्य प्रकृतावूह इति न्यायः । [घ]अनूह [4]आपस्तम्बस्य । बह्वयाज्यादीनां काम्या-

क. अग्निर्देवेभ्यो निलायत, कृष्णो रूपं कृत्वा, स वनस्पतीन् प्राविशत् इति अग्नेः वनस्पतिप्रवेशस्य इतिहासतोऽवगमात् , तस्यैव चाऽनेन मन्त्रेणाऽभिधानात् ( ततस्त्वां वनस्पतिप्रविष्टमग्निं इति ) काष्ठानभिधायकत्वेन काष्ठविवृद्धौ न एकविंशतिधापदस्योहो न वा मन्त्रस्य निवृत्तिः । 'यत् कृष्णो रूपम्' इत्यग्रे वक्ष्यमाणस्येति ।

ख. प्रवर्ग्यपात्राधारभूतसम्राडासन्दीविषयमिदम् । तत्रैव तथा विधानात् ( See आप. श्रौ. १९, ९, ७, ) 'मौञ्जीभी रज्जुभिरेकसराभि'रिति ।

ग. प्रकृतावेव काम्यसामिधेनीविवृद्ध्या काष्ठविवृद्धौ मन्त्रघटकीभूतस्य 'एकविंशतिधा' इत्यस्योहः । प्राकृतस्यापि काम्यसामिधेनीप्रयोगस्य नित्यसामिधेनीप्रयोगविकृतित्वादित्यर्थः ।

घ. द्वितीयपक्ष एव साधीयान् मीमांसान्यायानुसारी च ।

1 B. Mss. read न काष्ठाभिधानं; P. Ms. reads न काष्ठानां निधानं ।
2 P. Ms., has समिधौ for समिधोः and निवर्तेत for निवृत्तिः ।
3 Ibid, तद्वत् for तथा ।
4 Ad. B2. Mss., add उपदेशः ।

नां च [1]प्रधानविकारत्वात् । निवृत्तिस्तु प्रथमस्येध्ममन्त्रस्य । "तूष्णीं [क]कंसं मृन्मयं चे" ति दर्शनात् । काम्येष्वनूहो वा । प्रथमायाः सर्वत्रा-[2]ख्यानवादाभिधानात् । "अग्निर्देवेभ्यो निलायत । कृष्णो रूपं कृत्वा । स वनस्पतीन् प्राविश" दिति तस्याऽभिधानात् । "त्रीन् परिधी" निति द्वितीया यथार्थमूह्यते विकृतौ[ख] । उपवेषादीनि इध्माभिधानानि गौणा[3]र्थानि प्रकृतार्थाभिधानात् । अर्थलक्षण इध्मः, "[ग]वर्षीयानर्थो" दिति लिङ्गात् । तं गणयित्वा युगपत्सम्भरति सर्वम् ॥ १ ॥

"कृष्णोऽस्याखरेष्ठो देव पुरश्चर सध्यासं त्वा" इति सन्नह्यति । पुरस्तात्प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चात्प्राञ्चं वा । अनधो निदधाति ॥ २ ॥

इध्मप्रव्रश्चनानि निदधाति ॥ ३ ॥

'इध्मप्रव्रश्चनानि' छेदनानि । तेषां निधानं [घ]पदार्थगणनायामन्तर्भवतीति ॥ २, ३ ॥

"त्वया वेदिं विविदुः पृथिवीं त्वया यज्ञो जायते विश्वदानिः । अच्छिद्रं यज्ञमन्वेषि विद्वा॰ स्त्वया होता सन्तनोत्यर्धमासान्" इति दर्भाणां वेदं करोति ॥ ४ ॥

क. 'वानस्पत्योऽसि देवेभ्यश्शुन्धस्व' इति काष्ठवाचकवनस्पतिपदघटितस्य मन्त्रस्य चमसप्रणयने विनियुक्तस्य कंसादौ वानस्पत्यत्वाभावेन लोपस्यैव सूत्रकाराभिमतत्वात् प्रकृतेऽपि प्रथममन्त्रस्य लोप इति ।

ख. विकृतौ महापितृयज्ञे । तत्र द्वयोरेव परिध्योर्विधानात् "द्वौ परिधी परिदधाति इति (आप. श्रौ. ८. १४. ६.)

ग. महापितृयज्ञे हविर्बहुत्वे इध्मकाष्ठानां द्राघीयस्त्वमुक्तम्—'वर्षीयानर्थादिध्मो द्राघीयांश्च' (आप. श्रौ. ८. १३. १३.) इति । अतो यावद्दैर्घ्यमपेक्ष्यते तावत् सम्पादनीयमिति ।

घ. 'आचतुर्थात् कर्मणोऽभिसमीक्षेत' इति ह्युक्तं पूर्वम् (आप. श्रौ. १. २. ११) तदनुरोधेन चत्वारः पदार्था उत्तरोत्तरं अवेक्षणीया भवन्ति । तत्राऽस्य गणनायामन्तर्भाव इति ।

1 B. and P. Mss. read अप्रधानविकारत्वात् ।

2 B. and P. Mss., read आख्यानवादात् B2 reads आख्यानाभिधानात् ।

3 Ad. Ms., reads गौणानि.

^क^यज्ञसन्तानस्यार्थवादत्वाद्विकृतावपि मन्त्रेण वेदकरणम् । जात्येकत्वात् दर्शपूर्णमासस्थो वा अर्धमाससन्तान उच्यते ॥ ४ ॥

**वत्सज्ञुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य त्रिवृच्छिरसं ब्रह्मवर्चसकामस्य ॥ ५ ॥**

'वत्सज्ञुः' वत्सजानुतुल्यः । मूतकार्यो मूतवत् क्रियते यत्र धान्यं निधीयते [1]तत् । त्रिवृदेकशिराः त्रिवृच्छिराः, त्रीणि शिरांसि इति केचित् । कामाभावेऽप्येता [2]एव आकृतयः; अकामस्याऽन्यस्याऽविधानात्, भरद्वाजमताच्च ॥ ५ ॥

**शुल्बात् प्रादेशे परिवास्य वेदपरिवासनानि निदधाति ॥ ६ ॥**

द्विप्रादेशो बैलकेरिध्मः, अन्यस्य त्वर्थलक्षणः । वेदपरिवासनानि सर्वाण्येव वेदाग्राणि ॥ ६ ॥

**अन्तर्वेदि शाखायाः पलाशान्यसर्वाणि प्रशात्य मूलतश्शाखां परिवास्योपवेषं करोति "उपवेषोऽसि यज्ञाय त्वां परिवेषमधारयन् । इन्द्राय हविः कृण्वन्तः शिवश्शग्मो भवासि नः" इति ॥ ७ ॥**

वेदं कृत्वा प्रशातनम[ग]मावास्यायाम् । पलाशान्यल्पान्यवशेषयति । परिवासनं कुर्वन् पर्णवल्कं [3]पातयति । "इन्द्राय हविः कृण्वन्त" इत्यनूहः, आख्यान[घ]वादात् ॥ ७ ॥

क. मन्त्रे 'त्वया होता सन्तनोत्यर्धमासान्' इति अर्धमासयोः परस्परं सन्धानं वेदेन क्रियते इत्युच्यते । स चाऽर्थवादः । अतोऽसमवेतार्थः । अतश्च विकृतावपि मन्त्रः प्रवर्तत एवेति ।

ख. विवृतमिदं पूर्वत्र ।

ग. प्रशातनं पातनम् । परिवासनं छेदनम् । पर्णवल्कः पलाशकाष्ठत्वक् ।

घ. इन्द्राय हविः कुर्वन्त ऋत्विजः त्वां परिवेषमकुर्वन् इत्युपवेषस्तुतिरेव । अतोऽसमवेतार्थत्वात् देवतान्तरयुक्तायां विकृतावविकारेणैव मन्त्रप्रयोग इति ।

1 B. Mss. omits तत् ।
2 Ad. Ms., omits एव.
3 B. Ms., has प्रशातयति for पातयति.

" तृतीयस्यै दिवो गायत्रिया सोम आभृतः । सोमपीथाय सन्नयितुं वकलमन्तरमाददे " इति परिवासनशकलमादाय प्रज्ञातं निदधाति ॥ ८ ॥

त्रिवृद्दर्भमयं पवित्रं कृत्वा " वसूनां पवित्रमसी "ति शाखायां शिथिलमवसजति । मूले मूलान्यग्रेऽग्राणि न ग्रन्थिं करोति ॥ ९ ॥

पवित्रं प्रादेशमात्रम्, [क]मन्त्रलिङ्गात् । अवसजति लगयति[1] ॥८,९॥

"त्रिवृत्पलाशे दर्भे इयान् प्रादेशसम्मितः । यज्ञे पवित्रं पोतृतमं पयो हव्यं करोतु मे । इमौ प्राणापानौ यज्ञस्याङ्गानि सर्वशः । आप्याययन्तौ सञ्चरतां पवित्रे हव्यशोधने " इति क्रियमाणे यजमानोऽनुमन्त्रयते ॥ १० ॥

त्रिवृत्पलाश[ख] इति वैलिङ्ग्यात्[2] शमीशाखायां लोप ऋचः । [ग]अनिवृत्तिर्वा, पवित्राभिधानात् । क्रियमाणे शाखायामवसज्यमाने[3] । त्रिवृत्पलाश इति त्रिवृतं[घ], " इमौ प्राणापानौ " इति सशाखस्याऽनुमन्त्रणम् ॥ १० ॥

क. मन्त्रे "इयान् प्रादेशसम्मित" इति कथनात् ।

ख. 'त्रिवृत्पलाशे' इति पलाशे (पत्रे) त्रिवृत्त्वमुच्यते । तत् पलाशशाखायामेव, न शमीशाखायाम् । इदमेव विलिङ्गत्वम् ।

ग. त्रिवृत्त्वं पवित्रस्यैव विशेषणम्, न पलाशस्य । अतः पलाशानभिधानात् शमीशाखायामपि मन्त्रः प्रवर्तत एवेति ।

घ. त्रिवृतं पवित्रमनुमन्त्रयते ' इमौ ' इति द्विवचननिर्देशात् शाखासहितस्य पवित्रस्यानुमन्त्रणमिति ।

1 P. Ms., reads लङ्गयति.

2 B2 no reads वैलिङ्गयात् ।

3 P. Ms., reads आसज्यमाने.

**समूहन्त्यग्न्यगारमुपलिम्पन्त्यायतनानि अलङ्कुर्वाते यजमानः पत्नी च ॥ ११ ॥**

समूहन्तीति बहुवचनचोदिते यजमानः पत्नी च प्रवृत्ते [क]कर्मादौ। ऋत्विजो वा बहवः कुर्वन्ति। अलङ्करणमायतनानाम्। यजमानः पत्नी च ॥ ११ ॥

**नवे सान्नाय्यकुम्भ्यौ यावच्छर्करं गोमयेनाऽनुलिप्ते भवतः ॥ १२ ॥**

इति प्रथमप्रश्ने षष्ठी कण्डिका ॥

नवत्वं कुम्भ्योः [ख]प्रथमे प्रयोगे। [1]गोमयानुलेपनं तु सर्वत्र। यावच्छर्करं यावच्छर्करया कुम्भ्या [ग]बुध्नमालिप्तं कुलालेन ॥ १२॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते प्रथमप्रश्ने द्वितीयः पटलः॥ २॥

( पिण्डपितृयज्ञः )

**अमावास्यायां यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञं कुरुतेऽपराह्णे ॥ १ ॥**

यदहश्चन्द्रमसं न पश्यन्तीति वचनाददृष्टचन्द्रायां प्रतिपद्यपराह्णे। [घ]' मासि पितृभ्यः क्रियत ' इति लिङ्गात् ॥ १ ॥

क. कर्मारम्भसमये ऋत्विजामभावाद्बहुवचनं पत्नीयजमानमात्रपरम्। अथवा द्वीतीयदिने ऋत्विजां शास्त्रीयवरणेऽपि प्रथमदिने लौकिकवरणेन वृता ऋत्विज एव समूहनं कुर्युरिति। समूहनं सम्मार्जनम्।

ख. See रुद्रदत्तीय on Apastamba P. 24. L. 1 Vol. I. A. S. ed.

ग. बुध्नं अधोभागो येन प्रतितिष्ठति कुम्भी।

घ. मासि पूर्णे सति पितृभ्यः पिंडपितृयज्ञं क्रियते इति ब्राह्मणवाक्यार्थः। स कालः प्रतिपद्यपराह्ण एवेति।

1 B. Ms., has आलेपनं तु सर्वत्र for गोमयानुलेपनं.

**अधिवृक्षसूर्ये वा पिण्डपितृयज्ञेन चरन्ति ॥ २ ॥**

अधिवृक्षसूर्ये यत्र वृक्षाणामुपर्येवोष्मा, न पृथिव्याम् । [1]पिण्डैः साध्यः पितृयज्ञः पिण्डपितृयज्ञः । पिण्डपितृयज्ञेन यक्ष्य इत्युक्त्वा "विद्युदसि"। आरम्भात्प्रभृति प्राचीनावीती, [क]अन्यत्र वचनात्[2] । न विद्युदसि दर्विहोमेष्वित्युपदेशः । नाहवनीयप्रणयनमर्थाभावात् । चरन्तीति बहुवचनं पत्न्या सह ॥ २ ॥

**"अपां मेध्यं यज्ञियं" इति समूलं सकृदाच्छिन्नं बर्हिराहरति सकृदाच्छिन्नानि वा तृणान्युपमूलं दिनानि ॥ ३ ॥**

'अपां मेध्यं यज्ञियं' इति [3]आच्छेदनं, लिङ्गात्[ख] ॥ ३ ॥

**दक्षिणाप्रागग्रैर्दर्भैर्दक्षिणमग्निं परिस्तीर्य दक्षिणतः पश्चाद्वा दर्भान्त्संस्तीर्य दक्षिणाप्राञ्च्येकैकशः पिण्डपितृयज्ञपात्राणि प्रयुनक्ति—स्फ्यं, मेक्षणं, कृष्णाजिनं, उलूखलं, मुसलं, शूर्पं, आज्यस्थालीं, चरुस्थालीं, येन चाऽन्येनाऽर्थी भवति ॥ ४ ॥**

दक्षिणाप्रागग्राः [4]कोणाग्राः । उपचारोऽपि दक्षिणापवर्गः । अर्थी भवतीति [5]उपस्तरणाभिघारणार्था दर्वी मृण्मयं च निर्वापणार्थम् ॥ ४ ॥

**दक्षिणतः प्रागीषं व्रीहिमच्छकटमवस्थितं भवति । अध्वर्युरुपवीती स्थालीमेकपवित्रेणाऽन्तर्धाय तया दक्षि-**

क. यत्रोपवीतमपेक्षितं तत्र 'अध्वर्युरुपवीती' इति विशिष्योपवीतविधानात् तदतिरिक्ते स्थले सामान्यतः प्रचीनावीतं पित्र्यत्वात्प्राप्तमिति ।

ख. मन्त्रे 'आच्छेत्ता वः' इत्याच्छेदनलिङ्गात् मन्त्रेणाऽऽच्छेदनमेव कर्तव्यम् । आहरणन्तु तूष्णीमिति ।

1 An. and Ad. Ms., read पिण्डैः साध्यः पिण्डपितृयज्ञः

2 B2. reads अपां मेध्यमित्याच्छेदनम्, लिङ्गात् after वचनात्

3 An. reads आच्छेदनलिङ्गात्

4 कोणाग्राः omitted in B. Ms.

5 B. Ms., reads उपस्तरणार्था.

पातः शकटादधि निर्वपत्युत्तरतो वा तां पूरयित्वा निमार्ष्टि। मृन्मये निर्वपति " पितृभ्यो वो जुष्टं निर्वपामि " इति, तूष्णीं वा, अपरेणाऽन्वाहार्यपचनं प्रत्यगुदग्ग्रीवे कृष्णाजिन उलूखले प्रतिष्ठिते दक्षिणाप्राची तिष्ठन्ती पत्न्यवहन्ति परापावमाविवेकम् ॥ ५ ॥

सकृत्फलीकरोति, दक्षिणाग्नौ जीवतण्डुलं श्रपयाति ॥ ६ ॥

दक्षिणाप्राचीति [क]कोणदेशवादः। पत्न्याश्च। अनाहिताग्नेरप्यध्वर्युः, अध्वर्युग्रहणात्। परापावं [1]परापूय। अविवेकं [ख]अविविच्य ॥ ५, ६ ॥

" अपहता असुरा रक्षा सि पिशाचा वेदिषद " इत्यन्तरा गार्हपत्यान्वाहार्यपचनौ दक्षिणपूर्वेण वाऽन्वाहार्यपचनं दक्षिणाप्राचीमेकस्फ्यां पराचीं वेदिमुद्धत्य " शुन्धन्तां पितर" इत्यद्भिरवोक्ष्य " आयन्तु पितरो मनोजवस " इत्यभिमन्त्र्य " सकृदाच्छिन्नं बर्हिरूर्णामृदु स्योनं पितृभ्यस्त्वा भराम्यहम्। अस्मिन्त्सीदन्तु मे पितरः सोम्याः पितामहाः प्रपितामहाश्चाऽनुगैः सह " इति सकृदाच्छिन्नेन बर्हिषा वेदिंस्तृणाति ॥ ७ ॥

इति प्रथमप्रश्ने सप्तमी कण्डिका ॥

[2]जीवपितुरपि वेदिः, अपिण्डार्थत्वात्। न कशिप्वादीनि विहितानि ॥ ७ ॥

क. अग्निकोणमुखेति यावत्।

ख. सर्वेष्वादर्शपुस्तकेषु ' अविविच्य ' इत्येवोपलभ्यते पाठः।

1 B2 repeats परापूय and अविविच्य।

2 An. P. and Ad. Mss., read जीवपितुर्वेदिः

उत्पूतेन नवनीतेनाऽनुत्पूतेन वा सर्पिषा स्थालापाकमभिघार्यैकस्फ्यायां मेक्षणमासाद्य स्थालीपाकमासादयति दक्षिणतः [१]कशिपूपबर्हणमाञ्जनमभ्यञ्जनमुदकुम्भमित्येकैकश आसादयति ॥ १ ॥

[1]उदकार्थः कुम्भः उदकुम्भः ॥ १ ॥

अध्वर्युरुपवीती दक्षिणं जान्वाच्य मेक्षण उपस्तीर्य तेनाऽवदायाऽभिघार्य "सोमाय पितृपीताय स्वधा नम" इति दक्षिणाग्नौ जुहोति ॥ २ ॥

अध्वर्युः अध्वरस्य नेता[क] कथं स्यादिति पुनरध्वर्युग्रहणम् । नम[ख]स्कारः प्रदा[2]नार्थः । 'नमस्[ग]कारो हि पितॄणां' इति लिङ्गात् ॥ २ ॥

"यमायाङ्गिरस्वते पितृमते स्वधा नमः" इति द्वितीयाम् । "अग्नये कव्यवाहनाय स्वधा नमः" इति तृतीयाम् । ये मेक्षणे तण्डुलास्तान् हुत्वा तूष्णीं मेक्षणमादधाति ॥ ३ ॥

न यमाय जुहोतीत्येके ॥ ४ ॥

यमायाऽप्युपस्तरणाभिघारणे, उभयशेषात्कव्यवाहनस्य । मेक्षणाधानं वाग्यतेनैव । एतदन्तं [3]जीवपितृकस्य ॥ ३, ४ ॥

क. अध्वरस्य दर्शपूर्णमासयोर्योऽध्वर्युः स एवाऽत्राप्यध्वर्युर्भवेदित्येतदर्थमिति ।

ख. "सोमाय पितृमते स्वधा नमः" इति मन्त्रे श्रुतो नमश्शब्दो देवतोद्देश्यकहविःप्रदानार्थः स्वाहादिशब्दवदित्यर्थः ।

ग. चातुर्मास्यान्तर्गतमहापितृयज्ञे श्रुतमिदम् ।

1 Ad. and B. Mss., read उदकार्थ उदकुम्भः

2 Ad. Ms., reads प्रदानार्थम् An. reads प्रदानार्थकः

3 B. Mss., reads जीवपितुः

१. कशिपु; तूलपूरिता शय्या । उपबर्हणं उपधानम् (शिरस आधारश्शयानस्य) आञ्जनं कज्जलम् अभ्यञ्जनं शरीरोद्वर्तनार्थतैलादि ।

अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात्प्रणुदात्वस्मात् ॥

ये देवाः पितरो ये च मानुषाः, ये गर्भे मम्रुरुत ये परास्ताः । य उद्धता उत ये निखातास्ते सम्यञ्च इह मादयन्ताम् ॥

ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात्प्रणुदात्वस्मात् ॥

ये ज्ञातीनां प्रतिरूपाः पितॄन् मायया असुराः प्रविष्टाः । परापुरो निपुरो ये भरन्त्यग्ने तानस्मात्प्रणुदस्व लोकादिति दक्षिणाग्नेरेकोल्मुकं धूपायद्धरति ॥ ५ ॥

दक्षिणपूर्वमवान्तरदेशं सकृत्स्फ्येनोल्लिख्य “ उदीरतामवर ” इत्यद्भिरवोक्ष्योल्लिखितान्ते निदधाति ॥ ६ ॥

यजमानोऽत ऊर्ध्वं प्राचीनावीती कर्माणि करोति । “ मार्जयन्तां मम पितरो मार्जयन्तां मम पितामहा मार्जयन्तां मम प्रपितामहा ” इत्येकस्फ्यायां त्रीनुदकाञ्जलीन्निनयति प्रसव्यं वा त्रिः परिषिञ्चति, त्रीनुदपात्रान् वाजसनेयिनः समामनन्ति ॥ ७ ॥

इति प्रथमप्रश्ने अष्टमी कण्डिका ॥

सव्यं जान्वाच्याऽवाचीनपाणिः सकृदाच्छिन्ने बर्हिषि दक्षिणापवर्गान् पिण्डान् ददाति “[1]एतत्ते ततासौ ये च

१. एतत्ते ततासौ ये च त्वामनु, एतत्ते पितामहासौ ये च त्वामनु, एतत्ते प्रपितामहासौ ये च त्वामनु । अत्र मन्त्रेषु असौ पदस्थाने तत्तन्नाम गृह्णीयात् ।

त्वामनु " इत्येतैः प्रतिमन्त्रं, तूष्णीं चतुर्थम्, स कृताकृतः, प्रपितामहप्रभृतीन् वा ॥ १ ॥

अत ऊर्ध्वं प्राचीनावीती यजमानः । [1]प्राचीनावीतीति वचनं श्रौतप्रायश्चित्तार्थम् । 'जीवन्तः पितर' इति विग्रहात् जीवपितामहो जीवप्रपितामहोऽपि होमान्तम् । प्रपितामहप्रभृतीनपि दक्षिणापवर्गान् । अञ्जलयोऽपि प्रपितामहप्रभृति ॥ १ ॥

नानामगृहीतं गच्छति । यदि बन्धु[क] न विद्यात् " स्वधा पितृभ्यः पृथिविषद्भ्य " इति प्रथमं पिण्डं दद्यात् " स्वधा पितृभ्योऽन्तरिक्षसद्भ्य " इति द्वितीयम् । "स्वधा पितृभ्यो दिविषद्भ्य" इति तृतीयम् । यदि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेत् ॥ २ ॥

यदि जीवपिता न दद्यादा होमात्कृत्वा विरमेत् ॥ ३ ॥

एतद्वां ततौ देवदत्तयज्ञदत्तौ ये च युवामनु । एवं पितामहप्रपितामहावपि ॥ २, ३ ॥

" यन्मे माता प्रममाद यच्चचारानुव्रतम् । तन्मे रेतः पिता वृङ्क्तां माभुरन्योऽवपद्यताम् । पितृभ्यः स्वधाविभ्यः स्वधा नमः, पितामहेभ्यः स्वधाविभ्यः स्वधा नमः, प्रपितामहेभ्यः स्वधाविभ्यः स्वधा नमः " इत्युपस्थाय " अत्र पितरो यथाभागं मन्दध्वं " इत्युक्त्वा [ख]पराङावर्तते ॥ ४ ॥

क. बन्धु नाम । क्षेत्री बीजी चेति द्वौ पितरौ यस्य स द्विपिता ।

ख. दक्षिणामुखः पिण्डं दत्वा उदङ्मुखः पर्यावर्तेत तत् पराङावर्तनम् ।

1 An. and Ad. Ms., read प्राचीनावीतिवचनम् ।

[क]ओष्मणो व्यावृत उपास्ते "अमीमदन्त पितरः सोम्या" इति व्यावृत्त ऊष्मण्यभिपर्यावर्ततेऽव्यावृत्ते वा ॥ ५ ॥

"पिता वृक्कां" इत्यनूहः[ख], सर्वपितॄणामभिधानात् ॥ ४, ५ ॥

यः स्थाल्यां शेषस्तमवजिघ्रति—ये समानाः समनसः पितरो यमराज्ये। तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पतां वीरं धत्त पितर इति। आमयाविना प्राश्योऽन्नाद्यकामेन प्राश्यो योऽलमन्नाद्याय सन्नाऽव्यात्तेन वा प्राश्यः ॥ ६ ॥

पूर्ववदेकस्फ्यायां त्रीनुदकाञ्जलीनुपनिनीयाऽऽञ्जनाभ्यञ्जने वासश्च त्रिरनुपिण्डं ददाति। "आङ्क्ष्व ततासावाङ्क्ष्व पितामहासावाङ्क्ष्व प्रपितामहासौ" इत्याञ्जनम्। एवमभ्यञ्जनमभ्यङ्क्ष्वेति मन्त्रं सन्नमति ॥ ७ ॥

योऽलमन्नाद्यायेति नैमित्तिकं, यस्य नास्ति भोजनशक्तिः[1] सत्यन्ने, भोजनकामो वा ॥ ६, ७ ॥

[ग]यदि बन्धु न विद्यात् "आञ्जतां मम पितरः, आञ्जतां मम पितामहाः, आञ्जतां मम प्रपितामहा"

क. औष्ण्यवशात् पिण्डेषु यावदूष्मा निर्गच्छति तावत्पर्यन्तमुपासीतोदङ्मुख एव। निवृत्ते चोष्मणि पुनः पर्यावर्तेत इति।

ख. अत्र "यन्मे माता" इति प्रथमेन मन्त्रेण पितुरेवोपस्थानं, पितामहप्रपितामहयोस्तूहो मन्त्रस्येत्यभिप्रैति रुद्रदत्तः॥ See P. 33 आप. श्रौ., Vol. I cal, edn.

ग. अत्र बन्धुशब्दस्थाने नामानि इति पाठः स्वीकृतो रुद्रदत्तेन।

1 P. Ms., reads भोजने शक्तिः

इत्याञ्जनम् । एवमभ्यञ्जन"मभ्यञ्जता"मिति मन्त्रं सन्नमति ॥ ८ ॥

इति प्रथमप्रश्ने नवमी कण्डिका ॥

यदि बन्धु न विद्यादिति नामानि बान्धवानाम् ॥ ८ ॥

क"एतानि वः पितरो वासांस्यतो नोऽन्यत्पितरो मा योष्ट" ति वाससो दशां छित्त्वा निदधात्यूर्णास्तुकां वा पूर्वे वयसि । उत्तर आयुषि स्वं लोम ॥ १ ॥

वीतोष्मसु पिण्डेषु "नमो वः पितरो रसाय" इति नमस्काराञ्जपति "गृहान्नः पितरो दत्त सदो वः पितरो देष्मे" ति पितॄनुपातिष्ठते ॥ २ ॥

'एतानि वः पितर' इति सर्वत्रोहेनोपदेशः[1] ॥ १, २ ॥

"ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन्" इत्युदकं निनयति ॥ ३ ॥

१" मनो न्वाहुवामह" इति मनस्वतीभिरुपतिष्ठते "उत्तिष्ठत पितरः प्रेतशूरा यमस्य पन्थामनुवेता पुराणम् । धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधां देवतासु"

क. आर्षपाठस्य यथाश्रुतस्य क्वचिदप्यनुपयोगात् । बौधायनस्तूहितमेव मन्त्रं पठति । ऊर्णानामविलोम्नां कलाप ऊर्णास्तुका । उत्तरमायुः पञ्चाशत उपरि ॥

1 B. Ms., reads: सर्वत्रैतेनैवोपदेशः

१ मनो न्वाहुवामहे नाराशंसेन स्तोमेन पितॄणाञ्च मन्मभिः । (तै. सं. १.८.५.२) इति प्रथमा आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ इति द्वितीया । पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातं सचेमहि ॥ इति तृतीया ।

इति पितॄनुत्थापयति "[1]परेत पितरः सोम्या" इति प्रवाहण्या पितॄन् प्रवाहयति ॥ ४ ॥

उदकुम्भस्थस्य निनयनम् ॥ ३, ४ ॥

"[2]प्रजापते न त्वदेतानि" इति यज्ञोपवीती गार्हपत्यदेशं गच्छति "[3]यदन्तरिक्षं" इति पङ्क्त्या गार्हपत्यमुपातिष्ठते ॥ ५ ॥

गार्हपत्यप्रभृत्युत्तरं[1] यज्ञोपवीत्येव। नेत्युपदेशः। उपस्थानान्तमिति न्यायः ॥ ५ ॥

"अपां त्वौषधीनाꣳ रसं प्राशयामि भूतकृतं गर्भं धत्स्वे" ति मध्यमं पिण्डं पत्न्यै प्रयच्छति।

"आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथेह पुरुषोऽसदि" ति तं पत्नी प्राश्नाति। पुमांसं ह जानुका भवतीति विज्ञायते ॥ ६ ॥

"ये सजाताः समनसो जीवा जीवेषु मामकाः। तेषाꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शतꣳसमा" इत्यवशिष्टानामेकं यजमानः प्राश्नाति, न वा ॥

1 An reads: उत्तरं कर्म.

१ परेत पितरस्सोम्या गम्भीरैः पथिभिः पूर्व्यैः। अथा पितॄन्त्सुविदत्राँ अपीत यमेन ये सधमादं मदन्ति ॥ (तै. सं. १.८.५.२)

२ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳस्याम पतयो रयीणाम् ॥ (तै. सं. ३.२.५.६)

३ यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम।
अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् ॥
(तै. सं. १.८.५.३)

स्थाल्यां पिण्डान् समवधाय "ये समाना" इति सकृदाच्छिन्नमग्नौ प्रहरति ॥

"अभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा । प्रादाः पितृभ्यः स्वधया ते अक्षन् प्रजानन्नग्ने पुनरप्येहि देवानि" त्येकोल्मुकं प्रत्यपिसृज्य प्रोक्ष्य पात्राणि द्वन्द्वमभ्युदाहरति ॥

सन्तिष्ठते पिण्डपितृयज्ञः ॥ ७ ॥

अपः पिण्डानभ्यवहरेद्ब्राह्मणं वा प्राशयेत् ॥ ८ ॥

सोऽयमेवंविहित एवाऽनाहिताग्नेः ॥ ९ ॥

[1]पत्नीबहुत्वे पिण्डविभागो मन्त्रावृत्तिश्च ॥ ६-९ ॥

औपासने श्रपणधर्मा होमश्च । अतिप्रणीते वा जुहुयात् । यस्मिञ्जुहुयात्तमुपतिष्ठेत ॥ १० ॥

श्रपणधर्मा इति बहुवचननिर्देशादतिप्रणीते[क] होममात्रमेव । उभयोरपि परिस्तरणम् ॥ १० ॥

तत्र गार्हपत्यशब्दो लुप्यते संस्कारप्रतिषेधात् ॥ ११ ॥

इति प्रथमप्रश्ने दशमी कण्डिका ॥

[2]गार्हपत्यशब्दस्य लोपः । संस्काराणामाधानिकानां अभावात् । तस्मिन्नग्नौ संस्कारनिमित्तत्वाच्च गार्हपत्यशब्दस्य । कथं पुनस्तेषामभावः ? 'अप्यनाहिताग्निना कार्य' इति ते हि प्रतिषिध्यन्ते । यदि क्रियेरन्नाहिताग्निरेव स्यात् । अतस्संस्कारप्रतिषेधात् गार्हपत्यशब्दस्य लोपः ॥ ११ ॥

आपस्तम्बश्रौतसूत्रभाष्ये प्रथमप्रश्ने तृतीयः पटलः समाप्तः ॥

क. औपासनात् अग्निं गृहीत्वा दक्षिणाप्राञ्चं नीत्वा स्थाप्यते सोऽतिप्रणीतः ।

1 Ad. Ms., reads: पत्नीबहुत्वेऽपि.
2 B2. reads गार्हपत्यशब्दलोपः

( सान्नाय्यारम्भः )

अमावास्यायां रात्र्यां स्वयं यजमानो यवाग्वाऽग्निहोत्रं जुहोत्यग्निहोत्रोच्छेषणमातञ्चनार्थं निदधाति ॥ १ ॥

स्वयंविधानादेधोदकादीनामाहरणं[1] यजमान एव करोति । '[क]पर्वणि वा ' इति सिद्धत्वाद्यजमानस्याऽपर्वण्यपि सान्नाय्यविकारे [2]स्वयंहोमः । यथा राजसूये ऐन्द्रे दधनि । यवागूहोमो [ख]दधिप्रयुक्तः । अतो न भवत्यसन्नयतः ॥ १ ॥

नास्यैतां रात्रिं कुमाराश्चन पयसो लभन्ते ॥ २ ॥

कुमारा अपि [3]पयो न लभन्ते । सर्वा दुह्यन्ते, यथा[ग] वा सम्भवति कुम्भी ॥ २ ॥

हुते सायमग्निहोत्रे सायं दोहं दोहयति ॥ ३ ॥

' सायं दोह ' इति वचनाद्दोहश्च सायंकाल एव ॥ ३ ॥

अग्नीन् परिस्तृणात्यग्निमग्नी वा ॥ ४ ॥

परिस्तरणं न[4] सभ्यावसथ्ययोरकिञ्चित्करत्वादित्युपदेशः । [घ]अग्नीनित्यविशेषवचनात् कार्याभावेऽपि संस्कृतानामेवाऽग्न्यन्तरसाहचर्यम् ।

क. अहरहर्यजमानः स्वयमग्निहोत्रं जुहुयात् । ' पर्वणि वा ' ( आप. श्रौ., ६. १९. १४, १९. ) इत्यनेनैव वक्ष्यमाणेन पर्वणि यजमानस्य स्वयमग्निहोत्रानुष्ठाने सिद्धे, अत्र पुनरपि स्वयंग्रहणं सान्नाय्यविकृतिषु सर्वत्र पर्वणि स्वयं होमविधानार्थम् । यथा—राजसूयान्तर्गतेन्द्रतुरीयहविर्मध्यगते ' ऐन्द्रं दधि ' ( तै. सं. १. ८. ७. ) इत्यत्र यजमान एव कुर्यात् इति ।

ख. तस्यैव शेषेण दध्यर्थमातञ्चनविधानादिति ।

ग. शाखान्तरे कुम्भीपर्याप्तमेव पयो दोग्धव्यमित्युक्तम् । तदनुसारेणेदम् ।

घ. सत्यपि द्वयोरेव कार्ये त्रयाणामप्यग्नीनां परिस्तरणं कर्तव्यम् । यथा पशैकादशिन्यां पशुबन्धनरूपकार्याभावेऽपि उपशये यूपसंस्काराः क्रियन्ते । अत्र अग्नीनिति बहुवचनं कपिञ्जलाधिकरणन्यायेन त्रित्व एव पर्यवस्यति इत्युपदेशमते वेदितव्यम् ।

1 P. Ms., reads स्वयंविधानादिध्मोदकादीनाम्.
2 An. reads होमनियमार्थम्.
3 An and B2 omit पयः
4 An, and Ad, Ms., omit न.

ऐकादशिन्यामुपशयवदिति[1][2] । अग्निं यस्मिन् श्रपयति । अग्नी गार्हपत्याहवनीयौ[क] । अधिश्रयणमाहवनीयेऽपि लभ्यते[ख], 'हवींषि' इति बहुवचननिर्देशात् ॥ ४ ॥

सान्नाय्यपात्राणि प्रक्षाल्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति । कुम्भीं शाखापवित्रमभिधानीं निदाने दारुपात्रं दोहनमयस्पात्रं दारुपात्रं वा पिधानार्थमग्निहोत्रहवणीमुपवेषञ्च ॥ ५ ॥

अभिधानी रज्जुः वत्सबन्धनार्था । निदाने नियोगौ[ग] ॥ ५ ॥

समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रे पवित्रे कुरुते ॥ ६ ॥

समौ पृथुत्वेन ॥ ६ ॥

"पवित्रे स्थो वैष्णवी वायुर्वां मनसा पुनातु" इति तृणं काष्ठं वाऽन्तर्धाय छिनत्ति न नखेन । "विष्णोर्मनसा पूते स्थ" इत्यद्भिरनुमृज्य पवित्रान्तर्हितायामग्निहोत्रहवण्यामप आनीयोदगग्राभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति

क. 'उपस्तीर्यः पूर्वश्चाग्निरपरश्च' ( तै. सं. १. ६. ७. २ ) इति श्रुतिबलात् पूर्वापरयोराहवनीयगार्हपत्ययोरुपस्तरणमिति ।

ख. 'आहवनीये गार्हपत्ये वा हवींषि श्रपयति' ( आप. श्रौ. १.२२.१. ) इत्यग्रे वक्ष्यते । तत्र दर्शपूर्णमासयोः श्रपणीयौ पुरोडाशौ द्वावेव, न तृतीयोऽस्ति । अतस्तत्रत्यं हवींषीति बहुवचनं आज्याधिश्रयणमादायैवोपपादनीयम् । अतश्च यद्यपि सूत्रकारेणाग्रे कण्ठतो गार्हपत्याधिश्रयणमेवोक्तम् ( See आप. श्रौ. २.६.३ ) तथाप्यत्रत्यबहुवचनबलात् आहवनीयेऽपि आज्याधिश्रयणमर्थात् प्राप्नोतीति ।

ग. दोहनकाले गोः पादबन्धनार्था रज्जुः नियोगः । शाखया युक्तं पवित्रं शाखापवित्रं दुग्धशोधनार्थम् ।

1 An, reads यथा ऐकादशिन्यामुपशययूपवदिति न्यायः.

2 B2 reads इति न्यायः ।

" देवो वः सवितोत्पुनातु " इति प्रथमम् । " अच्छिद्रेण पवित्रेण " इति द्वितीयम् । " वसोः सूर्यस्य रश्मिभिः " इति तृतीयम् ॥ ७ ॥

[१] " आपो देवीरग्रे पुव " इत्यभिमन्त्र्योत्तानानि पात्राणि पर्यावर्त्य [२] " शुन्धध्वं दैव्याय कर्मणे " इति त्रिः प्रोक्ष्य प्रज्ञाते पवित्रे निदधाति । "आपो देवीः शुद्धा-स्थेमा पात्राणि शुन्धत । उपातङ्क्याय देवानां पर्णव-ल्कमुत शुन्धत । देवेन सवित्रोत्पूता वसोः सूर्यस्य रश्मिभिः । गां दोहपवित्रे रज्जुँ सर्वा पात्राणि शुन्धत " इति प्रोक्ष्यमाणान्यभिमन्त्र्य "एता आचरन्ति मधुमद्दुहानाः प्रजावतीर्यशसो विश्वरूपाः । बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गाव " इति गा आयतीः प्रतीक्षते यजमानः ॥ ८ ॥

इति प्रथमप्रश्ने एकादशी कण्डिका ॥

**प्रोक्ष्यमाणाभिमन्त्रणं न प्रातर्दोहे, " उपा[क]तङ्क्याय देवानां " इति लिङ्गात् । आयतीरग्निसमीपम्[1] । अतः प्रातर्दोहेऽपि[2] । न तूपदेशः । गोप्रस्थापनादि शाखोपस्थापनान्तं न प्रातर्दोहे । [ख]वत्सापाकरणस्य पुनर्विधानात् ॥ ७, ८ ॥**

क. अनेन पर्णवल्कशोधनप्रतिपादकेन लिङ्गेन प्रोक्षणस्याऽस्य आतञ्चनोपयुक्तपात्रार्थत्वाव-गमात् प्रातर्दोहे चाऽऽतञ्चनाभावात्तत्र न तस्य प्रवृत्तिरिति । यजमानगृहमागच्छन्तीनां गवामभिमन्त्रणार्थत्वात् प्रातस्तदभावान्नेत्युपदेशः ।

ख. प्रातर्दोहार्थमर्थादेव वत्सापाकरणस्य प्राप्तिसंभवे पुनर्विधानं गृहमेधीयाज्यभागन्यायेन तदतिरिक्तान् गोप्रस्थापनादीन् पदार्थान् परिसञ्चष्ट इति भावः ।

1 P. Ms., reads आयतीः अग्निसमीपं गताः । प्रातर्दोहेऽपि wrongly
2 B. Ms., omits अपि.

१ आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रम-वृणीध्वं वृत्रतूर्ये प्रोक्षितास्स्थ । ( तै. सं. १.१.४.१. )
२ शुन्धध्वं दैव्याय कर्मणे देवयज्यायै ॥

"निष्टप्तꣳरक्षो निष्टप्तोऽघशꣳस" इति गार्हपत्ये सान्नाय्यपात्राणि प्रतितप्य "धृष्टिरसि ब्रह्म यच्छ" इत्युपवेषमादाय "निरूढं जन्यं भयं निरूढास्सेना अभीत्वरी"रिति गार्हपत्यादुदीचोऽङ्गारान्निरूह्य "मातरिश्वनो घर्मोऽसी"ति तेषु कुम्भीमधिश्रयति ॥ १ ॥

अङ्गारनिरूहणं न बहिरायतनात्[क], [ख]गार्हपत्ये श्रपयतीति वचनात् ॥ १ ॥

अग्रस्रꣳसाय यज्ञस्योखे उपदधाम्यहम् । पशुभिः संनीतं बिभृतामिन्द्राय शृतं दधीति वा ॥ २ ॥

"महेन्द्राय शृतं दधी"ति नायं प्रातर्दोहे [1]दधित्वाभावात् । एकस्यामप्युखायां द्विवचनम्[ग], व्यत्ययो[2] वा । [3]सर्वासां दोहनियमादुभे अपि लभ्येते ॥ २ ॥

"भृगूणामङ्गिरसां तपसा तप्यस्व" इति प्रदक्षिणमङ्गारैः पर्यूह्य [१]"वसूनां पवित्रमसि" इति तस्यां प्रागग्रꣳशाखापवित्रमत्यादधात्युदक् प्रातः । कुम्भीमन्वारभ्य वाचं यच्छति पवित्रं वा धारयन्नास्ते ॥ ३ ॥

"अदित्यै रास्नासी"त्यभिधानीमादत्ते । "त्रयस्त्रिꣳशोऽसि तन्तूनां पवित्रेण सहाऽऽगहि । शिवेयꣳरज्जुरभिधा-

क. आयतनं गार्हपत्याद्यग्निनिधानार्थं कुण्डम् ।

ख. कुण्डावच्छिन्नाग्नेरेव गार्हपत्यादिपदवाच्यत्वादिति ।

ग. 'उखे उपदधाम्यहं' इति द्विवचनम् । एकस्मिन्, द्वयोर्युगपत्प्रयोगाभावादिति । अतः केवले दधनि पयसि वाऽनूहेनैव प्रयोगो भाष्यकृत्सम्मतः । रुद्रदत्तस्तु तत्रोहमिच्छति । 'नास्यैता'मिति सर्वासां गवां दोहविधानात् यदा एका न पर्याप्ता भवति, तदा द्वयोरपि प्राप्तिरिति ।

1 Ad. Ms., and B2. omit दधित्वाभावात्

2 Not found व्यत्ययो वा in P. and B. Mss.

3 B2 reads सान्नाय्यदोहनियमात् ।

१. वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम् । (तै. सं. १. १. ३. १.)

न्यघ्नियामुपसेवतां" इत्यादीयमानामभिमन्त्रयते यजमानः। "पूषाऽसि" इति वत्समभिदधाति[क] ॥ ४ ॥

अभिधान्यादानादि दोग्धुः। वत्सबन्धनमभिधान्या। लिङ्गस्य[ख] चाऽविवक्षा ॥ ३, ४ ॥

'उपसृष्टां मे प्रब्रूता'दिति सम्प्रेष्यति, 'उपसृजामी-'त्यामन्त्रयते। "अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः" इति वत्समुपसृजति 'गां चोपसृष्टां विहारं चाऽन्तरेण मा सञ्चारिष्टे'ति सम्प्रेष्यति ॥ ५ ॥

'उपसृष्टामि'ति सम्प्रैषोऽध्वर्योः। 'उपसृजामी'ति दोग्धुः। वत्सोपसर्गोऽर्धर्चेन। द्वितीयेन निदानेन गोः पादे वत्सबन्धनम्। यदा[1] प्राप्नुयात्तदा[ग] 'गाश्चोपसृष्टां' इति अध्वर्युर्यजमानायाऽऽचष्टे ॥ ५ ॥

यद्युपसृष्टां व्यवेया'त्सान्नाय्यं मा विलोपी'ति ब्रूयात्। 'उपसीदामी'त्यामन्त्रयते। "अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः। ऊर्जं पयः पिन्वमाना घृतञ्च जीवो जीवन्तीरुप वः सदेय"मिति दोग्धोपसीदति। न शूद्रो दुह्यात् ह्यादा। दारुपात्रे दोग्धि ॥ ६ ॥

उपसीदामीति दोग्धा। दारुपात्रे[2] दोग्धि। अदारुपात्रेण[घ] दोग्धि शूद्रः ॥ ६ ॥

क. अभिदधाति बध्नाति।

ख. 'त्रयस्त्रिंशोऽसि तन्तूनाम्' इति पुल्लिङ्गस्याविवक्षेति।

ग. यदा वत्सः स्तनपानार्थं गां प्राप्नोति, तदेति।

घ. यदा शूद्रो दुह्यात् तदा अदारुपात्र एव दुह्यादिति। अयं भावः—प्रथमतो 'न दारुपात्रेण दोग्धि' इति दारुपात्रं दोहने निषिध्य, ततः "काममेष दारुपात्रेण दोग्धि" इति पुनर्दारुपात्रप्रतिप्रसवात् अनन्तरं 'शूद्र एव न दुह्यात्' इति निषेधात् शूद्रनिषेधो दारुपात्रमात्रे पर्यवस्यति। अतश्शूद्रो यदि दोग्धि तदा अदारुपात्रे दोग्धीति।

1 P. and B. Mss., read यदोपसृष्टा प्रसूता तदा.

2 Ad. Ms., omits दारुपात्रे दोग्धि।

उपसृष्टां दुह्यमानां धाराघोषं च यजमानोऽनुमन्त्रयते । "अयक्ष्मा वः प्रजया संसृजामी"त्युपसृष्टाम् । द्यौश्चेमं यज्ञं पृथिवी च सन्दुहाताम् धाता सोमेन सह वातेन वायुः । यजमानाय द्रविणं दधात्वि"ति दुह्यमानाम् ॥ ७ ॥

इति प्रथमप्रश्ने द्वादशी कण्डिका ॥

"उत्सं दुहन्ति कलशं चतुर्बिलमिडां देवीं मधुमतीꣳ सुवर्विदम् । तदिन्द्राग्नी जिन्वतꣳ सूनृतावत्तद्यजमानममृतत्वे दधातु" इति धाराघोषम् ॥ १ ॥

दुग्ध्वा हरति । तं पृच्छति-कामधुक्षः प्र णो ब्रूहीन्द्राय हविरिन्द्रियमि"त्यमू"मिति निर्दिशति "यस्यां देवानां मनुष्याणां पयो हित" मिति प्रत्याह ॥ २ ॥

'महेन्द्राय हविरिन्द्रियं, अमूं' इति दोग्धुः ॥ १, २ ॥

सा विश्वायुरित्यनुमन्त्रयते ॥ ३ ॥

'सा विश्वायु'रित्यध्वर्योः ॥ ३ ॥

"देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुपुवा" इति कुम्भ्यां तिरः पवित्रमासिञ्चति "हुतस्तोको हुतो द्रप्स" इति विप्रुषोऽनुमन्त्रयते । एव द्वितीयां तृतीयाञ्च दोहयति "सा विश्वव्यचा" इति द्वितीयामनुमन्त्रयते । "सा विश्वकर्मा" इति तृतीयाम् ॥ ४ ॥

तिस्रो दोहयित्वा "बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः । वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतां"

इति त्रिःवाचं विसृज्यानन्वारभ्य तूष्णीमुत्तरा दोहयित्वा ॥ ५ ॥

'बहु दुग्धि महेन्द्राय' इति धोक्ष्यमाणगवार्थम्। अतो न गृष्ट्याम्[क] ॥ ४, ५ ॥

दोहनेऽप आनीय [1]" संपृच्यध्वमृतावरीः " इति कुम्भ्या२ँ संक्षालनमानीयाविष्यन्दयन् सुश्रृतं करोति " दृ२ँह गा दृ२ँह गोपातिं मा वो यज्ञपती रिषत् " इति। वर्त्म कुर्वन् प्रागुद्वासयत्युदक्प्रागुदग्वा। एकस्या द्वयोस्तिसृणां वैकाहे द्व्यहे त्र्यहे वा पुरस्तादुपवसथादातञ्चनार्थं दोहयित्वा सन्ततमभिदुहन्त्योपवसथात्तेन शीतबुध्नमातनक्ति ॥ ६ ॥

"सोमेन त्वाऽऽतनच्मीन्द्राय दधी"ति दध्ना ॥ ७ ॥

" महेन्द्राय दधि " इति महेन्द्रयाजिनः ॥ ६, ७ ॥

" यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्ततिमनुसन्तनोमि " इत्यग्निहोत्रोच्छेषणमन्ववधाय " अयं पयः सोमं कृत्वा स्वां योनिमपिगच्छतु। पर्णवल्कः पवित्र२ँ सौम्यः सोमाद्धि निर्मितः " इति परिवासनशकलमन्ववदधाति ॥८॥

इति प्रथमप्रश्ने त्रयोदशी कण्डिका ॥

[ख]ओषधयः पूतीकाः क्वलास्तण्डुलाः पर्णवल्काः इत्यातञ्चनविकल्पाः ॥ १ ॥

क. " वायवे निष्ट्यायै गृष्टयै दुग्धं " ( तै. ब्रा., ३. १. ४. २३. ) इति नक्षत्रेष्टिमध्ये स्वातीनक्षत्रदेवताकेष्टौ गृष्टेर्दुग्धं हविष्ट्वेन विहितम्। सकृत्प्रसूता गौर्गृष्टिरित्युच्यते। तत्र गवान्तरदोहाभावात् " बहु दुग्धि " इति मन्त्रो नास्तीति।

ख. ओषधयः व्रीह्यादयः, पूतीकाः लताविशेषाः ये सोमलताप्रतिनिधित्वेन यागे उपयुज्यन्ते। क्वलाः बदरीफलानि। पर्णवल्काः पलाशशकलानि।

१. संपृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये। ( तै. सं. १. १. ३. २. )

उच्छेषणाभावे तण्डुलैरातङ्क्यात्तण्डुलाभावे ओषधीभिः ॥ २ ॥

"आपो हविष्षु जागृत यथा देवेषु जाग्रथ । एवमस्मिन् यज्ञे यजमानाय जागृत" इत्ययस्पात्रे दारुपात्रे वाऽप आनीय "अदस्तमसि विष्णवे त्वा यज्ञायापिदधाम्यहम् । अद्भिररिक्तेन पात्रेण याः पूताः परिशेरत" इति तेनापिदधाति। "अमृन्मयं देवपात्रं यज्ञस्यायुषि प्रयुज्यताम् । तिरः पवित्रमतिनीता आपो धारय मातिगु"रिति यजमानो जपति। यदि मृन्मयेनापिदध्यात्तृणं काष्ठं वाऽपिधानेऽनुप्रविध्येत् ॥ ३ ॥

अमृन्मयमिति न मृन्मये। [क]मृन्मयेऽपीत्युपदेशः ॥ १-३ ॥

"विष्णो हव्यꣳरक्षस्व" इत्यनधो निदधाति ॥ ४ ॥

"इमौ पर्णञ्च दर्भञ्च देवानाꣳहव्यशोधनौ । प्रातर्वेषाय गोपाय विष्णो हव्यꣳहि रक्षसि" इति प्रज्ञातं शाखापवित्रं निदधाति ॥ ५ ॥

शाखापवित्रनिधानं प्रातर्दोहार्थम् । अतो न केवले दधनि । [1]पयसि तु केवलेऽपि भवति । 'पर्णवल्कमुत' इति 'पर्णवल्कः पवित्रम्' इति 'इमौ पर्णम्' इति च शमीशाखायां निवृत्तिः, पवित्राभिधानात् । [ख]अनिवृत्तिरुपदेशः ॥ ४, ५ ॥

तयैव शाखया दर्भैर्वा सायन्दोहवत्प्रातर्दोहाय वत्सानपाकरोति ॥ ६ ॥ उपधाय कपालानि सायं दोह-

क. अपां धारणमेव मन्त्रेण मुख्यतया प्रकाश्यते । अतोऽमृन्मयमिति पात्रमात्रोपलक्षणम् । अतो मृन्मयेऽपि प्रवर्तत एव मन्त्र इति ।

ख. पवित्रपर्णयोरुभयोरपि प्राधान्येन प्रकाशनात् पवित्राभिधानमाश्रित्य मन्त्रप्रवृत्तिरिति ।

1 An, Ad. Ms. read पयसि केवले.

**वत्प्रातर्दोहं दोहयति । आतञ्चनापिधाने निधानञ्च निवर्तते ॥ ७ ॥**

[1]उपधाय कपालानि [क]प्रातर्दोहं कृत्वाऽङ्गाराध्यूहनमित्युपदेशः । कृत्वाऽङ्गाराध्यूहनमिति न्यायः ॥ ६, ७ ॥

**नासोमयाजी सन्नयेत्, सन्नयेद्वा ॥ ८ ॥**

असन्नयतः [ख]सान्नाय्यविकारा अपि न भवन्ति । अग्नीषोमीयविकाराश्चाऽसोमयाजिनः । वचनात्तु भवन्ति । यथा [ग]पशुचातुर्मास्यानि च क्रमात् ॥ ८ ॥

**नागतश्रीर्महेन्द्रं यजेत । "त्रयो वै गतश्रिय" इत्युक्तम् ॥ ९ ॥**

शुश्रुवान् त्रिवेदः[2]–" ऋचः सामानि यजूंषि सा हि श्रीः " [घ]इति । सुतवांश्च । ग्रामणीर्महत्तरो वैश्यानाम् । राजन्योऽभिषिक्तस्य क्षत्रियस्य[3] पुत्रः । " यो वै स्वां देवतामतियजत " इत्यगतश्रियो वादः । व्रातपतीं कृत्वा इन्द्रयाजिन इन्द्रो महेन्द्रो वा । इतरस्य महेन्द्र[ङ] एव ॥ ९ ॥

क. कपालोपधानानन्तरं प्रातर्दोहं कृत्वा ततः कपालोपरि अङ्गाराध्यूहनम् ? उतोपधानानन्तरमङ्गाराध्यूहनं कृत्वा ततो दोहनम् ? इति सन्देहे सूत्रेऽत्रोपधाय दोहयतीत्यानन्तर्याभिधानात् उपधानानन्तरं प्रातर्दोहः ततोऽध्यूहनमित्येकः पक्षः । अध्यूहनस्य कपालसंस्कारत्वात् कृत एवाध्यूहने उपधानक्रियासमाप्तेरध्यूहनानन्तरमेव प्रातर्दोह इति न्यायपक्षः ।

ख. ' सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत् ' इति जैमिनीयेन पाञ्चमिकन्यायेन प्रकृत्यनुष्ठानोत्तरमेव विकृत्यनुष्ठानस्य कर्तव्यतया प्रकृत्यनुष्ठानेऽनधिकृतस्य तद्विकृतिष्वपि नाऽधिकार इति । एवमेवाऽग्नीषोमीयपुरोडाशेऽपि द्रष्टव्यम् ।

ग. असोमयाजिनोऽपि पशुचातुर्मास्यानि वचनाद्भवन्ति । सूत्रकारेण दर्शपूर्णमासानन्तरं सोमयागात्पूर्वमेव पाठात्तथैव कर्तव्यप्रतीतेरिति ।

घ. खण्डितोऽयमभिप्रायो रुद्रदत्तेन ' तन्न विस्रब्धव्यं ' इत्यादिना । See P. 50 Vol. I. Apa., A. S. B. edn. एकवेदविदोऽपि गतश्रीत्वं तदभिमतम् ।

ङ. ' तेषां महेन्द्रो देवता ' इति श्रुतिबलादेवेति ।

1 Ibid, उपधाय कपालानि प्रातर्दोहाऽकृत्वाऽङ्गाराध्यूहनम् । कृत्वाङ्गाराध्यूहनमित्युपदेशः ॥

2 An, P, and B. Mss., read त्रिवेदी.

3 An. and Ad. Ms., omit क्षत्रियस्य.

और्वो गौतमो भारद्वाजस्तेऽनन्तरं सोमेज्याया महेन्द्रं यजेरन् ॥ १० ॥

यो वा कश्चित् ॥ ११ ॥

[क]और्वादयो [1]यद्यकृतसोमा इन्द्रयाजिन एव ॥ १०, ११ ॥

ततः सम्प्रेष्यति—"परिस्तृणीत परिधत्ताग्निं परिहितोऽग्निर्यजमानं भुनक्तु । अपां रस ओषधीनां सुवर्णो निष्का इमे यजमानस्य सन्तु कामदुघा अमुत्रामुष्मिन् लोक" इति ॥ १२ ॥

परिस्तरणीमेतामेके समामनन्ति ॥ १३ ॥

प्रत्यग्नि मन्त्रावृत्तिर्यदि परिस्तरणी ॥ १२, १३ ॥

उदगग्रैः प्रागग्रैश्च दर्भैरग्नीन् परिस्तृणात्युदगग्राः पश्चात्पुरस्ताच्च ॥ १४ ॥

[2]न क्रमवचनार्थः पश्चात्पुरस्ताच्चेति । द्वयोरपि परिस्तरणम् । तथा चाऽऽहवनीयादिः । 'उपस्तीर्यः पूर्वश्चाऽग्निरपरश्चे'ति ॥ १४ ॥

एतत्कृत्वोपवसति ॥ १५ ॥

एतत्कृत्वा [ख]ग्राम्येभ्य उपवसति । [ग]आरण्यानश्नाति ॥ १५ ॥

अग्न्यन्वाधानं वत्सापाकरणमिध्माबर्हिर्वेदो वेदिः । प्रागुत्तरात्परिग्राहात्कृत्वा श्वोभूत आप्यलेपं निनीयोत्तरं

क. और्वादिभिन्नानामगतश्रीणामपि सोमादूर्ध्वं महेन्द्र एव यष्टव्यदेवतेति ।

ख. तिलाः, माषाः, व्रीहयः, यवाः, प्रियङ्गवः, अणवः, गोधूमा इति सप्त ग्राम्यधान्यानि ।

ग. वेणवः, श्यामाकाः, नीवाराः, जर्तिलाः, गवीधुकाः, मर्कटाः, गार्मुताः, कुलत्था वेति सप्त आरण्यधान्यानि । ( See आपश्रौ., १६. ९. १३. )

1 Ad. & B. 2 Mss. omit यदि.

2 An, B2 reads न क्रमार्थः; B, Ms. reads only क्रमार्थः

**परिग्राह परिगृह्णीयात्परिस्तरणं च पूर्वेद्युरमावास्यायां, पौर्णमास्यां त्वन्वाधानपरिस्तरणोपवासाः ॥ १६ ॥**

वेदिः परिस्तरणञ्च [1]पूर्वस्मिन्नहन्यमावास्यायाम् । वेदिसंस्कारश्च प्रागुत्तरात् परिग्राहात्कृत्वाऽऽस्यलेपं निनीयोत्तरं परिग्रहणम् । अन्वाधानादि पौर्णमास्यां पूर्वेद्युः, श्वोभूत इध्माबर्हिर्वेदो वेदिश्च । उपदेशस्तु 'पूर्वेद्युरिध्माबर्हिः करोति' इत्यविशेषवचनात्, '[क]पुरा बर्हिष आहर्तोः' इति लिङ्गाच्चैतान्यपि लभ्यन्ते । पूर्वेद्युरिति पूर्वेद्युर्वेदिकरणे न सादनप्रोक्षणे, स्फ्यवेदयोः [a]पाठक्रमबाधात् ॥ १६ ॥

**सद्यो वा सद्यस्कालायां सर्वं क्रियते ॥ १७ ॥**

इति प्रथमप्रश्ने चतुर्दशी कण्डिका ।

सद्यस्काला [2]अव्यावृत्त आदित्ये यस्यां पर्वकालः । सद्यः समानेऽहनि[ख] [3]यस्यां पौर्णमास्यां पौर्णमासी प्रतिपच्च तस्याम् । सद्यो वैतानि क्रियन्तेऽन्यन्वाधानादीनि । पूर्वेद्युर्वा सर्वञ्च क्रियते । [4]शंयुवन्तादयः खण्डसंस्थाः । उपदेशः सद्यो वेति सर्वस्य विकल्पः । सद्यस्काला विकृतिरिति । तस्यां तु सर्वं क्रियते कपालविमो[5]चनान्तम् ॥ १७ ॥

**इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते प्रथमप्रश्ने चतुर्थः पटलः समाप्तः ॥**

क. 'पुरा बर्हिष आहर्तोर्जायापती अश्नीत' ( आप. श्र., ४. २. ३. ) इति सूत्रकारेण याजमानप्रकरणे पौर्णमास्यामेव बर्हिराहरणात्पूर्वं दम्पत्योरशनविधानात् तद्बलेनेध्माबर्हिराहरणमपि पौर्णमास्यामेव कर्तव्यतया लभ्यत इति ।

ख. अयमर्थः खण्डितो रुद्रदत्तेन–' तत्र मृग्यं प्रमाणमि'ति । ( See आप. श्रौ., Vol I P. 54, A. S. B. edn.)

a B2 reads विरोधात्.

1 An, reads: पूर्वेद्युरमावास्यायां.

2 B. and P. Mss., read अपर्यावृत्ते:

3 Ad, Ms., reads यस्यां पौर्णमासी प्रतिपच्च.

4 B, and P. Mss., read न लभ्यन्ते शंय्वन्तादयः

5 B, and P. Mss., read विमोकान्तम्.

अथ प्रथमप्रश्ने पञ्चमः पटलः

उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयति प्रागुदयादमावास्यायाः ॥ १ ॥

तन्त्रमित्यङ्गानां समुदायः । [1]तत्प्रक्रमयति आरभते [2]कर्तुम् ॥ १ ॥

चत्वार ऋत्विजः ॥ २ ॥

संख्याग्रहणात् बहुवचनचोदितासु चतुर्णामृत्विजां [3]बहुत्वम् । यथा [क]हविश्शेषभक्षणे ॥ २ ॥

पूर्ववदग्नीन् परिस्तृणाति यद्यपरिस्तीर्णा भवन्ति ॥३॥

यद्यपरिस्तीर्णा भवन्तीति सद्यस्कालायाम् । अ[4]सद्यस्कालायामपि प्रमादे प्रायश्चित्तं न भवतीत्यु[ख]पदेशः ॥ ३ ॥

"कर्मणे वां देवेभ्यः शकेयं" इति हस्ताववनिज्य "यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्तत्यै स्तृणामि सन्तत्यै त्वा यज्ञस्य" इति गार्हपत्यात्प्रक्रम्य सन्ततामुलपराजीस्स्तृणात्याहवनीयात्तूष्णीं दक्षिणामुत्तराञ्च ॥४॥

क. 'ऋत्विजो हविश्शेषान् भक्षयन्ति' इत्यादौ चतुर्णां अध्वर्युहोतृब्रह्माग्नीध्राणां ग्रहणमिति ।

ख. यद्यपरिस्तीर्णा इति सद्यस्कालासद्यस्कालाविभागेनाऽत्रापि कालविधानात् पूर्वमपरिस्तरणकृतो दोषो नास्तीति मतमुपदेशस्य ।

1 An, reads तं.

2 An, omits कर्तुम.

3 Ad, Ms., adds नान्यबहुत्वं.

4 Ad, Ms., omits असद्यस्कालायां,

"कर्मणे [क]वां" इति लिङ्गात् [ख]अशक्तौ हस्तद्वयेन कर्म। उलपाः उशीरतृणानि, लूनतृणानि वा। तेषां [1]स्तरणं सन्ततम्॥ ४॥

**दक्षिणेनाऽऽहवनीयं ब्रह्मयजमानयोरासने प्रकल्पयति पूर्वं ब्रह्मणोऽपरं यजमानस्य ॥ ५ ॥**

**उत्तरेण गार्हपत्याहवनीयौ दर्भान् सꣳस्तीर्य [ग]द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति दशापराणि दश पूर्वाणि ॥ ६ ॥**

[घ]द्वन्द्वं[2] प्रकरणधर्मः। केचित् द्वन्द्वत्वं दशसंख्यायामेवेच्छन्ति, संख्याया [3]अर्थवत्त्वाय। एककार्याणां बहूनामप्येकत्वम्। यथा कपालानां दशत्वसंख्या स्फ्येन सह [4]कृत्वा॥ ५, ६॥

**स्फ्यश्च कपालानि चेति यथा समाम्नातमपराणि प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पूर्वाणि ॥ ७ ॥**

क. वामिति द्विवचनप्रयोगादुभयोः हस्तयोरपि कर्मसम्बन्धित्वावगमादिति।

ख. शक्तौ सत्यां दक्षिणाचारतानियमः। अशक्तावुभाभ्यामिति भावः।

ग. स्फ्यः अष्टौ कपालानि चेत्येकं द्वन्द्वम्। अग्निहोत्रहवणी शूर्पञ्चेत्येकं द्वन्द्वम्। कृष्णाजिनं च शम्या च इत्येकम्। उलूखलं च मुसलञ्चेत्येकम्। दृषच्चोपला चेत्येकम्। एवं पञ्च द्वन्द्वानि दश पात्राणि। इमानि गार्हपत्यसमीपेऽपरदेशे प्रयोक्तव्यानि। दश पूर्वाणि पञ्च द्वन्द्वानि सूत्रोक्तान्येव। पौर्वापर्यं पात्राणामेव परस्परम्।

घ. एवं च सर्वेषां पात्राणां साद्यमानानामन्वाहार्यस्थाल्यादीनामपि द्वन्द्वता सम्पादनीयेति। सूत्रे 'द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति' इत्युक्त्वाऽनन्तरमेव "दश पूर्वाणि' इत्यभिधानात् द्वन्द्वतायास्तत्रैवान्वयौचित्यात्। अन्यथा संख्यानियमानर्थक्यादिति केषाञ्चिन्मतमिति॥

1. B. Ms., reads: संस्तरणं.
2. B[1], Ms., reads द्वन्द्वशब्दः संख्यायां
3. B[2] Ms. reads अर्थवत्वलाभाय।
4. B, Ms., omits कृत्वा.

स्फ्योऽस्याकृतिः । भिन्नस्य घटादेः कपालानि । अभिन्नान्यपि [क]रौहिणकपालवदेके । शूर्पमैषीकम्, '[ख]वर्षवृद्धा इषीका' इति लिङ्गात् । वैणवं नलमयं वेति [ग]भारद्वाजः । शम्या युगे या क्षिप्यते । दृषत् पट्टकः, श्लक्ष्णीकरणिका । उपला पोतिका । 'अपराणि' 'पूर्वाणि' इति दिङ्नियमः परस्परं प्रति ॥ ७ ॥

तान्युत्तरेणावशिष्टान्यन्वाहार्यस्थालीमश्मानमुपवेषं प्रातर्दोहपात्राणीति ॥ ८ ॥

प्रणीताप्रणयनं पात्रसंसादनात्पूर्वमेके समामनन्ति ॥ ९ ॥

[1]प्रणयनं चेत् पूर्वं पात्रसंसादनात् ब्रह्मयजमानयोरासने कृत्वा ब्रह्मवरणम् । प्रणयनम् । ततो दर्भास्तरणादि ॥ ८, ९ ॥

खादिरः स्रुवः, पर्णमयी जुहूः, राश्वथ्युपभृ, द्वैकङ्कती ध्रुवे तेषां वा वृक्षाणामेकस्य स्रुचः कारयेद्बाहुमात्र्योऽरत्निमात्र्यो वाऽग्राग्रास्त्वक्तोबिला हंसमुख्यः स्फ्यः शम्या प्राशित्रहरणमिति खादिराणि ॥ १० ॥

[2]अक्षमात्रं स्रुवस्योद्धारः । स्रुगङ्गुल्याकृतिः ।

क. रौहिणकपाले च 'परिमण्डले चोटप्रकारे' (आप. श्रौ., १४-३-१२ ) इति प्रवर्ग्ये विहितयोः रौहिणपुरोडाशार्थयोः कपालयोः अखण्डाकारता तद्वदिति ।

ख. शूर्पग्रहणमन्त्रे 'वर्षवृद्धमसि' इत्युक्तत्वात् तद्वाक्यशेषे 'वर्षवृद्धा इषीका' इतीषीकास्तुतेरिति ।

ग. See भारद्वाजसूत्र—उत्तरतश्शूर्पमुदूहति वैणवमैषीकं नलमयं वा' ( भा. श्रौ. १.२२.१. ) also शतपथब्राह्मण—अथ शूर्पमादत्ते....यदि नडानां यदि वेणूनां यदीषीकाणाम् (म. श. ब्रा. १.१.४.१८)

1. This passage is wrongly cited in the middle of the next Sutra-bhashya.

2. An, reads स्रुवस्य बिलम्; Ad. Ms., and O. read स्रुवस्याधारः

[क]आयामः पञ्चभागस्स्यात् द्विभागः पात्रमुच्यते ।
त्रिभागो दण्ड इत्याहुरेतदायामलक्षणम् ॥
विस्ताराद्विगुणं पात्रं ग्रीवाविस्तारमर्धतः ।
ग्री[1]वार्धन्तु बिलं कुर्यादेतत्पात्रस्य लक्षणम् ॥

इति स्रुचां शास्त्रान्तरम् । प्राशित्रहरणं गोकर्णाकृति चमसाकृति वा । [[2]प्रणयनं चेत्पूर्वं पात्रसंसादनात् ब्रह्मयजमानयोरासने कृत्वा ब्रह्मवरणं प्रणयनं ततो दर्भास्तरणादि ] विकनसो मतात् । स्फ्यश्शम्या च बाहुमात्र्याविति भारद्वाजः । त्रिंशदङ्गुला शम्येति बोधायनः । षट्त्रिंशदङ्गुलेत्यन्ये । [3]एकस्य स्रुचः सह स्रुवेण, ' एतावसदतां ' इति [4]लिङ्गात् ॥ १० ॥

वारणान्यहोमार्थानि भवन्ति ॥११॥

इति प्रथमे पञ्चदशी कण्डिका

वारणानि [ख]वरणेन कृतानि । मृण्मयी पात्री, निष्टपनविधानात् ॥ ११ ॥ (१५)

क. आयामं पञ्चधा कृत्वा चतुर्धावाऽग्रतो द्वयोः ।
उपान्त्यः पात्रमित्युक्तो हविराश्रयभावतः ॥ १ ॥
उपान्त्यभागे विस्तारः स्वदैर्ध्येण समो भवेत् ।
सोऽञ्जल्याकृतिरुद्दिष्टा बिलमत्र च वर्तुलम् ॥ २ ॥
षडङ्गुलं बाहुमात्र्यां तदर्धेन च निम्नता ।
अरत्निमाने हस्तस्य तलमानं बिलं स्मृतम् ॥ ३ ॥
विस्तारार्धेन निम्नं स्यात् अन्त्यभागेऽस्य निर्णयः ।
भागेऽन्तिमे भवेद्ग्रीवा दैर्घ्यार्धेन च विस्तृता ॥ ४ ॥
तस्या मुखं हंसमुखं हस्त्योष्ठमुखमेव वा ।
बिलात्प्रणालिका तावत्पर्यन्तार्थानुरूपतः ॥ ५ ॥
इति प्राचीनाः कारिकाः ।

ख See मै. सं. ' तस्माद्वारणो यज्ञावचरो न त्वेनेन जुहुयात् ' etc.

1. P, Ms., reads विस्तरार्धन्तु.
2. This passage beginning from प्रणयनं and ending with दर्भास्तरणादि is cited here wrongly, but it would be under the Sutra प्रणीताप्रणयनं ( १. १५. ८. )
3. B[1] . Ms., reads: एकस्याः स्रुचः
4. B[2] Ms., reads मन्त्रलिङ्गात्

अत्र पूर्ववत्पवित्रे करोति यदि न सन्नयति। सन्नयतस्तु ते विभवतः ॥१॥

"वानस्पत्योऽसि देवेभ्यः शुन्धस्व" इति प्रणीताप्रणयनं चमसमद्भिः परिक्षालयति तूष्णीं कꣳसं मृन्मयं च। कꣳसेन प्रणयेद्ब्रह्मवर्चसकामस्य मृन्मयेन प्रतिष्ठाकामस्य गोदोहनेन पशुकामस्यापरेण गार्हपत्यं पवित्रान्तर्हितं चमसं निधाय तस्मिन् "को वो गृह्णाति स वो गृह्णातु कस्मै वो गृह्णामि तस्मै वो गृह्णामि पोषाय व" इत्यप आनयति ॥ २ ॥

तूष्णीं कंसं मृन्मयञ्चेति तु प्रकृतावूहाभावात्। [क]गुणकामानामप्रवृत्तिर्विकृतौ। न तूपदेशः॥ २ ॥

अपो गृह्णन् ग्रहीष्यंश्च पृथिवीं मनसा ध्यायति ॥

"अनयाऽपः पृथिव्या ग्रहीष्यामि गृह्णामि प्रणयामि" इति [ख]ध्यानमर्थसम्बन्धेन। "अनयैवैनाः प्रणयति" इति लिङ्गात्॥ ३ ॥

उपबिलं चमसं पूरयित्वा प्रोक्षणीवदुत्पूयाभिमन्त्र्य 'ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छ' इति सम्प्रेष्यति सर्वत्र प्रसव उक्ते करोति॥ ४ ॥

क. गुणकामाः गुणजन्याः कामाः फलोद्देशेन गुणविधयोऽत्र गृह्यन्ते। यथा 'गोदोहनेन पशुकामस्य प्रणयेत्' 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यादयः। तत्र तेषां गुणानां फलोद्देशेनैव विधानेऽपि यत्किञ्चित्क्रियादिकमाश्रित्यैव विधानात् तस्य चाश्रयस्य विकृतावपि सद्भावात् तद्द्वारा गुणानामपि तत्र प्रवृत्तिरविकलेति उपदेशमतम्। परमिदं पूर्वतन्त्रीयाष्टमिकन्यायविरुद्धम्। यतस्तत्र गुणकामानां विकृतावप्रवृत्तिरेव सिद्धान्तिता। ( see पू. मी. ८-१-१४ ) अत उपदेशमतं तदधिकरणपूर्वपक्षमवलम्ब्य प्रवृत्तमिति वेदितव्यम्। गोदोहनं पात्रविशेषः। यदि पशुरूपं फलमिच्छेत् तदा दार्शपौर्णमासिकमपां प्रणयनं गोदोहनेन कुर्यादिति।

ख. योऽर्थो येन सम्बध्यते तस्य तेन ध्यानम्। यथा 'पृथिव्यापो ग्रहीष्यामि इति। मतं त्विदं खण्डितं रुद्रदत्तेन। See P. 58, आप. श्रौ. Vol. I. A.S. B. ed.

प्रणीयमानासु वाचं यच्छतोऽध्वर्युर्यजमानश्चाऽऽह-विष्कृतः ॥ ५ ॥

"को वः प्रणयति स वः प्रणयत्वपो देवीः प्रणयानि यज्ञ२ स२ सादयन्तु नः । इदं मदन्तीर्घृतपृष्ठा उदाकुः सहस्रपोषं यजमाने न्यञ्चती"रिति समं प्राणैर्धारयमाणः स्फ्येनोपसङ्गृह्याविषिञ्चन् हरति ॥ ६ ॥

पृथिवीं मनसा ध्यायति ॥ ७ ॥

को वो युनक्ति स वो युनक्त्वित्युत्तरेणाहवनीयमसंस्पृष्टा दर्भेषु सादयति ॥ ८ ॥

नेङ्गयन्ति नेलयन्त्या[क]संस्थातो दर्भैरभिच्छाद्य ॥ ९ ॥

'इङ्गनं' कम्पनम् । 'ईलनं' क्षेपणम् ॥ ४–९ ॥

"संविशन्तां दैवीर्विशः पात्राणि देवयज्याया" इति सपवित्रेण पाणिना पात्राणि संमृश्य । १० ।

इति षोडशी कण्डिका ॥

असम्भवत्यभिमर्शने पात्राणां मन्त्रावृत्तिः ॥ १० ॥ (१६)

"वानस्पत्यासि दक्षाय त्वा" इत्यग्निहोत्रहवणीमादत्ते । "वेषाय त्वा" इति शूर्पम् । "प्रत्युष्ट२रक्षः प्रत्युष्टा अरातय" इत्याहवनीये गार्हपत्ये वा प्रतितप्य 'यजमान हविर्निर्वप्स्यामि' इत्यामन्त्रयते ॥ १ ॥

प्रवसत्यग्ने हविर्निर्वप्स्यामीति ॥ २ ॥

क. आसंस्थातोः यावत्कर्मसमाप्ति ।

'अग्ने हविर्निर्वप्स्यामि' इत्युपांशु, [क]तद्विकारत्वात् । [1]उच्चैरित्युपदेशः ॥ १, २ ॥

"उर्वन्तरिक्षमन्विहि" इति शकटायाऽभिप्रव्रजति ॥ ३ ॥

अपरेण गार्हपत्यं प्रागीषमुदगीषं वा नद्धयुगं शकटमवस्थितं भवति व्रीहिमद्यवमद्वा ॥ ४ ॥

[१]"धूरसि" इति दक्षिणां युगधुरमभिमृशत्युत्तरां वा ॥ ५ ॥

केचिद्धुरोरभिमर्शनं कुर्वन्ति, "अत्र[ख] दर्शपूर्णमासवद्धुरावभिमृश्य" इति दर्शनात् ॥ ३–५ ॥

[२]"त्वं देवानामसि सस्नितमं" इत्युत्तरामीषामालभ्य जपति ॥ ६ ॥

"विष्णुस्त्वाऽऽक्रंस्त" इति सव्ये चक्रे दक्षिणं पादमत्याधाय [३]"अह्रुतमसि हविर्धानं" इत्यारोहति ॥ ७ ॥

क. 'यजमान हविर्निर्वप्स्यामि' इति मन्त्रविकृतित्वादस्य मन्त्रस्य तस्य च प्रैषत्वेन प्रैषाणां परसम्बोधनार्थानां याजुर्वैदिकानामपि उच्चैष्ट्वविधानादत्राऽप्युच्चैष्ट्वं प्राप्नोति । तद्बाधनार्थमुपांशुत्वोपदेश इति । परन्तु मीमांसका नैतादृशस्थलेषु प्रकृतिविकृतिभावमिच्छन्ति भक्षपेटिकान्यायेन । उपदेशमतन्तु तदेवानुसरति मीमांसकमतम् ।

ख. सोमे हविर्धानशकटस्य धुरोरभिमर्शने 'दर्शपूर्णमासवत्' ( आप. श्रौ., १०. २८.१) इति दर्शपूर्णमासधर्मातिदेशात् दर्शपूर्णमासयोरपि द्वयोरेव धुरोरभिमर्शनं नैकस्येति केचित्पक्षाशयः । परन्तु पक्षोऽयं खण्ड्यते रुद्रदत्तेन । See आप. श्रौ., P. 61 A. S. B. *edn.*

1. Ad, Ms., reads उच्चैष्ट्वं.

१. धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः । ( तै. १. १. ४. १ ).
२. त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतमम् ॥
३. अह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वाः ॥ ( तै. सं. १. १. ४. १ ).

"उरु वाताय" इति परीणाहमपच्छाद्य "[१]मित्रस्य त्वा चक्षुषा प्रेक्ष" इति पुरोडाशीयान् प्रेक्षते ॥ ८ ॥

'परीणाहः' कटः । 'अपच्छाद्य' [1]उद्घाट्य । पुनः पातयति, '[क]तमसीव वा एष' इति लिङ्गात् ॥ ६–८ ॥

"निरस्तꣳ रक्षो निरस्तोऽघशꣳस" इति यदन्यत्पुरोडाशीयेभ्यस्तन्निरस्य "ऊर्जाय वः पयो मयि धेहि" इत्यभिमन्त्र्य दशहोतारं व्याख्याय शूर्पे पवित्रे निधाय तस्मिन्नग्निहोत्रहवण्या हवींषि निर्वपति तया वा पवित्रवत्या ॥ ९ ॥

नाना आख्यानं [2]व्याख्यानम् । वाक्ये वाक्ये [3]छित्वा[ख] ॥ ९ ॥

व्रीहीन् यवान्वा ॥ १० ॥

"यच्छन्तां पञ्च" इति मुष्टिं गृहीत्वा स्रुचि मुष्टिमोप्य[२] "देवस्य त्वा" इत्यनुद्रुत्य "अग्नये जुष्टं निर्वपामि" इति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ११ ॥

इति सप्तदशी कण्डिका ॥

'व्रीहीन् यवान्वे' ति पुनर्वचनाद्विकृतौ व्री[4]ह्यभावे [5]यवा अपि लभ्यन्त इत्युपदेशः ॥ १०, ११ ॥ ( १७ )

क. कटस्यापाकरणे पुनः पातने च लिङ्गमिदम् ।

ख. वाक्यं पृथक् पृथक् छित्वा पठनीयमिति । यथा–चित्तिस्स्रुक् । चित्तमाज्यम् । इत्यादि ।

1. An, reads उत्पाट्य.
2. P, Ms., omits व्याख्यानम्.
3. Ad, Ms., reads छित्वा छित्वा.
4. Ad. Ms., An, and O read व्रीहिकाले.
5. B² reads यवा लभ्यन्ते.

१. मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा संविक्था मा त्वा हिꣳसिषम् ॥

२. देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ( तै. सं. १.१.४.२

**एवमुत्तरं यथादेवतमग्नीषोमाभ्यां इति पौर्णमास्याम् । इन्द्राग्निभ्यामित्यमावास्यायाम् ॥ १ ॥**

'यथादेवत'मिति सिद्धे 'अग्नीषोमाभ्यां' 'इन्द्राग्निभ्या'मिति नियमात् [क]दाक्षायणयज्ञे प्रयोजनम्—अग्नीषोमीयोऽसोमयाजिनोऽपि भवति । ऐन्द्राग्नश्च [1]सन्नयतः सर्वस्य ॥ १ ॥

**चतुरो मुष्टीन्निरुप्य निरुप्तेष्वन्वोप्य ॥ २ ॥**

निरुप्तेष्वन्वोप्येत्यावृत्तिः प्रतिदैवतम् । पुनः 'चतुर' इति वचनात्, उपदेशक्रमात्सर्वान्ते सकृत् । चतुर्ग्रहणात् [ख]चतुर्मुष्टिनिर्वाप एवान्वावाप इत्युपदेशः ॥ २ ॥

**"इदं देवानां" इति निरुप्तानभिमृशति । "इदमु नः सहे" त्यवशिष्टान् । "स्फात्यै त्वा नारात्यै" इति निरुप्तानेवाभिमन्त्र्य "इदमहं निर्वरुणस्य पाशात्" इत्युपनिष्क्रम्य "स्वरभिव्यख्यं" इति प्राङ् प्रेक्षते ॥ ३ ॥**

"इदं [ग]देवानां" इति जात्यभिधानम्, [2]प्रकरणोपरोधो मा भूदिति । तस्मादाग्नेये केवलेऽप्यनिवृत्तिः [3]स्त्रीदेवतायां [4]चाऽविकारः ।

क. नाऽसोमयाजिनोऽग्नीषोमीयः पुरोडाशो विद्यते पूर्णमासे । एवं न सन्नयत ऐन्द्राग्नोऽस्ति दर्शे । श्रुतिबलात् । दाक्षायणयज्ञाख्ये दर्शपूर्णमासावृत्तिविशेषे तदुभयमपि यथाक्रममुभयत्र विहितम्—अग्नीषोमीय एकादशकपालः पूर्वस्यां पौर्णमास्याम्, इति, ऐन्द्राग्न एकादशकपालः पूर्वस्याममावास्यायामिति चाऽविशेषेण सर्वान् प्रति । ( See आप. श्रौ. ३. १७. ६ ) तत्राऽपि प्रवृत्त्यर्थं नियमकरणमिति ।

ख. यत्र चतुर्मुष्टिनिर्वापो विहितस्तत्रैवाऽन्वावापो नाऽन्यत्र । तेनाऽऽतिथ्यायां तदधिकनिर्वापवत्यां नाऽन्वावापः । निर्वापानन्तरं पुनरपि तत्र कियतश्चनांऽशस्य प्रक्षेपः अन्वावापः ।

ग. 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति सूत्रानुसारेण देवताव्यक्त्येकत्वेऽपि मन्त्रः प्रवर्तत एव केवलाग्नेये तद्विकृतिषु सौर्यादिषु च ।

1. Ad and An read असन्नयतः wrongly.
2. An, reads प्रकरणोपदेशः
3. Ad, Ms., reads: स्त्रीदेवतायां वा विकारः wrongly.
4. M. ed. reads च विकारः

'निरुप्तानेव' इत्यवधारणात् तानेव केवलानभिमन्त्रयते। यथाऽव[1]-शिष्टान्न पश्यति। [क]नानाबीजेषु तन्त्रेण ॥ ३ ॥

"सुवरभिविख्येषं" इति सर्वं विहारमनुवीक्षते। "वैश्वानरं ज्योति"रित्याहवनीयम्। 'स्वाहा द्यावापृथिवीभ्या'-मिति स्कन्नानभिमन्त्र्य "दृꣳहन्तां दुर्या द्यावापृथिव्योः" इति प्रत्यवरुह्य "उर्वन्तरिक्षमन्विहि" इति हरति ॥ ४ ॥

"अदित्यास्त्वोपस्थे सादयामि" इत्यपरेण गार्हपत्यं यथादेवतमुपसादयति ॥ ५ ॥

"अग्ने हव्यं रक्षस्वाऽग्नीषोमौ हव्यं रक्षेथां" इति [ख]भरद्वाज-पाठात्। न गार्हपत्याभिधानम्, निरुप्तदे[2]वतानामेव। यथा भारद्वाजस्य तथाऽस्माकम्। अग्निः केवलो [ग]बौधायनस्य। केचित् 'अग्ने हव्यं रक्षस्वाऽग्न[3]येऽग्नीषोमाभ्यां' इति कुर्वन्ति। अपरेण गार्हपत्यं निधानं यदि तत्र श्रपणम् ॥ ४, ५ ॥

आहवनीयं वा यद्याहवनीये श्रपयति ॥ ६ ॥

यद्याहवनीये श्रपयति, आहवनीयस्य पश्चात् ॥ ६ ॥

यदि पात्र्या निर्वपेद्दक्षिणतः स्फ्यमुपधाय तस्यां सर्वाञ्छकटमन्त्राञ्जपेत् ॥ ७ ॥

इत्यष्टादशी कण्डिका ॥

क. "अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्, सोमाय वनस्पतये श्यामाकं चरुं, बृहस्पतये वाचस्पतये नैवारं चरुं" इत्यादिना राजसूये विहितेष्टिर्नानाबीजेष्टिः। तत्रान्वावापस्तन्त्रेण कर्तव्य इति।

ख. See भारद्वाजश्रौतसूत्र १. २०. ७. P. 13, Lahore edn. i. e. परिददाति-अग्ने हव्यं रक्षस्व, अग्नीषोमौ हव्यं रक्षेथां, इन्द्राग्नी हव्यं रक्षेथामिति यथादेवतम्।

ग. यस्याऽग्नेस्समीपे गार्हपत्यस्याऽऽहवनीयस्य वा निर्वापः क्रियते, स एवाऽभिधीयते न यागीयदेवता' इति बौधायनमतम्।

1. B² reads यथाऽग्निष्ठान्न.
2. B² reads देवताया एव.
3. An and B. Ms., omit अग्नये.

पात्रीमालभ्य शकटमन्त्रा जप्यन्ते। निरसनाभिमन्त्रणे क्रियेते, न परिणाहापच्छादनम् ॥ ७ ॥ (१८)

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते प्रथमप्रश्ने पञ्चमः पटलः ॥

अथ षष्ठः पटलः

स शूकायामग्निहोत्रहवण्यामप आनीय पूर्ववदुत्पूयाऽभिमन्त्र्य 'ब्रह्मन् प्रोक्षिष्यामि' इति ब्रह्माणमामन्त्र्य "देवस्य त्वा" इत्यनुद्रुत्य "अग्नये वो जुष्टं प्रोक्षामि" इति यथादेवतं हविस्त्रिः प्रोक्षन्नाग्निमभिप्रोक्षेत् ॥ १ ॥

शूकं चूलकं[1], अभिमन्त्र्य[2] पूर्ववत्। 'अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां वो जुष्टं प्रोक्षामि' इति प्रयोगः। एकस्थाननिरुप्तत्वादुत्तरत्र च[3] विभागात्। येषां तु "तानि सहावघ्नन्ति तानि सह पिंषन्ति" इति श्रुतिः, तेषां पृथक् पृथक् प्रोक्षणम्। केचिदेकस्थानेऽपि कुर्वन्ति पृथक् पृथक् प्रोक्षणम्। तदयुक्तम्; सावित्रप्रोक्षणे तन्त्रेण मैत्रायणीयके[क]पाठात् ॥ १ ॥

य द्विष्यात्तस्याऽभिप्रोक्षेत् ॥ २ ॥

उत्तानानि पात्राणि पर्यावर्त्य "शुन्धध्वं दैव्याय कर्मण" इति त्रिः प्रोक्ष्य प्रोक्षणीशेषमग्रेण गार्हपत्यं निधाय "देवस्य त्वा सवितुः प्रसव" इति कृष्णाजिनमादाय "अवधूतꣳरक्षोऽवधूता अरातय" इत्युत्करे त्रिरवधूनोत्यूर्ध्वग्रीवं बहिष्टाद्विशसनम् ॥ ३ ॥

क. 'अग्नये वो जुष्टान् प्रोक्षाम्यमुष्मै वो जुष्टान्' इति मैत्रायणीये पाठः। See मै. सं., १. १. ६ P, 3. Leipzic edn, (कृष्णयजुर्वेदान्तर्गतैव काचन शाखा मैत्रायणीयेति।

1. Ad, Ms., reads जूलकं; B. Ms., reads रूपम्.
2. Ad, Mss., reads अभिमन्त्रणम्.
3. Ad, reads चाऽवि.

प्रो[1]क्षणीशेषनिधानं [क]इध्माबर्हिर्वेदिप्रोक्षणार्थम् ॥ २; ३ ॥

"आदित्यास्त्वगसि" इत्युत्तरेण गार्हपत्यमुत्करदेशे वा प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति ॥ ४ ॥

पुरस्तात्प्रतीचीं भसदमुपसमस्यति ॥ ५ ॥

'भसत्' कटिप्रदेशः। 'उपसमस्यति' द्विगुणीकरोति। पुरस्ताच्च यथा भवति। न सर्वा गृह्यते ॥ ४, ५ ॥

अनुत्सृजन् कृष्णाजिनं "अधिषवणमसि" इति तस्मिन्नुलूखलमधिवर्तयति ॥ ६ ॥

'अधिवर्तयति' उपरि वर्तयति ॥ ६ ॥

अनुत्सृजन्नुलूखलं "अग्नेस्तनूरसि" इति तस्मिन् हविरावपति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ७ ॥

"अद्रिरसि वानस्पत्य" इति मुसलमादाय "हविष्कृदेहि" इति त्रिरवहन्ति। अनवघ्नन्वा हविष्कृतं ह्वयति ॥ ८ ॥

[ख]हविष्कृदवह[2]ननमन्त्रः। उपांशु प्रयोगः। न च द्वितीयोऽवहननमन्त्रः। [ग]उच्चैः प्रयोगः। पुनश्चाऽवहननमन्त्र इत्युपदेशः। हविष्कृदद्दृष्टा देवता, पत्न्यन्यो वा प्रकृतः, प्रैषेषु लोकवत् ॥ ८ ॥

क. अतो यत्रेध्माबर्हिराद्यभावः, यथाऽवभृथे, न तत्र शेषनिधानम्।

ख. 'हविष्कृदेहि' इत्यवघातमन्त्र एव। न प्रैषरूपः। अतश्च याजुर्वैदिकेषु प्रैषभिन्नेषु मन्त्रेषूपांशुत्वं प्राप्नोति। तदुच्यते–उपांशुप्रयोग इति। 'अवरक्षो दिवः' इति यो द्वितीयोऽवहननमन्त्रः स न तदा प्रयोक्तव्यः। उभयोः करणमन्त्रत्वेनैकार्थत्वाद्विकल्पप्राप्तेः।

ग. उपदेशमतं तु–'हविष्कृदेहि' इत्यस्याऽवहननमन्त्रत्वेऽपि हविष्कृदाह्वानार्थत्वस्यापि सत्वात् आह्वाने उच्चैस्त्वप्राप्तेरुच्चैरेव प्रयोगः। एवं द्वितीयमन्त्रोऽपि प्रयोक्तव्य एव तदानीमेव, अवहननाभ्यासापेक्षया मन्त्रद्वयस्यापि समुच्चयोपपत्तेरिति ॥

1. Ad, Ms., reads: प्रोक्षणशेष.
2. O Ms., reads: अवहननार्थः

हविष्कृदेहीति ब्राह्मणस्य हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य हविष्कृदाधावेति शूद्रस्य ॥९॥

प्रथमं वा सर्वेषाम् ॥१०॥

"अव रक्षो दिवः सपत्नं वध्यासं" इत्यवहन्ति ॥११॥

इत्येकोनविंशी कण्डिका ॥

अध्वर्युर्वा येषु [क]कर्तृनाम[1] नास्तीत्युपदेशः। आत्मसंस्कारो विलिङ्गेऽपि "स्वयं वा विरोधात्" इति कात्यायनमतिः। 'शूद्रस्य' [ख]निषादस्थपतेः ॥ ९-११ ॥ (१९)

'उच्चैः समाहन्तवा' इति सम्प्रेष्यति ॥१॥

'उच्चैः समाहन्तवा' इति दृषदुपलासमाहननार्थोऽग्नीत्प्रैषः ॥ १ ॥

"कुटरुरसि मधुजिह्व" इत्याग्नीध्रोऽश्मानमादाय [१]"इषमावदोर्जमावद" इति दृषदुपले समाहन्ति ॥ २ ॥

'इषमावद' इति [2]त्रिर्मन्त्रः, यस्मिंश्च परिसमाप्तिः तत्र पुनरारम्भः ॥ २ ॥

द्विर्दृषदि सकृदुपलायां त्रिः सञ्चारयन्नवकृत्वः सम्पादयति ॥ ३ ॥

'सञ्चारयन्' मन्त्रे क्रियाश्च। प्रतिद्रव्यं वा द्रव्यान्तरे क्रियान्तरं

क. यत्र विशेषेण कर्ता नोपात्तः, तत्राऽध्वर्युरेव कर्ता आध्वर्यवसमाख्यानादिति।

ख. सूत्रगतं शूद्रपदं निषादस्थपतिरूपशूद्रवाचकम्। तस्यैव स्थपतीष्टावधिकारात्।

1. B. Ms., reads: कर्मसु कर्तुर्नास्तीति.

2. An, omits त्रिः

१. इषमावदोर्जमावद द्युमद्वदत वयꣳ सङ्घातं जेष्म (तै. सं. १. १. ५. २).

न्याय्यमिति तदा चतुः । [क]जेष्मान्तो मन्त्रः । वदनं "यज्ञायुधानामुद्धदतामुपाशृण्वन्" इति । [ख]यत्रोपकारस्तद्राक्षसं नाऽनुपकारे ॥ ३ ॥

[ग]सावित्रेण वा शम्यामादाय तया समाहन्ति ॥४॥

"वर्षवृद्धमसि" इति पुरस्ताच्छूर्पमुपोहत्युत्तरतो वा ॥ ५ ॥

" वर्षवृद्धाःस्थ " इत्यभिमन्त्र्य " प्रति त्वा वर्षवृद्धं वेत्तु " इत्युद्वपति ॥ ६ ॥

" परापूतꣳरक्षः परापूता अरातय " इत्युत्करे परापुनाति ॥ ७ ॥

" प्रविद्धꣳरक्षः पराध्माता अमित्रा " इति तुषान् प्रस्कन्दतोऽनुमन्त्रयते ॥ ८ ॥

मध्यमे पुरोडाशकपाले तुषानोप्य " रक्षसां भागोऽसि " इत्यधस्तात्कृष्णाजिनस्योपवपत्युत्तरमपरमवान्तरदेशम् ॥ ९ ॥

हस्तेनोपवपतीति बह्वृचब्राह्मणम् ॥१०॥

अद्भिः कपालꣳसꣳस्पर्श्य प्रज्ञातं निधायाप उपस्पृश्य "वायुर्वो विविनक्तु " इति विविच्य " देवो वः

क. " इषमावद " इत्यारभ्य " वयꣳसङ्घातं जेष्म " इत्यन्तं मन्त्रस्वरूपमिति ।

ख. अत्र 'मनोः श्रद्धादेवस्य' इत्याद्यर्थवादेन समाहननस्य रक्षोहननार्थत्वावगमेन रक्ष उपकारार्थत्वाभावात् रौद्रराक्षसेति उपकारस्थल एवाऽपामुपस्पर्शनविधानान्नाऽत्र तदिति ।

ग. 'देवस्य त्वा सवितुः प्रसवे' इति सावित्रं यजुः ।

सविता हिरण्यपाणिः प्रतिगृह्णातु" इति पात्र्यां तण्डुलान् प्रस्कन्दयित्वा "अदब्धेन वश्चक्षुषाऽवपश्यामि रायस्पोषाय वर्चसे सुप्रजास्त्वाय चक्षुषो गोपीथायाऽऽशिषमाशास" इत्यवेक्ष्य "त्रिष्फलीकर्तवा" इति सम्प्रेष्यति ॥११॥

अपामुपस्पर्शनविधानात्, तस्य भ्रेषे यजुर्वेदविहितप्रायश्चित्तं भवति । 'विविनक्ति' सर्वानवहत्य परापूय च सर्वेषां प्रस्कन्दनं शूर्पात् ॥ ४-११ ॥

या यजमानस्य पत्नी साऽभिद्रुत्याऽवहन्ति ॥१२॥

यो वा कश्चिदविकद्यमानायाम् ॥१३॥

इति विंशी कण्डिका ।

"देवेभ्यः शुन्धध्वं देवेभ्यः शुध्यध्वं देवेभ्यः शुम्भध्वं" इति सुफलीकृतान् करोति तूष्णीं वा ॥१॥

त्रीन् मन्त्रानुक्त्वा फलीकरणं खवचनादेकमिति ॥ १ ॥

प्रक्षाल्य तण्डुलां "स्त्रिष्फलीक्रियमाणानां यो न्यङ्गो अवशिष्यते । रक्षसां भागधेयमापस्तत्प्रवहतादित" इत्युत्करे त्रिर्निनयाति ॥ २ ॥

अत्र कृष्णाजिनस्यादानादि प्रागधिवर्तनात्कृत्वा "दिवः स्कम्भानिरसि" इति कृष्णाजिन उदीचीनकुम्बा२

क. अविद्यमानत्वं रजस्वलात्वादिना असान्निध्यम् । न त्वभावः ।

ख. 'वचनादेकं कर्म बहुमन्त्रं' इति सूत्रमत्राऽभिप्रेतम् ।

1. P, Ms., reads: यजुर्भ्रेषप्रायश्चित्तं.

शम्यां निधाय "धिषणाऽसि पर्वत्या" इति शम्यायां दृषदमत्याधाय "धिषणाऽसि पार्वतेयी" इति दृषद्युपलामत्यादधाति ॥ ३ ॥

'कुम्बं' [क]तुण्डं स्थूलं यत्र ॥ २, ३ ॥

पूर्ववदनुत्सर्गः ॥ ४ ॥

"अंशवः स्थ मधुमन्त" इति तण्डुलानभिमन्त्र्य "देवस्य त्वा" इत्यनुद्रुत्य "अग्नये जुष्टमधिवपामि" इति यथादेवतं दृषदि तण्डुलानधिवपति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ५ ॥

'[1]अग्नये जुष्टमधिवपाम्यग्नीषोमाभ्यां जुष्टमधि[2]वपामि' इत्यधिवपेत् तथा पाठादसमासेन। [ख]समासेनोपदेशः–'अग्नयेऽग्नीषोमाभ्यां' इति ॥ ४, ५ ॥

"प्राणाय त्वा" इति प्राचीमुपलां प्रोहति "अपानाय त्वा" इति प्रतीचीं "व्यानाय त्वा" इति मध्यदेशे व्यवधारयति "प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा" इति सन्ततं पिनष्टि ॥ ६ ॥

एकस्य पेषणस्य संस्कारः, शेषं पत्नी पिनष्टि। 'प्रोहति' प्रापयति। 'सन्ततं' अविरामं पिनष्टि ॥ ६ ॥

क. तुण्डं अग्रभागः।

ख. 'अग्नये जुष्टमधिवपाम्यग्नीषोमाभ्यामिन्द्राय वैमृधाय धान्यमसि धिनुहि देवान्' इत्येव मन्त्रः पठनीयः। न तु पृथक् पृथक् 'जुष्टमधिवपामि' इत्यस्याऽनुषङ्ग इति।

1. From अग्नये to अधिवपेत् is omitted in P, Ms.
2. B, Ms., reads: अधिवपामि धान्यमसीत्यधिवपेत्.

"दीर्घामनुप्रसितिमायुषे धां" इति प्राचीमन्ततोऽनुप्रोह्य "देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु" इति कृष्णाजिने पिष्टानि प्रस्कन्दयित्वा "अदब्धेन वश्चक्षुषाऽवेक्षे" इत्यवेक्ष्य "असंवपन्ती पिꣳषाणूनि कुरुता"दिति सम्प्रेष्यति ॥ ७ ॥

'अन्ततः' सर्वेषु पिष्टेषु । प्रापयति प्राचीम् । 'असंवपन्ती' न सर्वान् [1]सह क्षिपन्ती । पिꣳष, अणूनि कुरुतात् इति ॥ ७ ॥

दासी पिनष्टि पत्नी वा ॥ ८ ॥

अपि वा पत्न्यवहन्ति शूद्रा पिनष्टि ॥ ९ ॥

इत्येकविंशी कण्डिका ॥

'शूद्रा' अदाराः, दासी पिनष्टीति विधानात् ॥ ८, ९ ॥ (२१)

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते
प्रथमप्रश्ने षष्ठः पटलस्समाप्तः ॥

अथ सप्तमः पटलः

आहवनीये गार्हपत्ये वा हवीꣳषि श्रपयति ॥ १ ॥

"धृष्टिरसि ब्रह्म यच्छ" इत्युपवेषमादाय "रक्षसः पाणिं दहाऽहिरसि बुध्नियः" इत्यभिमन्त्र्य "अपाग्नेऽग्निमामादं जहि" इति गार्हपत्यात्प्रत्यञ्चावङ्गारौ निर्वर्त्य "निष्क्रव्यादꣳसेध" इति तयोरन्यतरमुत्तरमपरमवान्तरदेशं निरस्य "आ देवयजं वह" इति दक्षिणमव-

1. B, Ms., reads: सह विक्षिपन्ती.

स्थाप्य "[1]ध्रुवमसि" इति तस्मिन्मध्यमं पुरोडाशकपालमुपदधाति ॥ २ ॥

'रक्षसः पार्णि' इत्युपवेषाभिमन्त्रणम्, तस्याऽग्निसम्पर्कादौष्ण्यमिति। केचिद्गार्हपत्यस्य, '[क]अहिरसि' इति लिङ्गात्। तदनुपपन्नम्; [ख]यदाऽऽहवनीये पाकः। 'अन्यतरं' एकतरम्। उपवेषादानं तन्त्रेण। अङ्गारनिर्वर्तनादीनि प्रतिकपालयोगं [ग]तदर्थत्वात्। केचिदग्निसंस्कार इति सकृत्कुर्वन्ति। अवस्थापनञ्च यस्य कस्य चि[1]दङ्गारस्य पुनः पुनः। दक्षिणतोऽवस्थापनं निर्वर्तनदेशान्मध्यमं यथा भवति तथा कार्यम् ॥ १, २ ॥

"निर्दग्ध[२] रक्षो निर्दग्धा अरातय" इति कपालेऽङ्गारमत्याधाय [२]"धर्त्रमसि" इति पूर्वं द्वितीयं संस्पृष्टं [३]"धरुणमसि" इति पूर्वं तृतीयं "चिदसि विश्वासु दिक्षु सीद" इति मध्यमाद्दक्षिणं "परिचिदसि विश्वासु दिक्षु सीद" इति मध्यमादुत्तरम् ॥ ३ ॥

यथायोगमितराणि ॥ ४ ॥

इति द्वाविंशी कण्डिका ॥

अत्याधानमुपरि स्थापनम् ॥ ३, ४ ॥ (२२)

क. आधाने गार्हपत्याधानाङ्गभूते मन्त्रे 'अग्ने गृहपतेऽहे बुध्न्य' इति गार्हपत्यस्याऽहिशब्दवाच्यत्वदर्शनादिति।

ख. गार्हपत्याहवनीययोर्विकल्पेन पाकविधानात्. आहवनीयेऽपि पाकस्य सम्भवात्., तत्र पाककरणे मन्त्रस्याऽप्रवृत्तेः तस्य नित्यवच्छ्रवणानुपपत्तिरिति।

ग. कपालतापनार्थत्वात्।

1. B, Ms., reads: अङ्गारस्य पुनर्दक्षिणतः

१. "ध्रुवमसि पृथिवीं दृꣳहायुर्दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूह" (तै. सं. १. १. ७ १).

२. धर्त्रमस्यन्तरिक्षं दृꣳह प्राणं दृꣳहापानं दृꣳह सजातानस्मै यजमानाय पर्यूह।

३. धरुणमसि दिवन्दृꣳह चक्षुर्दृꣳह श्रोत्रन्दृꣳह सजातानस्मै यजमानाय पर्यूह।

" मरुतां शर्धोऽसि " इति षष्ठम् । " [1]धर्मासि " इति सप्तमम् । "चितः स्थ" इत्यष्टमम् ॥ १ ॥

एवमुत्तरं कपालयोगमुपदधाति ॥ २ ॥

अपि वा मध्यममुपधाय सव्यस्य पाणेरङ्गुल्याऽभिनिधाय " निर्दग्धꣳ रक्षो निर्दग्धा अरातय " इति कपालेऽङ्गारमत्याधाय " धर्त्रमसि " इति तस्मादपरं " धरुणमसि " इति तस्मात्पूर्वं यथायोगमितराणि ॥ ३ ॥

अभिनिधानमभिपीडनम् ॥ १-३ ॥

तस्य तस्याऽङ्गुल्याऽभिनिधानमङ्गाराधिवर्तनं च वाज[क]सनेयिनः समामनन्ति ॥ ४ ॥

"चितःस्थोर्ध्वचित" इत्यूर्ध्वमष्टाभ्य उपदधाति तूष्णीं वा ॥ ५ ॥

आग्नेयविकारेषु न 'चितःस्थे' ति । आग्नेयानङ्गत्वात् । विकारेणाऽर्थ[1]वान् [ख]साधारणोपदेश इति । प्रयोग उपदेशः । [2]उपवेषादानं च प्रतिकपालयोगमिति ॥ ४, ५ ॥

" भृगूणामङ्गिरसां तपसा तप्यध्वं " इति वेदेन कपालेष्वङ्गारानध्यूह्य मदन्तीरधिश्रयति ॥ ६ ॥

इति त्रयोविंशी कण्डिका ॥

क. See कात्या. श्रौ. २.४.२८.

ख. साधारणोपदिष्टमन्त्राणां सर्वकरणार्थत्वसम्भवे तदनुग्रहस्यैव न्याय्यत्वात् विकृतिष्वपि-प्रयोगः कर्तव्य इत्युपदेशमतम् ।

1. P, Ms., reads: अर्थवानिति प्रयोगः; B, Ms., reads: प्रयोग आग्नेयविकारेष्वपीत्युपदेशः ।

2. Not found ' उपवेषादानं च प्रतिकपालयोगमिति ' in An.

१. धर्मासि दिशो दृꣳह योनिन्दृꣳह प्रजान्दृꣳह सजातानस्मै यजमानाय पर्यूह ।

भृगूणामिति प्रतिकपालयोगं यदि न सम्भवति। मदन्त्यधिश्रयणं लौ[क]किकीभिरद्भिः। तथा आपो मदन्त्य इत्याचक्षते [1]इति-बैलकिः। केचि[ख]त्प्रणीताभ्य इति, 'प्रणीता[2]भिः संयौति' इति दर्शनात्। अनुपरिप्लावनस्यापि हविर्मिश्रणार्थत्वात्॥ ६ ॥ (२३)

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिविरचिते
प्रथमप्रश्ने सप्तमः पटलः॥

## अष्टमः पटलः

प्रक्षालितायां पात्र्यां निष्टप्तोपवातायां पवित्रवत्यां पिष्टानि संवपति "देवस्य त्वा" इत्यनुद्रुत्य "अग्नये जुष्टꣳसंवपामि" इति यथादेवतं त्रिर्यजुषा तूष्णीं चतुर्थम्॥ १ ॥

संवपन्वाचं यच्छति तामभिवासयन्विसृजते॥ २ ॥

प्रोक्षणीवत्पिष्टान्युत्पूय प्रणीताभिः संयौति ॥ ३ ॥

'उपवाता' शुष्का। निष्टप्यमानायां 'संवपति' सह क्षिपति सर्वाणि। 'अग्नये जुष्टं संवपामि अग्नीषोमाभ्यां जुष्टꣳसंवपामि' इति। अग्नयेऽग्नीषोमाभ्यामित्युपदेशः॥ १-३ ॥

अन्या वा यजुषोत्पूय यदि प्रणीता नाऽधिगच्छेत् ॥ ४ ॥

क. न प्रणीताभ्यस्संस्कृताभ्य इति।

ख. प्रणीतानामेवापां संयवनार्थत्वात् तदर्था मदन्त्यस्ताभिरेव सम्पादनीया इति।

1. O. Ms. omits इति बैलकिः

2. P, Ms., reads प्रणीताभिरद्भिः

'अन्या वा यजुषोत्पूये' ति [क]उत्पवनमात्रं, नाभिमन्त्रणम् । केचिदभिमन्त्रणमपि, [ख]तत्कार्यापत्तेः । '[1]यदि प्रणीता नाधिगच्छेदि' ति न प्रणयेदित्यर्थः । अतो विकल्पः । च[2]रुषु चाऽस्य लिङ्गात् '[3]पवित्रवत्याज्ये कर्णानावपति[ग]' इति । पशुपुरोडाशे वाऽयं विधिः । प्रणीता नियताः [4]प्रकृताविति [घ]हिरण्यकेशिमतिः । 'पशवो जगतीः' इति लिङ्गात् [ङ]घृतवतीः प्रणीता आनयतीति केचित् ॥ ४ ॥

**स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्य [१]"समापो अद्भिरग्मत" इति पिष्टेष्वानीया "[२]भ्यः परिप्रजाता" इति**

क. प्रणीताभावे संयवनार्थमन्या आपो ग्रहीतव्याः । तत्र ' देवो वस्सवितोत्पुनातु ' इत्यादिना उत्पवनमात्रं कर्तव्यम् । नाभिमन्त्रणं ' आपो देवीः ' इति । यदि सूत्रकारस्योत्पवनवदभिमन्त्रणमप्यभिलषितं स्यात्, तर्हि 'प्रोक्षणीवदुत्पूयाऽभिमन्त्र्य' ' पूर्ववदुत्पूयाभिमन्त्र्य ' इतिवदत्राऽप्यभिमन्त्र्य इत्यवश्यमसूत्रयिष्यत । तत्तु न कृतम् । अतोऽत्र नाभिमन्त्रणमिति ।

ख. संयवनरूपप्रणीताकार्यकारित्वात् तत्कार्यापन्नस्तद्धर्मं लभत इति न्यायात् ।

ग. अयं भावः–अत्र पवित्रशब्देनोत्पवनं लक्ष्यते । अस्ति मैत्राबार्हस्पत्येष्टिः "मैत्राबार्हस्पत्यं भवति" इति ( तै. सं १. ८. ९. ) ( आप. श्रौ., १८. १. १ ) राजसूयमध्ये विहिता । तत्र व्रीहिषु अवहतेषु तण्डुलान् खण्डितानखण्डितांश्च पृथक् पृथग्विचिनुयात् । खण्डिताः कर्णाः, अखण्डिता अकर्णास्तण्डुलाः । अखण्डिततण्डुलैराज्ये निष्पाद्यो मैत्रश्चरुः । एवञ्चोत्पूते घृते चर्वर्थं तण्डुलावापविधानात् चर्वर्थत्वमुत्पवनस्येति गम्यत इति ।

घ. "यदि प्रणीता न विद्येरन् अन्या एव काश्चनापो यजुषोत्पूय ताभिस्सन्नयेदित्यापदर्थवादः" इति सत्याषाढसूत्रम् । ( १. ६. Vol. I P. 137, Poona edn.)

ङ. संयवनार्थवादे 'आपो वै रेवतीः, पशवो जगतीः, ओषधयो मधुमतीः, तानेवास्मा एकधा संसृज्य मधुमतीः करोति' इत्यपां मधुमतीत्वसम्पादनमभिष्टूयते । तच्चात्र घृतेन सम्मेलनमेव । 'एतद्वै दैव्यं मधु यद्घृतं' इति घृतस्यैव मधुत्वेन संस्तवात् । एवञ्च प्रणीतास्वप्सु किञ्चिद्घृतमपि प्रक्षेप्तव्यमिति ।

1. B, Ms., omits यदि.
2. B, Ms., reads चरुष्वाज्य.
3. Ad, Ms., omits पवित्रवत्याजे कर्णानावपतीति.
4. B. Ms., omits प्रकृतौ; P, Ms., reads नियता नियता.

१. समापो अद्भिरग्मत समोषधयो रसेन सꣳरेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिस्सृज्यध्वम् ॥ ( तै. सं. १.१.८.१ )
२. अद्भ्यः परिप्रजातास्स्थ समद्भिः पृच्यध्वम् ॥ Do.

तप्ताभिरनुपरिप्लाव्य "जनयत्यै त्वा संयौमि" इति संयुत्य "मखस्य शिरोऽसि" इति पिण्डं कृत्वा "यथा भागं व्यावर्तथां" इति विभज्य समौ पिण्डौ कृत्वा यथादेवतमभिमृशति "इदमग्नेः" इत्याग्नेयं "इदमग्नीषोमयोः" इत्यग्नीषोमीयम् ॥ ५ ॥

"जनयत्यै त्वा संयौमि" इत्येतावान्मन्त्रः सं[क]यवने । उपलक्षणार्थ उत्तरः । अभिमर्शने विकल्पः । "अग्नीषोमाभ्यां" इत्येवमन्तः संयवनार्थ एवेत्युपदेशः । यथादेवतश्चो[ख]ह्यते । "व्यावर्तेथां" इति हवि[1]रभिधानं न पिण्डाभिधानम् । अतश्चरुपुरोडाशगण ऊहः ॥ ५ ॥

"इदमहꣳसेनाया अभीत्वर्यै मुखमपोहामि" इति वेदेन कपालेभ्योऽङ्गारानपोह्य "घर्मोऽसि विश्वायुः" इत्याग्नेय पुरोडाशमष्टासु कपालेष्वधिश्रयति ॥ ६ ॥

एवमुत्तरमुत्तरेषु ॥ ७ ॥

कपालादङ्गारापोहनम् । मन्त्रः प्रतिकपालयोगं यदि [ग]न सम्भवति । सकृदुपदेशः, अत ऊर्ध्वमित्युत्तरत्र वचनात् ॥ ७ ॥

एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते ॥ ८ ॥

इति चतुर्विंशी कण्डिका ॥

क. खण्डितोऽयं पक्षो दीपिकाकारेण, See आप. श्रौ., P. 79, Vol. I A. S. B. ed.

ख. अत्र चोहशब्दस्तद्देवतोपलक्षणपरः ।

ग. यावत्सु कपालेषु सम्भवस्तावत्सु सकृदिति भाष्याभिप्रायः । सम्भवेऽसम्भवे वा सकृदेवेत्युपदेशमतम् ।

1. P, Ms., reads हविरभिधानमतश्चरुपुरोडाश ऊहः

एवमनुपूर्वाणीत्याग्नेयस्य कृत्वा उत्तरस्य संस्कारः प्रथनादिः । एवेत्यवधारणादेकदेवत्येष्वपि यथा प्रथमः कृतः, तथोत्तरः संस्कारः । एषु [1]पुरोडाशेष्वन्येन हविषा अव्यवेतेषु । व्यवाये तु वायव्यस्य पयसः कृत्वाभिघारणोद्वासने, तत [क]एककपालस्य सौर्यस्य । अत[2] ऊर्ध्वमिति वचनात् । पूर्वन्तु प्रोक्षणादयः संस्काराास्तन्त्रेण भवन्ति ॥ ८ ॥ (२४)

## समानजातीयेन कर्मणैकैकमपवर्जयति ॥ १ ॥

समानजातीयेनैकप्रकारेण [3]कर्मणा एकैकस्य परिसमाप्तिः, नाऽन्यस्य कृत्वा प्रथनमन्यः प्रथ्यते ॥ १ ॥

## यानि विभवन्ति सकृत्तानि क्रियन्ते ॥ २ ॥

'विभवन्ती'ति बहुवचनात् [4]पूर्वाण्यपि सकृत् निरुप्ताभिमर्शनादीनि [5]पर्यग्निकरणान्तानि च नानाबीजेष्वपि । अविभवतां चावृत्तिर्निरुप्ताभिमर्शनादीनाम् ॥ २ ॥

## "उरु प्रथस्वोरु ते यज्ञपतिः प्रथतां" इति पुरोडाशं प्रथयन्सर्वाणि कपालान्यभिप्रथयति ॥ ३ ॥

यथा सर्वाणि कपालानि प्राप्नोति पुरोडाशः तथा प्रथयतीति ॥ ३ ॥

## अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं करोति ॥ ४ ॥

## यावन्तं वा मन्यते ॥ ५ ॥

"तुङ्गः" [6]उच्चः ॥ ४, ५ ॥

क. राजसूये–वायव्यं पयस्सौर्यमेककपालमित्यादाविति ।

1 Ad, reads पुरोडाशगणेष्विति.
2 P, Ms., reads तदूर्ध्वम्.
3 Ad, Ms., omits कर्मणा; An, and B, Ms., read एकैककर्मणा.
4 P. Ms., reads पूर्वेणापि.
5 Ad, अलङ्करणान्तानि.
6 P, and B. उच्चः

तं न सत्रापृथुं करोतीत्येके ॥ ६ ॥

सत्रापृथुः अतिपृथुरित्यर्थः। कूर्मप्रतिकृत्या विकल्पः ॥ ६ ॥

"त्वचं गृह्णीष्व" इत्यद्भिः श्लक्ष्णीकरोत्यनतिक्षारयन् ॥ ७ ॥

'अनतिक्षारयन्' यथा न पतत्युदकम् ॥ ७ ॥

"अन्तरित ꣳ रक्षोऽन्तरिता अरातय" इति सर्वाणि हवी ꣳ षि त्रिः पर्यग्नि कृत्वा "देवस्त्वा सविता श्रपयतु" इत्युल्मुकैः परितपति ॥ ८ ॥

[क]सर्वेषां हविषां त्रिः पर्यग्निकरणं, दोहयोरपि। ब्राह्मणे पुरोडाशग्रहणं प्रदर्शनमापस्तम्बस्यमतात्। मीमांसकानां द्विबहूनां पुरोडाशानाम्। 'परितपनं' समन्ततस्तपनम् ॥ ८ ॥

"अग्निस्ते तनुवं माऽतिधाक्" इति दर्भैरभिज्वलयति ज्वालैर्वा ॥ ९ ॥

अस्पृशद्भिः 'अभिज्वलयति' उपरि ज्वलयति ॥ ९ ॥

"अविदहन्तः श्रपयत" इति वाचं विसृजते ॥ १० ॥

'अविदहन्त' इत्याग्नीध्रे बहुवचनम् ॥ १० ॥

आग्नीध्रो हवी ꣳ षि सुश्रृतानि करोति ॥ ११ ॥

स चाऽर्थकर्म करोति ॥ ११ ॥

क. पुरोडाशस्य सायंप्रातर्दोहयोर्दधिपयसोश्चेति सर्वेषामेव पर्यग्निकरणं कर्तव्यम्। तर्हि तैत्तिरीयब्राह्मणे पर्यग्निकरणे "अर्धमासेऽर्धमासे प्रवृज्यते, यत्पुरोडाशः" इति पुरोडाशग्रहणं कथमिति चेत्—तत् सर्वेषां हविषामुपलक्षकमिति सूत्रकाराशयः। मीमांसकास्तु पुरोडाशानामेव पर्यग्निकरणम्। तत्रैकत्वाविवक्षया द्वयोर्बहूनां वा पुरोडाशानां पर्यग्निकरणप्राप्तावपि पुरोडाशरूपप्रकृत्यर्थाविवक्षायां कारणाभावात् दोहयोः पर्यग्निकरणाप्राप्तेरिति।

"सं ब्रह्मणा पृच्यस्व" इति वेदेन पुरोडाशे साङ्गारं भस्माऽध्यूहति ॥१२॥

अभिवासनं भस्माध्यूहनं, उपरि पाकार्थम् । तदध्वर्युः, तामभिवासयन्निति लिङ्गात् ॥ १२ ॥

अत्र वा वाचं विसृजेत् ॥१३॥

अङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं चोल्मुकेनाऽभितप्य स्फ्येनाऽन्तर्वेदि तिस्रो लेखा लिखति प्राचीरुदीचीर्वा ॥१४॥

प्रथनं श्लक्ष्णीकरणञ्च कृत्वा अङ्गुलिप्रक्षालनं, यथा न लेपसंसर्गः । अभिवासयन् वर्तमानेऽभिवासने समाप्ते वा । प्राचीरुदीचीरिति लेखापरिसमाप्तिः प्राच्यामुदीच्यां वा दिशि । प्रागपवर्गा एव तु [1]लेखाः । केचित्–निनयनाङ्गत्वात् प्रत्यगपवर्गा एवेति ॥ १४ ॥

तास्वसꣳस्यन्दयंस्त्रीन्निनयति प्रत्यगपवर्गमेकताय स्वाहेत्येतैः प्रतिमन्त्रम् ॥१५॥

निनीय वाऽभितपेदभितपेत् ॥१६॥

इति पञ्चविंशी कण्डिका ॥

'असंस्यन्दयन्' यथा न निर्गच्छत्युदकं लेखाभ्यः । [2]एकतप्रभृतयोऽद्भ्यो जाता इत्याप्त्याः[क] । तेभ्यो निनीयोत्तरपरिग्रहः ॥१५, १६॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते
प्रथमप्रश्नेऽष्टमः पटलः ॥

प्रथमप्रश्नश्च समाप्तः ॥

क. एकतादीनामुत्पत्तिः ( तै. ब्रा., ३.२.९.१० ) "सोऽङ्गारेणाऽपोऽभ्यतापयत तत एकतोऽजायत" इत्यादिना श्रुता तत एवावगन्तव्या ।

1. B. Ms., reads रेखाः

2. B. and P. Mss., read एकतत्रितप्रभृतयः

श्रीः

# धूर्तस्वामिकृत आपस्तम्बश्रौतसूत्रभाष्ये

## द्वितीयः प्रश्नः

### प्रथमः पटलः

'देवस्य त्वा सवितुः प्रसव' इति स्फ्यमादाय 'इन्द्रस्य बाहुरसि दक्षिण' इत्यभिमन्त्र्य 'हरस्ते मा प्रतिगाम्' इति दर्भेण सम्मृज्याऽपरेणाऽऽहवनीयं यजमानमात्रीमपरिमितां वा प्राचीं वेदिं करोति ॥ १ ॥

स्रुववत्स्फ्यस्य सम्मार्ग इत्युपदेशः। आहवनी[1]यस्य समीपे वेदिः। य[2]त्रापि महदन्तरं[3] प्राक्त्वेन यजमानमात्री ॥ १ ॥

यथाऽऽसन्नानि हवींषि सम्भवेदेवं तिरश्चीम् ॥ २ ॥

यथाऽऽसन्नानि हवींषि सम्भवन्ति[4] तथाऽस्या विस्तीर्णता ॥ २ ॥

'वेदेन वेदिं विविदुः पृथिवीं सा पप्रथे पृथिवी पार्थिवानि। गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदानिः' इति पुरस्तात्स्तम्बयजुषो वेदेन वेदिं त्रिस्सम्मार्ष्टि। उपरिष्टाद्वा ॥ ३ ॥

क. 'यथा स्रुवमेवं ध्रुवां........प्राशित्रहरणम् (२. ९. ७, ८) इति ध्रुवाप्राशित्रहरणयोरेव स्रुवधर्मकत्वविधानात्तयोरेव तन्नियमः। स्फ्ये त्वनियम एवेति भाष्यकाराभिप्रायः।

1. आहवनीयसमीपे Ad. Ms.
2. तत्रापि P. Ms.
3. महदन्तरालम् An. edn., B. Ms., reads महत्तमन्तरालम्
4. भवन्तीति Ad. Ms.

१. देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे॥

सम्मार्गं कृत्वोपरिष्टात् स्तम्बयजुषः खनिप्रत्यवेक्षणात् प्राक् । केचित् खनिप्रत्यवेक्षणं कृत्वा । येन तृणेन स्फ्यस्य[1] सम्मार्गः तदुत्करे क्षिपति[2] । अन्यच्चैवंविधम्- 'यद्वै यज्ञ[3]स्य कर्मण' इति लिङ्गात्[क] ॥ ३ ॥

**पूर्वार्धाद्वेदेः वितृतीयदेशात् स्तम्बयजुर्हरति ॥ ४ ॥**

पूर्वमर्धं पूर्वार्धम् । पूर्वार्धाद्वेदेः ईषद्विगत[4]तृतीयो देशो वितृतीयदेशः, तस्मात् । [5]स्तम्बयजुरिति [ख]तृणस्य छिन्नस्य पांसूनाञ्च नामधेयम् ॥ ४ ॥

**'पृथिव्यै वर्मासि' इति तत्रोदगग्रं प्रागग्रं वा दर्भं निधाय[१] 'पृथिवि देवयजनि' इति तस्मिन् स्फ्येन प्रहृत्य 'अपहतोऽररुः पृथिव्या' इति स्फ्येन सतृणान् पांसूनपादाय 'व्रजं गच्छ गोस्थानम्' इति हरति । 'वर्षतु ते द्यौः' इति वेदिं प्रत्यवेक्षते यजमानं वा ॥ ५ ॥**

प्रत्यवेक्षणं तस्मिन्नेव देशे ॥ ५ ॥

**[२]'बधान देव सवितः' इत्युत्तरतः पुरस्ताद्वितृतीयदेश उदग्द्विपदेऽपरिमिते वा वेदेर्निवपति ॥ ६ ॥**

क. 'यद्वै यज्ञस्य कर्मणोऽन्यत्राहुतिभ्यस्सन्तिष्ठते । उत्करो वाव तस्य प्रतिष्ठा' (तै. ब्रा., ३. ३. २. ३.) इति प्रकृतार्थवादे एवंविधानां कृतकार्याणां द्रव्याणामुत्करप्रक्षेपानुवादादिति ।

ख. 'स्तम्बयजुरित्यनन्तरस्य कर्मणो नाम' इति रुद्रदत्तः ।

1. स्फ्यसम्मार्गः Ad. Ms.
2. क्षिप्यते An. edn. B. Ms. reads प्रतिक्षिपति
3. B[1]. and B[2]. Mss. read यज्ञियस्य.
4. ईषद्विभाग P. Ms.
5. स्तम्बयजुषः तृणस्य B[1]. Ms.

१. पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषम्, (तै. सं. १. १. ८. १.)
२. बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् (तै. सं. १. १. ९. १.)

'बधान देव सवितः' इत्युत्तरतो निवपति। कस्योत्तरतः? यः पुरस्ताद्वितृतीयो देशो वेदेः[क] तत्समीपे उत्तरतः। समीपसप्तमीयम्। कियत्यध्वनि निवपति? [ख]द्विपदेऽपरिमिते वा। उदगिति कर्तुर्मुखवादः पुनर्वचनात्। उदङ्मुखो निवपति ॥ ६ ॥

स उत्करः ॥ ७ ॥

तं न्युप्तमुत्करम्[ग] ॥ ७ ॥

'अररुस्ते दिवं मा स्कान्' इति न्युप्तमाग्नीध्रोऽञ्जलिनाऽभिगृह्णाति ॥ ८ ॥

एवं द्वितीयं तृतीयञ्च हरति ॥ ९ ॥

तूष्णीञ्चतुर्थं हरन् सर्वं दर्भशेषं हरति ॥ १० ॥

इति प्रथमा कण्डिका ॥

अभिग्रहणमुपर्यञ्जलिनाऽचाल्यमानस्य ग्रहणम् ॥ ८, ९, १० ॥

'अपाररुम देवयजनं पृथिव्या' इति द्वितीये [घ]प्रहरणोऽ'ररुर्द्यां मा पप्तदि'ति तृतीये। 'अपहतोऽररुः पृथिव्यै देवयजन्या' इति द्वितीयेऽपादानोऽ[ङ]'पहतोऽररुः पृथिव्या अदेवयजन' इति तृतीये ॥ १ ॥

क. वेदिदेशं त्रिधा विभज्य पूर्वं तृतीयभागं हित्वा मध्यमस्य तृतीयभागस्य वितृतीयदेशः इति व्यवहारस्तस्य पुरस्ताद्भागे इति।

ख. पदं पञ्चदशाङ्गुलमिति वक्ष्यति। निवपनं प्रक्षेपः।

ग. वदन्ति कल्पकारा इति शेषः।

घ. प्रहरणः प्रहरणसाधनीभूतमन्त्रः।

ङ. अपादानः पांस्वपादानसाधनीभूतो मन्त्रः।

'अवबाढꣳरक्षः' इति द्वितीये निवपन आग्नीध्रोऽभिगृह्णाति, 'अवबाढोऽघशꣳस' इति तृतीये, 'अवबाढा यातुधाना' इति चतुर्थे ॥ २ ॥

'द्रप्सस्ते द्यां मा स्कान्' इति खनिं प्रत्यवेक्ष्य स्फ्येन वेदिं परिगृह्णाति 'वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसा' इति दक्षिणतः '[1]रुद्रा' इति पश्चात् '[2]आदित्या' इति उत्तरतः ॥ ३ ॥

एकस्मिन्नेव रुद्रेऽपामुपस्पर्शनमिति न्यायः । [क]बहुरुद्रेऽपीत्युपदेशः ॥ १-३ ॥

'अपारररुम देवयजनं पृथिव्या अदेवयजनो जहि' इति स्फ्येनोत्तमां त्वचमुद्धन्ति ॥ ४ ॥

समुद्धतस्याऽऽग्नीध्र उत्करे त्रिर्निवपति ॥ ५ ॥

'इमान्नराः कृणुत वेदिमेत देवेभ्यो जुष्टामदित्या उपस्थे। इमान्देवा अजुषन्त विश्वे रायस्पोषा यजमानं विशन्त्वि'ति सम्प्रेष्यति ॥ ६ ॥

[ख]खननमाग्नीध्रकर्म। स्वयमात्मानमनुजानीयादिति लिङ्गात् स्वयं वा। आत्मसंस्कारो विलिङ्गेऽपि ॥ ४-६ ॥

क. 'रौद्रराक्षसे' (आप., प. २. ९.) इति सूत्रे रुद्रो देवता अस्येदं रौद्रमित्येकवचनान्तेनैव विग्रहस्य न्याय्यत्वात् बहुरुद्रदेवताके कर्मणि तन्नास्तीति भाष्यकारमतम्। मारुतवैश्वदेववत् उपरिश्रुतराक्षसवच्चैकानेकरुद्रदेवत्य इत्युपदेशमतम्।

ख. सम्प्रैषेऽन्यकर्तृकत्वस्यौचित्यात् प्रैषस्याऽऽध्वर्यवत्वात् खननमाग्नीध्रेण कर्तव्यमिति प्रथमः पक्षः। स्वयमप्यनुज्ञा क्वचित् दृष्टेति प्रथमतोऽध्वर्युः स्वस्मा एव प्रैषं दत्वा ततः स्वयमेव प्रैषार्थं खननमनुतिष्ठदिति द्वितीयः पक्षः।

1. P. Ms. reads:—उपदेशः, and omits बहुरुद्रेऽपीत्युपदेशः

१. 'रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन छन्दसा। तै. सं. १. १. ९. २.

२. आदित्यास्त्वा परिगृह्णन्तु जागतेन छन्दसा ॥ तै. सं. ,, ,,

[१६] 'देवस्य सवितुः सव' इति खनति ब्यङ्गुलां त्र्यङ्गुलां चतुरङ्गुलां यावत्पार्ष्ण्याः शुक्रं तावतीं प्रथमात्रां रथवर्त्ममात्रां सीतामात्रीं प्रादेशमात्रीं वा पुरीषवतीम् ॥७॥

पार्ष्णी पादस्यापरो भागः। [क]प्रथः हस्ततलम्। सीता कर्षः ॥ ७ ॥

नैता मात्रा अतिखनति ॥ ८ ॥

अतिखननप्रतिषेधादत्र ब्यङ्गुलादयो न पूर्यन्ते तत्रादोष इति केचित्। '[1]अतीत्यैता न खनति' इति वचनादर्वागन्यदपि परिमाणं लभ्यत इत्यपरे ॥ ८ ॥

दक्षिणतो वर्षीयसीं प्राक्प्रवणां प्रागुदक्प्रवणां वा ॥ ९ ॥

इति द्वितीया कण्डिका

दक्षिणतो [2]वर्षीयसी [ख]पुरीषेणोच्छ्रिता ॥ ९ ॥ ॥ २ ॥

[ग]प्राञ्चौ वेद्यंसावुन्नयति प्रतीची श्रोणी ॥ १ ॥

पुरस्तादंहीयसी पश्चात्प्रथीयसी मध्ये सन्नततरा भवति ॥ २ ॥

अंहीयसी तन्वी ॥ १, २ ॥

क. प्रथमात्रं त्रयोदशाङ्गुलमिति बौधायनः।

ख. पुरीषं पांसवः

ग. श्रुतिवाक्यस्यैवोद्धारोऽयम्।

1. An & O read अतीत्यैता निखनति

2. An reads......यर्सी......च्छ्रिताम्

१. देवस्य सवितुस्सवे कर्म कृण्वन्ति वेधसः ( तै. सं. १. १. ९. २. )

यन्मूलमतिशेते स्फ्येन तच्छिनत्ति न नखेन ॥ ३ ॥

नखप्रतिषेधाद्गास्यादि सहकारि स्फ्यस्य स्यात् ॥ ३ ॥

यत्पुरीषमतिशेत उत्करे तन्निवपति ॥ ४ ॥

[क]आहार्यपुरीषां पशुकामस्य कुर्यात् ॥ ५ ॥

यत्प्राक्खननात् तत्कृत्वा यदाहरेत् तन्मन्त्रेण खनेत् ॥ ६ ॥

यस्या भूमेराहरन्ति तां खनति मन्त्रेण ॥ ४, ५, ६ ॥

'ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामी'ति ब्रह्माणमामन्त्र्य स्फ्येन वेदिं परिगृह्णाति 'ऋतमसि' इति दक्षिणतः । 'ऋतसदनमसि' इति पश्चात् । 'ऋतश्रीरासि' इत्युत्तरतः ॥ ७ ॥

विपरीतौ परिग्राहावेके समामनन्ति ॥ ८ ॥

यत्राऽविहृतेऽग्नौ वेदिस्तत्र विपरीतौ परिग्राहौ । [ख]"तेऽग्निना प्राञ्चोऽजयन्" इति लिङ्गात् ॥ ७, ८ ॥

क. यत्राऽन्यतः पुरीषं पांसूनाहृत्य वेदिर्निर्मीयते सा आहार्यपुरीषा ।

ख. मन्त्रविपर्यासः । पूर्वं 'भृतमसी'त्यादयः । पश्चात् वसवस्त्वा परिगृह्णन्तु इत्यादयः । विषयशुध्यर्थमाख्यायिकेयमत्राऽनुसन्धेया—पुरा कदाचिदसुराः सर्वामिमां भूमिमात्मवशं नीत्वाऽतिष्ठन् । परं देवेष्वपि यः कश्चित् क्वचिदुपविश्य यावद्दूरं पश्यति, तावती भूमिस्तदधीना समपद्यत । ततः कदाचिद्देवा असुरानयाचन्त—भूम्यामस्यामस्माकमपि कञ्चिदंशं दास्यथेति । ततोऽसुरा देवानब्रुवन्-यावद्युष्माभिः परिग्रहीतुं शक्यते तावद्गृह्णीतेति । ततो देवा भूमिं परिगृह्य तस्याः प्राच्यां अग्निं पालकत्वेनाऽस्थापयन् । वसुरुद्रादित्यान् दक्षिणादिषु दिक्षु । एवं च वेदेः प्राच्यां आहवनीयोऽग्निः पालको भवति । अतो यत्राऽग्निविहरणात् पूर्वमेव वेदिपरिग्रहः तत्र प्राच्यामग्नेरभावात् मन्त्राणां वैपरीत्यम् । ऋतमसीत्यादिभिः प्रथमं, वसवस्त्वेत्यादिभिः पश्चादिति ॥

आख्यायिकेयम्—असुराणां वा इयमग्र आसीत् ( तै. ब्रा. ३-२-८.६ ) इति ब्राह्मणभागतोऽवगन्तव्या ।

[१]'धा असि स्वधा असि' इति प्रतीचीं वेदिं स्फ्येन योयुप्यते ॥९॥

प्रतीचीं प्रत्यगपवर्गाम्। योयुप्यते घट्टयति ॥ ९ ॥

[२]'उदादाय पृथिवीं जीरदानुः' इति वेदिमनुवीक्षते ॥१०॥

अनुवीक्षते पुरस्तादारभ्य पश्चात्समाप्यते ॥ १० ॥

पश्चार्धे वेदेर्वितृतीयदेशे स्फ्यं तिर्यञ्चं स्तब्ध्वा सम्प्रेष्यति—'प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवञ्च स्रुचश्च सम्मृड्ढि पत्नीं सन्नह्याऽऽज्येनोदेहि' इति ॥११॥

'एकवचनेन द्वि[क]भार्यबहुभार्ययोरपि पत्नीं सन्नह्येति। [ख]आग्नीध्रसंस्कारत्वा[1]त्', आत्मसंस्कारो वा, न पत्नीसंस्कारः। वर्तमानेऽप्यमुष्या अर्थे प्रयुक्त [2]इत्यग्रहणाज्जात्यभिधानम्। क्रमेण सन्नहनम्। 'युक्ता मे' इत्यस्याऽऽवृत्तिः। [ग]सम्पत्नीयहोमे तु होमाङ्गत्वान्मा भूदावृत्तिः।

क. प्रकृतौ भार्याद्वित्वे भार्याबहुत्वे च पत्नीं सन्नह्येत्येकवचनेनैव प्रयोगः; न तूहः, प्रकृतावूहनिषेधात्। प्रापकप्रमाणस्य प्रकृतिविकृत्युभयसाधारणत्वाच्चेति। न वा लोपः। अविकारेण प्रयोगसम्भवादिति।

ख. प्रैषस्यास्याऽध्वर्युणाऽऽग्नीध्रं प्रत्येव क्रियमाणत्वादाग्नीध्रस्य सम्बोध्यत्वेन आग्नीध्रसंस्कारोऽयम्। अथवा अध्वर्योरेव संस्कारः। पत्नीप्रतिपदिकेन पत्नीत्वजात्यभिधानं सर्वथा प्रकृतौ विकृतौ वा नोह इति। एवमेव सिद्धान्तितं पूर्वतन्त्र ( ९. ३. ६, ७ ) अधिकरणयोः।

ग. एवं 'संपत्नी पत्या सुकृतेन गच्छताम्' इति मन्त्रगतः पत्नीशब्दो नोह्यते प्रकृतौ, विकृतौ, सम्पत्नीहोमस्यादृष्टार्थतया तदङ्गभूतस्य मन्त्रस्यासमवेतार्थत्वेनोहाप्रसक्तेः। अथवा पूर्ववदेव जात्यभिधानं, प्राकृतपाठबाधस्याऽन्याय्यत्वादिति।

1. संस्कारः Ad. Ms.
2. इत्यत्र ग्रहणात् B. Ms.

१. धा असि स्वधा अस्युर्वी चासि वस्वी चासि पुरा क्रूरस्य विसृपो विरप्शिन् ॥
२. उदादाय पृथिवीं जीरदानुर्यामैरयन् चन्द्रमसि स्वधाभिस्तान्धीरासो अनुदृश्य यजन्ते ॥

गुणवशेन प्रधानावृत्तेरन्याय्यत्वात्। [1]जात्यभिधानं वा। ऊहस्य चाभावो मा भूदार्षबाधः प्रकृताविति ॥ ११ ॥

अपि वा न सम्प्रैषं ब्रूयात् ॥१२॥

असम्प्रैषपक्षे अध्वर्युरेव करोति ॥ १२ ॥

प्रोक्षणीरभिपूर्योदञ्चं स्फ्यमपोह्य दक्षिणेन स्फ्यमसंस्पृष्टा उपनिनीय स्फ्यस्य वर्त्मन् सादयति 'ऋतसधस्थ' इति द्वेष्यं मनसा ध्यायन् ॥१३॥

अभिपूरणासादने इध्मादि प्रोक्षणार्थे। तस्मान्नावभृथे अवेदिपक्षे। तन्मध्ये [2]पतितान्यप्युदसना[क]दीनि आग्नीध्रः, तदङ्गत्वात्। यजमानद्वेष्यस्य ध्यानम्। न अभिचारार्थम् ॥ १३ ॥

'शतभृष्टिरसि वानस्पत्यो द्विषतो वध' इति पुरस्तात्प्रत्यञ्चमुत्करे स्फ्यमुदस्यति द्वेष्यं मनसा ध्यायन् ॥१४॥

पुरस्तादुत्करस्य प्रत्यञ्चं प्रत्यगग्रं, उदस्यति परित्यजति। सर्वत्र तु पाप्मा द्वेष्यः। '[3]व्यावृत्तिं पाप्मना भ्रातृव्येण गच्छति' इति लिङ्गात्। तस्य ध्यानमित्युपदेशः ॥ १४ ॥

नाऽनवनिज्य हस्तौ पात्राणि पराहन्ति ॥१५॥

अभिमर्शनं पराहननम्, तत्पात्राणां। अन्येषां न करोति ॥ १५ ॥

हस्ताववनिज्य स्फ्यं प्रक्षालयत्यग्रमप्रतिमृशन् ॥१६॥

क. उदसनसम्मार्गप्रोक्षणादीनि।

1. जात्यभिधानं मा भूदूहस्य चाभावात् B. Ms.,
2. An and B[1] Ms read पतितान्युदसनादीनि; B[2] Ms reads पतितोदसनादीनि।
3. P. Ms., reads सा वृत्तिम्.

उत्तरेणाऽऽहवनीयं प्रागग्रमिध्माबर्हिरुपसादयति दक्षिणमिध्ममुत्तरं बर्हिः ॥१७॥

इति तृतीया कण्डिका ॥

प्रक्षाल्य तु पाणी, स्फ्यप्रक्षालनस्य विधिः ॥ १६, १७ ॥ (३)

इत्यापस्तम्बश्रौतसूत्रभाष्ये द्वितीयप्रश्ने प्रथमः पटलः ॥

अथ द्वितीयः पटलः

पत्नीसन्नहनमेके पूर्वं समामनन्ति स्रुक्सम्मार्जनमेके ॥१॥

कृत्वा सन्नहनं स्रुक्सम्मार्गोऽग्रप्रहरणान्तः । ततः पत्न्या गार्हपत्योपस्थानादि ॥ १ ॥

'घृताचीरेताग्निर्वो ह्वयति देवयज्याया' इति स्रुच आदाय 'प्रत्युष्टꣳरक्षः प्रत्युष्टा अरातय' इत्याहवनीये गार्हपत्ये वा प्रतितप्य 'अनिशिताः स्थ सपत्नक्षयणीः' इत्यभिमन्त्र्य वेदाग्राणि प्रातिविभज्याऽप्रतिविभज्य वा तैस्स्रुचस्सम्मार्ष्टि प्राचीरुदीचीर्वोत्ताना धारयमाणः ॥२॥

उपभृतमेवोदीचीमित्येके ॥३॥

सह स्रुवेण प्राशित्रहरणेन च [1]स्रुचां सर्वसंस्काराः । प्राचीरुदीचीरित्यग्रनियमः ॥ २, ३ ॥

[1]'गोष्ठं मा निर्मृक्षम्' इति स्रुवमग्रैरन्तरतोऽभ्याकारं सर्वतो विलमभिसमाहारम् । मूलैर्दण्डम् ॥४॥

1. B. Ms., reads स्रुचां संस्काराः

१. गोष्ठं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहꣳसम्मार्ज्मि ॥ तै. सं. १. १. १०. १.

अभ्याकारं पुनः पुनः सम्मार्ष्टि । सर्वतः सर्वासु दिक्षु । बिलमभि समाहारं बिलापवर्गं संमृशति । दण्डमुपरिष्टात्प्रागपवर्गम्, अधस्तात् प्रत्यगपवर्गम्, 'कतस्मादरत्नौ' इति लिङ्गात् ॥ ४ ॥

[1]'वाचं प्राणम्' इति जुहूमग्रैरन्तरतोऽभ्याकारं प्राचीं मध्यैर्बाह्यतः प्रतीचीं मूलैर्दण्डम् ॥५॥

[2]'चक्षुःश्रोत्रम्' इत्युपभृतमुदीचीमग्रैरन्तरतोऽभ्याकारं प्रतीचीं मध्यैर्बाह्यतः प्राचीं मूलैर्दण्डम् ॥६॥

[3]'प्रजां योनिम्' इति यथा स्रुवमेवं ध्रुवाम् ॥७॥

प्राक्त्वोदक्त्वस्य सिद्धत्वात् प्राचीं मध्यैरिति खक्रियापवर्गवादः । तथोपभृतमुदीचीमिति ॥ ५-७ ॥

'रूपं वर्णं पशूनां मा निर्मृक्षं वाजि त्वा सपत्नसाहँ सम्मार्ज्मि' इति प्राशित्रहरणं तूष्णीं वा ॥८॥

स्रुववदुपदेशः प्राशित्रहरणस्य ॥ ८ ॥

न सम्मृष्टान्यसम्मृष्टैस्संस्पर्शयति ॥९॥

'अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामि' इति पुनः प्रतितप्य प्रोक्ष्याऽग्रेणोत्करं दर्भेषु सादयति जघनेन वा ॥१०॥

क. 'तस्मादरत्नौ प्राञ्च्युपरिष्टाल्लोमानि प्रत्यञ्च्यधस्तात्' ( तै. ब्रा. ३. ३. १. ) इत्यर्थवादे प्रत्यक्त्वस्य स्तवनादिति । प्राचीः उदाचीः इत्यादिनैव प्राक्त्वादेस्सिद्धत्वात् इति ।

ख. उदगग्रासु पूर्वपार्श्वे समाप्तिः, प्रागग्रास्वग्रे समाप्तिः । बाह्यतः प्रतीचीं मध्यैरेव पात्रस्याधोभागे "वेदाग्रमध्यैर्बिलादारभ्याऽऽग्रात् प्रागपवर्गं सम्मृज्य तावन्तं बाह्यभागं प्रत्यगपवर्गं सम्मार्ष्टि".

१. वाचं प्राणं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीँ सम्मार्ज्मि ॥ ( तै. सं. १. १. १०. १. )
२. चक्षुश्श्रोत्रं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीँ सम्मार्ज्मि ॥ ,,
३. प्रजां योनिं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीँ सम्मार्ज्मि ॥ ,,

न सम्मृष्टान्यसम्मृष्टैः [क]सर्वकालम् ॥ ९, १० ॥

स्रुक्सम्मार्जनान्यद्भिस्संस्पर्श्य ॥११॥

इति चतुर्थी कण्डिका ॥

'दिवश्शिल्पमवततं पृथिव्याः ककुभि श्रितम् । तेन वयꣳ सहस्रवल्शेन सपत्नं नाशयामसि स्वाहा' इत्यग्नौ प्रहरति यस्मिन् प्रतितपत्युत्करे वा न्यस्यति ॥१॥

अग्नावेव प्रहरेदिति प्रकृतौ नित्यं [ख]प्रहरणम् ॥ १ ॥

[१]'आशासाना सौमनसम्' इत्यपरेण गार्हपत्य-मूर्ध्वज्ञुमासीनां पत्नीं सन्नह्यति तिष्ठतीं वा ॥२॥

वाचयतीत्येके ॥३॥

मौञ्जेन दाम्नाऽन्यतरतःपाशेन योक्त्रेण वाऽभ्यन्तरं वाससः ॥४॥

अभ्यन्तरमपि [1]वाससः न बहि[2]ः ॥ (२, ३, ४) ॥

न वासोऽभिसन्नह्यति । अभिसन्नह्यतीत्येके ॥५॥

यथा न बध्नाति वासः ॥ ५ ॥

क. सर्वकालं प्रयोगसमाप्ति यावत् । यदि प्रमादात्संस्पर्शः पुनर्निष्टप्य सम्मार्जनं कर्तव्यं भारद्वाजमतात् । अस्माकं तु सर्वप्रायश्चित्तमेवेति रामाण्डारः । यदि संस्पर्शयेत् पुनरेव निष्टप्य सम्मृज्यात् । इति भारद्वाजः ॥ ( See. भा. श्रौ. २–४–१० ).

ख. प्रकृतौ नित्यं प्रहरणमेव, विकृतौ तु प्रहरणमुत्करे त्यागो वेति विकल्पः । त्यागे न स्वाहाकारः इति वृत्तिः ।

1. Ad. and An. read अपि वाससो न बहिः; P. Ms. reads अपि हिवा.........; B[1] Ms., reads अबहिर्वाससः

2. B[2] Ms., omits न बहिः

१. आशासाना सौमनसं प्रजाꣳसौभाग्यं तनूम् । अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कम् ॥ ( तै. सं. १. १. १०. १. )

उत्तरेण नाभिं [क]निष्टकर्यं ग्रन्थिं कृत्वा प्रदक्षिणं पर्यूह्य दक्षिणेन नाभिमवस्थाप्योपोत्थाय 'अग्ने गृहपत उप मा ह्वयस्व' इति गार्हपत्यमुपातिष्ठते ॥६॥

उत्तरेण नाभिमि[1]त्यादि [ख]पत्न्याः । प्रदक्षिणं सर्वतः प्रापयति ॥ ६ ॥

"देवानां पत्नीरुपमाह्वयध्वं पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिꣳसी"रिति देवपत्नीरुपातिष्ठते ॥७॥

अपरेण गार्हपत्यं देवपत्न्यः[ग] ॥ ७ ॥

तस्माद्देशादपक्रम्य [१]"सुप्रजसस्त्वा वयम्' इति दक्षिणत उदीच्युपविशति ॥८॥

'इन्द्राणीवाऽविधवा भूयासमदितिरिव सुपुत्रा । अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वाये'ति जपति ॥९॥

[2]तस्माद्दक्षिणत इति, 'देशाद्दक्षिणत उदीच्यन्वास्ते' इति विधानात् ॥ ८, ९ ॥

क. निष्टकर्यं शिखाबन्धनाकृतिर्ग्रन्थिः ।

ख. ग्रन्थिकरणादि गार्हपत्योपस्थानान्तं पत्नी स्वयमेव करोति ।

ग. तत्रैव गत्वा ता उपतिष्ठेत इति शेषपूरणम् ।

घ. अपरेण गार्हपत्यं प्राङ्मुखी स्थिता सती गार्हपत्यं देवपत्नीश्चोपस्थाय ततस्तस्माद्देशादपाक्रम्य गार्हपत्यस्य दक्षिणदेशमागत्य उदङ्मुखी सती तत्रैवोपविशेत् । यतो गार्हपत्य पश्चिमभागो देवपत्नीनां स्थानम् । उक्तं हि ब्राह्मणे–यत् पश्चात्प्राच्यन्वासीत........ देवानां पत्निया समदं दधीत इति । समदः कलहः । तन्निवारणार्थमेव ह्युक्तम्–देशाद्दक्षिणत उदीच्यन्वास्ते । आत्मनो गोपीथाय ( तै. ब्रा. ३. ३. ३ ) इति ।

1. P. Ms. reads इत्येवमादि

2. B. Ms., reads only तस्माद्दक्षिणतः

१. सुप्रजसस्त्वा वयꣳसुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् ॥ ( तै. सं. १. १. १०. १. )

'युक्ता मे यज्ञमन्वासातै' इति यजमानः सम्प्रेष्यति ॥१०॥

बह्वाज्याभ्यां दर्शपूर्णमासाभ्यां यजत इति विज्ञायते ॥११॥

इति पञ्चमी कण्डिका ॥

'युक्ता म' इत्यन्वासनार्थः[1]। अतः परास्वपि दीक्षणीयायाः क्रियते ॥ १०, ११ ॥

'पूषा ते बिलं विष्यतु' इति सर्पिर्धानस्य बिलमपावर्त्य दक्षिणाग्नावाज्यं विलाप्य 'अदितिरस्यच्छिद्रपत्रा' इत्याज्यस्थालीमादाय 'महीनां पयोऽस्योषधीनाꣳरसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्याया' इति तस्यां पवित्रान्तर्हितायामाज्यं निरुप्य [१]'इदं विष्णुर्विचक्रम' इति दक्षिणाग्नावधिश्रित्य 'इषे त्वा' इति दक्षिणार्धे गार्हपत्यस्याऽधिश्रित्य 'ऊर्जे त्वा' इत्यपादाय वेदेनोपयम्य पत्न्या उपहरति ॥१॥

आज्यस्यैव सकलो निर्वापमन्त्रः, न मधूदकयोः 'आज्यं निरुप्य' इति वचनात् ॥ १ ॥

तत् सा निमील्य वीक्ष्याऽनुच्छ्वसन्त्यवेक्षेत [२]'महीनां पयोऽसि' इति ॥२॥

क. 'दधि मधु घृतम्' इति चित्रेष्टौ विहितयोर्दधिमधुनोराज्यविकारत्वमिति पूर्वतन्त्रेऽष्टमे (८. १. १०.) व्यवस्थापितम्। तत्र नायं मन्त्रः प्रवर्तते। आज्ये प्रकृतेऽपि पुनराज्यं निरुप्येति वचनादिति।

1. P. Ms., reads इत्यासनार्थम्.

१. इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाꣳसुरे ॥ (तै. सं. १. २. १३. १.)

२. महीनां पयोऽस्योषधीनाꣳरसोऽदब्धेन त्वा चक्षुषाऽवेक्षे सुप्रजास्त्वाय ॥ (तै. सं. १. १, १०. ३.)

प्रतिपत्न्यवेक्षणम्, तत्संस्कारत्वात्; आज्यसंस्कारो वा, [क]पुरोडाशीयावेक्षणवत्[1]। निमीलनावेक्षणे पूर्वं कृत्वा पश्चात् 'आज्यमसि' इत्यनुच्छ्व[2]सन्त्या मन्त्रान्तेनाऽवेक्षणम् ॥ २ ॥

'तेजोऽसि' इत्युत्तरार्धे गार्हपत्यस्याऽधिश्रयति ॥ ३ ॥

पत्न्यभावे तेज आदि लुप्यते गार्हपत्येऽधिश्रयणम् ॥ ४ ॥

'तेजसे त्वा' इत्यपादाय 'तेजोऽसि तेजोऽनुप्रेहि' इति हरति । 'अग्निस्ते तेजो मा विनैत्' इत्याहवनीयेऽधिश्रित्य[1] 'अग्नेर्जिह्वासि' इति स्फ्यस्य वर्त्मन् सादयति ॥ ५ ॥

[2]'आज्यमसि सत्यमसि' इत्यध्वर्युर्यजमानश्च निमील्य वीक्ष्याऽनुच्छ्वसन्तावाज्यमवेक्षेते ॥ ६ ॥

अथैनदुदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पुनाति ॥ ७ ॥

इति षष्ठी कण्डिका ॥

क. 'पुरोडाशीयान् प्रेक्षते (आप. श्रौ., १. १७. ८.) इति विहितं पुरोडाशौपयिकानां व्रीहीणां वीक्षणं व्रीहिसंस्कारार्थं तद्वदिति ।

1. B[2] Ms. reads प्रेक्षणवत्
2. P. Ms., „ अनुच्छ्वासं

१. अग्नेर्जिह्वासि सुभूर्देवानां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे भव ॥ ( तै. सं. १. १. १०. ३ ).

२. आज्यमसि सत्यमसि सत्यस्याध्यक्षमसि हविरसि वैश्वानरं वैश्वदेवमुत्पूतशुष्मं सत्योजाः सहोऽसि सहमानमसि सहस्वारातीः सहस्वारातीयतः सहस्व पृतनाः सहस्व पृतन्यतः । सहस्रवीर्यमसि तन्मा जिन्वाऽऽज्यस्याज्यमसि सत्यस्य सत्यमसि सत्यायुरसि सत्यशुष्ममसि सत्येन त्वाभिघारयामि तस्य ते भक्षीय ॥ ( तै. सं. १. ६. १. )

'शुक्रमसि' इति प्रथमं 'ज्योतिरसि' इति द्वितीयं 'तेजोऽसि' इति तृतीयम् ॥ १ ॥

पूर्ववदाज्यलिप्ताभ्यां प्रोक्षणीरुत्पूयाऽनिष्कासिना स्रुवेण वेदमुपभृतं कृत्वाऽन्तर्वेद्याज्यानि गृह्णाति ॥ २ ॥

अनिष्कासिना[क] अशेषेण ॥ ( ३-७, (६) १, २ ) ॥

समं बिलं धारयमाणो जुह्वां मध्यदेश उपभृति भूमौ प्रतिष्ठितायां ध्रुवायाम् ॥ ३ ॥

भूमौ प्रतिष्ठितायां सवेदायाम् ॥ ३ ॥

चतुर्जुह्वामष्टावुपभृति चतुर्ध्रुवायाम् ॥ ४ ॥

पशुकामस्य वा पञ्चगृहीतं ध्रुवायां, यथाप्रकृतीतरयोः ॥ ५ ॥

पशुकामस्य वा अकामस्य वा ॥ ४, ५ ॥

दशगृहीतमुपभृति पञ्चगृहीतमितरयोरित्येके ॥ ६ ॥

भूयो जुह्वामल्पीय उपभृति भूयिष्ठं ध्रुवायाम् ॥ ७ ॥

[1]'शुक्रन्त्वा शुक्रायाम्' इति त्रिभिः [2]'पञ्चानां त्वा वातानाम्' इति च द्वाभ्यां जुह्वां चतुः पञ्चकृत्वो वा प्रतिमन्त्रम् ॥ ८ ॥

क. निष्कासः शेषः स न विद्यते यस्य सोऽनिष्कासः । शेषरहितेनेति ।

१. शुक्रन्त्वा शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि ॥ १ ॥ ज्योतिस्त्वा ज्योतिषि धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि ॥ २ ॥ अर्चिस्त्वार्चिषि धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि ॥ ३ ॥ इति त्रीणि यजूंषि ॥

२. पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि ॥ १ ॥ पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि इति द्वे ॥

[1]"पञ्चानां त्वा दिशां, पञ्चानां त्वा पञ्चजनानां, पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामि, पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामि, धामासि प्रियं देवानामनाधृष्टं देवयजनं देववीतये त्वा गृह्णामि', इति 'चरोस्त्वा पञ्चबिलस्य' इति च पञ्चभिरुपभृत्यष्टकृत्वो दशकृत्वो वा ॥ ९ ॥

शेषेण ध्रुवायां चतुःपञ्चकृत्वो वा प्रतिमन्त्रम् ॥ १० ॥

उपभृति द्वौ [क]गणौ [1]प्रयाजानूयाथौं। अष्टगृहीते गणान्त्ययोर्लोपः। प्रयाजार्थमेव जुह्वाम्, नाऽऽघारार्थम्। 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' इति [2]वचनात्। अतस्त[ख]द्भावे आघारस्य लोपः। उभयार्थत्वादौपभृतस्यानूयाजाभावेऽ[3]न्त्यस्य गणस्य लोपः। यत्र चतुर्गृहीतमनूयाजाश्च तत्र प्रथमाद्गणात् द्वौ मन्त्रौ, उत्तमाद्गणाच्च द्वौ ॥ (६-५) ९,१० ॥

नोत्कर आज्यानि सादयति ॥ ११ ॥

नान्तर्वेदि गृहितस्य प्रतीचीनं हरन्ति ॥ १२ ॥

इति सप्तमी कण्डिका ॥

क. "यद्यपि 'अष्टावुपभृति' इत्येव श्रूयते, तथापि तत्र चतुर्गृहीतद्वयमेव। तत्र द्वितीयं चतुर्गृहीतमनूयाजार्थम्। अतो यत्रातिथ्यादौ अनूयाजा न सन्ति तत्र द्वितीयस्य चतुर्गृहीतस्य लोप इति पूर्वतन्त्रे चतुर्थाध्याये (४.१.१७) सिद्धान्तितम्। तदेवानूदितमत्र भाष्यकारेण।

ख. एवञ्च प्रयाजप्रयुक्तेनैवाऽऽज्येनाऽऽघारकरणात् यत्र प्रयाजा न सन्ति उदयनीयादौ तत्र तत्प्रयुक्तजौहवाज्यस्याप्यभावात् आघारयोर्लोप एवेति।

1. B[2] Ms omits प्रयाजानूयाजौ.
2. B. Ms reads लिङ्गात्; Ad omits both.
3. P. Ms reads अन्त्यग्रहणस्य लोपः; अन्त्यस्य ग्रहणस्य लोप. B. Ms.

१. प्रथमद्वितीययोः षष्ठे च मन्त्रे 'यन्त्राय धर्त्राय गृह्णामि' इति योजयित्वा पूरणम् ॥

अन्तर्वेदि गृहीतस्य [1]प्रतीचीनहरण प्रतिषेधात् ध्रुवात एवाऽऽहवनीये होमाः। आज्यस्थाल्या कअपराग्न्योः, इडोपस्तरणादि[2]च ॥ ११,१२ ॥ (७)

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते
द्वितीयप्रश्ने द्वितीयः पटलः ॥

पूर्ववत्प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य विस्रस्येध्मं 'कृष्णोऽस्याखरेष्ठ' इति त्रिः प्रोक्षति। 'वेदिरसि' इति त्रिर्वेदिं 'बर्हिरसि' इति त्रिर्बर्हिः। अन्तर्वेदि पुरो ग्रन्थि बर्हिरासाद्य 'दिवे त्वा' इत्यग्रं प्रोक्षति 'अन्तरिक्षाय त्वा' इति मध्यं 'पृथिव्यै त्वा' इति मूलम् ॥ १ ॥

स्रुच्यग्राणि उपपाय्य मूलान्युपपाययति ॥ २ ॥

'पोषाय त्वा' इति सह स्रुचा पुरस्तात् प्रत्यञ्चं ग्रन्थि प्रत्युक्ष्य प्रोक्षणीशेषं 'स्वधा पितृभ्य' इति दक्षिणायै श्रोणेरोत्तरस्यास्सन्ततान्निनीय 'पूषा ते ग्रन्थि विष्यतु' इति ग्रन्थिं विस्रंसयति ॥ ३ ॥

सह स्रुचा हस्ते[3]न पुरस्तात्प्रत्यगपवर्गम्। अङ्गेष्वपि प्राचीनावीती 'स्वधा पितृभ्य' इति ॥१-३॥

प्राञ्चमुग्दूढं प्रत्यञ्चमायच्छति ॥ ४ ॥

प्रत्यञ्चमुद्गूढं प्राञ्चम्, [4]प्राञ्चमुद्गूढं प्रत्यञ्चम् ॥४॥

क. गार्हपत्ये पत्नीसंयाजादिकं, दक्षिणाग्नौ पिष्टलेपफलीकरणहोमश्च।

1. B. Ms omits प्राचीनहरणस्य
2. उपस्तरणानि P. Ms.
3. P + B Mss read हस्तेन च
4. Ad omits प्राञ्चमुद्गूढं प्रत्यञ्चम्, & P. Ms reads अवगूढं for उद्गूढम्

'विष्णोस्तूपोऽसि' इति कर्षन्निवाहवनीयं प्रति-प्रस्तरमपादत्ते । नोद्यौति, न प्रयौति, न प्रतियौति, न विक्षिपति, न प्रमार्ष्टि, न प्रतिमार्ष्टि, नाऽनुमार्ष्टि ॥ ५ ॥

'कर्षन्निव' विलिखन्निव, 'आहवनीयं प्रति' यत आहवनीय-स्ततो नयति । 'नोद्यौति' नोत्क्षिपति । 'न प्रयौति' न पुरस्तात्सा[1]रयति । 'न प्रतियौति' न पश्चात् । 'न क्षिपति' न विचालयति । 'न प्रमार्ष्टि' न स्पृशत्यन्येन हस्तेन । 'न प्रतिमार्ष्टि' अग्रादारभ्य मूलात् । 'नाऽनुमार्ष्टि' मूलादारभ्याऽग्रात् ॥५॥

"अयं प्राणश्चापानश्च यजमानमपि गच्छताम् । यज्ञे ह्यभूतां पोतारौ पवित्रे हव्यशोधने । यजमाने प्राणापानौ दधामी"ति तस्मिन् पवित्रे अपिसृज्य 'प्राणापानाभ्यां त्वा सतनुं करोमि' इति यजमानाय प्रयच्छति यजमानो ब्रह्मणे । ब्रह्मा प्रस्तरं धारयति यजमानो वा ॥ ६, ७ ॥

इत्यष्टमी कण्डिका

यजमानो धारयति यदा, तदा न ब्रह्मणे प्रयच्छति । तदपीत्यु-पदेशः ॥६, ७॥ (८)

दर्भैर्वेदिमन्तर्धाय दक्षिणतस्सन्नहनं स्तृणात्यक्षणया वा ॥ १ ॥

[1]"ऊर्णाम्रदसं त्वा स्तृणामि' इति बर्हिषा वेदिं स्तृणाति बहुलमनतिदृश्नं प्रागपवर्गं प्रत्यगपवर्गं वा त्रिधातु पञ्चधातु वा ॥ २॥

1. P. Ms reads धारयति; सादयति Ad.

१. ऊर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः "( तै. सं. १. १. ११. १. )

[1]अनतिदृश्नं यथा न दृश्यते भूमिः। धातुः परिपाटिः। बहुष्वपि निधनेषु त्रिधातु पञ्चधातु वेति [क]नियमः ॥१, २॥

अग्रैर्मूलान्यभिच्छादयाति ॥ ३ ॥

धातौ धातौ मन्त्रमावर्तयाति ॥ ४ ॥

प्रा[2]गपवर्गेऽप्यग्रैर्मूलान्यभिच्छाद्यन्ते ॥३, ४॥

प्रस्तरपाणिस्संस्पृष्टान् परिधीन् परिदधाति '[1]गन्धर्वोऽसि विश्वावसुः' इत्येतैः प्रतिमन्त्रमुदगग्रम्मध्यम प्रागग्रावितरौ ॥ ५ ॥

संस्पृष्टाः परस्परेण ॥ ५ ॥

आहवनीयमभ्यग्रन्दक्षिणमवाग्रमुत्तरम् ॥ ६ ॥

'अभ्यग्रम्' आहवनीयाभिमुखाग्रम्। 'अवागग्रम्' यस्य नाहवनीयाभिमुखमग्रम् ॥ ६ ॥

[२]'सूर्यस्त्वा 'पुरस्तात्पातु' इत्याहवनीयमभिमन्त्र्यो-पर्याहवनीये प्रस्तरं धारयन्नाग्निं कल्पयति ॥ ७ ॥

"सूर्यस्त्वा पुरस्तात्पातु" इति परिध्यङ्गमित्युपदेशः। "[3]आदित्यो

क. अत: पश्चादौ महत्यामपि वेद्यां दर्भाणामायामवर्धनेनाऽपरेणाऽऽहवनीयं त्रिधातु पञ्चधातु वैव स्तरणमिति।

1. All Mrs. of भाष्य read अनतिदृश्नं, but only An edn reads अनतिदृश्यं in both i. e text & commentary.
2. B[1] Ms., reads प्रागपवर्गस्यापि; B Ms. reads प्रागपवर्गेष्वपि.
3. B. Ms reads आदित्यो ह्येवोद्यन् पुरस्ताद्रक्षांऽस्यपहन्त

१. गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडितः॥ तै. सं. १. १. ११. १
इन्द्रस्य बाहुरसि दक्षिणो यजमानस्य परिधिरिड ईडितः।
मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडितः॥ इति मन्त्राः
२. सूर्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्याः"

ह्येवोचन्" इति लिङ्गात्। [1]तस्मान्नोपसदि, नाऽवभृथे गृहमेधीये[क]च। 'अग्निं कल्पयति' [ख]बलवन्तं करोति ॥ ७ ॥

अनूयाजार्थे प्राची उल्मुके उदूहतीति वाजसनेयकम् ॥८॥

प्राची नयत्युल्मुके विकल्पेन वाजसनेयि[2]मतात् ॥ ८ ॥

मध्यमं परिधिमुपस्पृश्यौर्ध्वे आघारसमिधावादधाति ॥९॥

सकृन्मध्यमपरिध्युपस्पर्शनम्[ग]। उपदेशः[घ] पुनः पुनरपीति ॥ ९ ॥

'वीतिहोत्रं त्वा कवे' इति दक्षिणां 'समिदस्यायुषे त्वा' इत्युत्तराम् ॥१०॥

तूष्णीं वा ॥११॥

आघारसमिदेकाऽग्नेर्दक्षिणा, एका चोत्तरा सर्वविधिषु दिङ्नियमात्। यद्यपि प्राञ्चौ तिर्यञ्चौ वाऽऽघारौ। उपदेशस्तु यत्र परिसमाप्तिराघारयोस्तत्र स्थापयितव्ये। यदा प्राञ्चौ, तदा प्रथमोत्तरपूर्वेण, द्वितीया दक्षिणपूर्वेणेति। ऊर्ध्वे चाधेये, 'उपरिष्टादेव रक्षांस्यपहन्ति' इति वचनात् ॥१०, ११॥

क. 'सूर्यस्त्वा' इत्याहवनीयाभिमन्त्रणं परिध्यङ्गमेव। अतो यत्र परिधिर्नास्ति तत्राऽस्याऽभिमन्त्रणस्यापि लोप एव यथाऽवभृथादाविति।

ख. इन्धनप्रक्षेपेण वर्धयतीति।

ग. उपस्पर्शनं हस्तेन कर्तव्यम्। आघारसमिभ्द्यां वेति रामाण्डारः।

घ. उपस्पर्शनस्याघारसमिदङ्गत्वात्। तयोश्च द्वित्वात् प्रतिप्रधानं गुणावृत्तिन्यायेनोपस्पर्शनस्याऽप्यावृत्तिरिति।

1. An & B. Ms read तस्मान्नावभृथे नोपसदि

2. P. Ms reads वचनात्

१. वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमह्यग्ने बृहन्तमध्वरे ॥

समावनन्तर्गर्भौ दर्भौ विधृती कुरुते ॥ १२॥

समौ करोति। छिनत्ति। नास्ति ययोरन्तर्गर्भस्तावनन्त[क]र्गर्भौ ॥ १२॥

'विशो यन्त्रे स्थ' इत्यन्तर्वेद्युदगग्रे निधाय 'वसूना॰रुद्राणामादित्याना॰सदसि सीद' इति तयोः प्रस्तरमत्यादधाति ॥ १३॥

अभिहततराणि प्रस्तरमूलानि बर्हिर्मूलेभ्यः ॥ १४॥

बर्हिर्मूलेभ्यः यस्मिन् धातौ सादयति, तस्य मूलेभ्यः पुरस्तादतिशयेन हृतानि ॥ १३, १४॥

[१]'जुहूरसि घृताची' इत्येतैः प्रतिमन्त्रमनूचीरसंस्पृष्टाः स्रुचः प्रस्तरे सादयति ॥ १५॥

इति नवमी कण्डिका

'अनूचीः' प्राचीः। परस्परेणासंस्पृष्टाः। [1]सर्वाश्च प्रस्तरे ॥ १५॥ (९)

अपि वा जुहूमेव प्रस्तरे ॥ १॥

समं मूलैर्जुह्वा दण्डं करोति। उत्तरेण जुहूमुपभृत प्रतिकृष्टतरामिवाधस्ताद्विधृत्योः। उत्तरेणोपभृतं ध्रुवां प्रतिकृष्टतरामिवोपरिष्टाद्विधृत्योः ॥ २॥

नाधस्ताद्विधृत्योरुपभृत्। 'प्रतिकृष्टतरा' अतिशयेन पश्चान्नीता। [2]उपभृतोऽप्यतिशयेन पश्चान्नीता ॥ १, २॥

क. यस्य दर्भस्य मध्ये दर्भान्तरं नास्ति सोऽनन्तर्गर्भः।

1. Ad & B. Ms read सर्वाश्चेत्

2. Ad omits उपभृतोऽप्यतिशयेन पश्चान्नीता

१. जुहूरसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद ॥१॥
उपभृदसिध्रुताची+सीद ॥२॥ ध्रुवासिघृताची + सदसि सीद ॥ ३॥

'ऋषभोऽसि शाक्वरो घृताचीनाँ सूनुः । प्रियेण नाम्ना प्रिये सदसि सीद' इति दक्षिणेन जुहूं स्रुवं सादयत्युत्तरेण वोत्तरेण वा ध्रुवाम् ॥ ३ ॥

कयाजमानदर्शनात् स्थाल्या [1]साद्यते ॥ ३ ॥

[१]"एता असदन्नि"ति स्रुचोऽभिमन्त्र्य "विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानी"त्याज्यानि कपालवत्पुरोडाशादङ्गारानपोह्य 'सूर्यज्योतिर्विभाहि महत इन्द्रियाये'त्यभिमन्त्र्य 'आप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदम् । पशूनां तेजसाऽग्नये जुष्टमभिघारयामि' इत्याग्नेयमभिघारयति तूष्णीमुत्तरम् । ॥ ४ ॥

'यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे । आत्मन्वान् सोम घृतवान् हि भूत्वा देवान् गच्छ सुवर्विन्द यजमानाय मह्यम्' इति प्रातर्दोहम् ॥ ५ ॥

'स्योनन्ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि त' इति पात्र्यामुपस्तीर्य 'आर्द्रः प्रथस्नुर्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीनाम्' इत्यपर्यावर्तयन् पुरोडाशमुद्वास्य ॥ ६ ॥

इति दशमी कण्डिका

क. याज्माने आसाद्यमानपात्राभिमन्त्रणमन्त्रमध्ये 'इयꣳ स्थाली घृतस्य' इति स्थाल्या अपि मन्त्रदर्शनात् आज्यस्थाल्या अप्यासादनं लिङ्गादनुमीयत इति ।

1. An reads आसाद्यते

१. एता असदन्त्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियम् ॥ (तै. १, १, ११, २)

विष्णूनि स्थ' इति [क]स्रुग्गतानामेवाऽऽज्यानामभिमन्त्रणम्, स्रुचामधिकृतत्वात्। 'पुरोडाशादङ्गारानपोह्य' इति मन्त्रा[ख]वृत्तिः [ग]'सूर्यज्योतिः' 'स्योनं त' इति च। द्रव्यगते [1]प्रकृतत्वात्प्रकरणस्य चाऽ[2]बाधात्॥ ४-६ ॥ (१०)

वेदेन भस्म प्रमृज्य 'तस्मिन् सीदाऽमृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति पात्र्यां प्रतिष्ठापयति ॥ १ ॥

तूष्णीं यवमयम् ॥ २ ॥

'इरा भूतिः पृथिव्यै रसो मोत्क्रमीत्' इति स्रुवेण कपालानि प्रत्यज्य 'देवस्त्वा सविता मध्वानक्तु' इति स्रुवेण पुरोडाशमनाक्ति स्वक्तमकूर्मपृषन्तमपरिवर्गमणिकाषम् ॥ ३ ॥

योगे योगे [3]कपालाञ्जने मन्त्रावृत्तिः। प्रतिकपालं हिरण्यकेशिनः। 'अपरिवर्गं' अपरित्यजन्। 'अणिकाषं' अघृषन्॥ १-३ ॥

उपरिष्टादभ्यज्याऽधस्तादुपानक्ति ॥ ४ ॥

[घ]हस्तेनोपाञ्जनं अधस्ताद्धिरण्यकेशिमतात्॥ ४॥

क. स्रुग्गतानामित्यनेनाऽऽज्यस्थालीगतमाज्यं व्यावर्त्यते। अतो यत्र केवलायां ध्रुवायामेव ग्रहणं तत्र तस्यैवाऽऽभिमन्त्रणं नाऽऽज्यस्थालीगतस्येति।

ख. "इदमहँ सेनाया अभीत्वर्यै" (See आप. श्रौ. १. २४. ६) इति मन्त्रेण पुरोडाशादङ्गारापोहनं कर्तव्यम्। प्रतिपुरोडाशं च मन्त्रावृत्तिः। युगपत्कर्तुमशक्यत्वादिति।

ग. सूर्यज्योतिः, 'स्योनं ते' इत्यनयोरपि प्रतिपुरोडाशमावृत्तिः। किञ्च मन्त्रद्वयमिदं प्रकृतपुरोडाशद्रव्यवाचकम्। न ज्योतिर्वाचकम्। द्रव्यस्यैव प्रकृतत्वात्। तद्बाधे प्रमाणाभावादिति।

घ. उपरिष्टादभ्यज्य स्रुवेण हस्तेनाऽधस्तादुपानक्ति इति हिरण्यकेशिसूत्रम्। तदनुरोधेनोच्यते—हस्तेनेत्यादि।

1. B[2] Ms reads प्रस्तुतत्वात्
2. An & Ad read च बाधात्
3. An reads कपालाञ्जनमन्त्रावृत्तिः

[1]चतुर्होत्रा पौर्णमास्यां हवींष्यासादयेत् [2]पञ्चहोत्रा-मावास्यायाम् ॥ ५ ॥

असम्भवतामासादने मन्त्रावृत्तिः ॥ ५ ॥

'प्रियेण नाम्ना प्रिय^ँ सद आसीद' इति यदन्य-द्धविर्दार्शपूर्णमासिकेभ्यस्तदेतेनाऽऽसादयेदिति विज्ञायते ॥ ६ ॥

प्रियेणेति [क]विकृत्युत्पन्नत्वादनूहः । आसीदनमासीदनेत्युपदेशः, 'अद्य सुत्याम्' इति दर्शनात् ॥ ६ ॥

अपरेण स्रुचः पुरोडाशावासादयति ॥ ७ ॥

उत्तरौ दोहौ ॥ ८ ॥

अपि वा मध्ये वेद्यास्सान्नाय्यकुम्भ्यौ सन्दधाति पूर्वं शृतमपरं दधि । अथैने व्युदूहति दक्षिणस्यां श्रोण्यां शृतमासादयत्युत्तरस्यां दधि ॥ ९ ॥

उत्तरौ दोहौ पुरोडाशस्याऽऽग्नेयं प्रथममैन्द्रमुत्तरमिति । स्रुचां केचित् । असम्भवे हस्तद्वयेन कर्म ॥ ७–९ ॥

क. सूत्रस्याऽस्य सर्वविकृत्यर्थमेव प्रवृत्तेरेतन्मन्त्रस्य यथावस्थितस्यैव विकृतिषु प्रयोगस्य सूत्रकाराभिमतत्वदर्शनादनूहितस्यैव विकृतिषु पाठः । उपदेशमते तु विकृत्यर्थ-मुत्पन्नेष्वपि क्वचित्समवेताभिधानसम्भवे ऊहस्सूत्रकारस्याऽभिमतो दृश्यते । यथा द्वादशाहे उत्पन्नस्य 'श्वः सुत्यामागच्छ' इति सुब्रह्मण्यानिगदस्य 'अद्य सुत्यां' (आप. श्रौ. २१.६.१९) इति सूत्रकारेणैवोहः प्रदर्शितः । अतोऽत्राऽप्यूहो द्विवचनबहुवचनान्तेनेति ।

१. पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता ॥ इति चतुर्होतृमन्त्रः । (तै. आ. ३. १)

२. अग्निर्होता । अश्विनाध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता ॥ इति पञ्चहोतृमन्त्रः ॥ (तै. आ. ३. १)

'अयं वेदः पृथिवीमन्वविन्दद्गुहासतीं गहने गह्वरेषु। स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोतु' इत्यग्रेणोत्तरेण वा ध्रुवां वेदन्निधाय वेद्यन्तान् परिस्तीर्य होतृषदनं कल्पयित्वा सामिधेनीभ्यः प्रतिपद्यते ॥ १० ॥

इत्येकादशी कण्डिका

वेदासादनमुत्तरकर्मार्थम्। सामिधेन्यर्थो यः प्रैषः तं वक्तुं प्रतिपद्यते। तस्य तदङ्गत्वात्सामिधेनीस्वरः ॥ १० ॥ (११)

इत्यापस्तम्बश्रौतसूत्रभाष्ये द्वितीयप्रश्ने तृतीयः पटलः ॥

अथ चतुर्थः पटलः

'अग्नये समिध्यमानायाऽनुब्रूहि' इति सम्प्रेष्यति समिद्ध्यमानायाऽनुब्रूहीति वा ॥ १ ॥

पञ्चदश सामिधेनीरन्वाह ॥ २ ॥

पाञ्चदश्यस्य सिद्धत्वात्पुनर्वच[1]नात् बहुयाजिनोऽपि कपञ्चदश लभ्यन्त इत्युपदेशः ॥ १, २ ॥

त्रीँस्तृचानित्युक्तम् ॥ ३ ॥

प्रणवे प्रणवे समिधमादधाति ॥ ४ ॥

सामिधेनीविवृद्धौ काष्ठानि विवर्धन्ते। प्रतिह्रसमानासु प्रकृतिवत् ॥ ५ ॥

क. 'पञ्चदश सामिधेन्यो दर्शपूर्णमासयोः' (आप. प., ३. २८) इति परिभाषासूत्रादेव पञ्चदशत्वे सिद्धे पुनरत्र पञ्चदशत्वविधानात् सर्वेषामविशेषेण पञ्चदशसामिधेनीपक्षो विकल्पेन सिध्यतीत्युपदेशमतमिति।

1. Ad & B Mss read पुनर्वचनम्

[क]त्रींस्तृचानिति । प्रथमा, सामन्वान् तृचः, 'त्वं वरुण' इत्युत्तरा त्रिष्टुप् । 'ईडेऽग्नि'मिति गायत्री, प्रवोवाजीया उत्तरा, 'समिध्यमानो अमृतस्य राजसि' इति जगती परिधानीया [1]प्रवोवाजीयायाः परावश्यस्य । काम्येष्वेकविंशत्यादिषु प्रथमाया उत्तरे द्वे ईडे अग्निमिति । सामन्वदुत्तरा । त्वामग्ने पुष्करादधीति त्रयस्तृचाः । अग्निमग्न इत्येकादशाऽष्टम्याः । 'पृथु पाजा' इत्यष्टौ समिध्यमानवत्याः । एतासां यथार्थमागमः स्यात् । '[ख]सर्वाणि छन्दांसि' इति गायत्रीत्रिष्टुब्जगत्यो बहुयाजिनः । [ग]अपरिमितं [2]बहुयाजिन एव । नित्यादधिकं [3]प्राकृतानामन्यतमः कल्पः । केचिदष्टाचत्वारिंशतः [घ]परं 'युक्ष्वा हि' इत्येवमादीनामाग्नेयादीनां गायत्रीणामागमः, 'स्त्रियस्तेन यद्गायत्रिय' इति । परिधानीयायाः पुरस्तात् क्षेप इत्युपदेशः ॥ ३-५ ॥

क. 'त्रीँस्तृचानुनुब्रूयात्' (तै. सं. २. ५. १०) इत्यनुवाके यदुक्तं तदत्रानुसन्धेयमिति । तस्यैव सङ्ग्रहेण विवरणं प्रथमेत्यादि । तत्र 'प्र वो वाजा अभिद्यवः' इत्यनुवाके (तै. ब्रा. ३. ५. २) द्वादशर्चः पठिताः । तास्सामिधेन्य इत्युच्यन्ते । अग्निसमिन्धनार्थत्वादासां सामिधेनीत्वम् ।

राजन्यस्य त्रयस्तृचास्सामिधेनीत्वेन पठनीयाः । तदित्थम्—'प्र वो वाजा अभिद्यवः' इति प्रथमा त्रिरभ्यस्ता एकस्तृचो भवति। ततः 'अग्न आयाहि वीतये' 'तं त्वा समिद्भिः, 'स नः पृथु श्रवाय्यम्' इति तिस्र ऋचः एकस्तृचः। 'त्वं वरुण उत मित्रः' इत्यनुवाकान्ते पठिता त्रिष्टु

ख. सर्वाणि छन्दांस्यनुब्रूयाद्बहुयाजिनः (तै. सं. २.५.१०.४) इत्युक्तं ब्राह्मणे । तत्र सर्वशब्देन गायत्री, त्रिष्टुप् जगती इति त्रीणि छन्दांसि गृह्यन्ते । बहुयाजी सोमयाजी कथ्यते । यतस्स बहुभिर्दीक्षणीयादिभिरिष्टिभिः, अग्नीषोमीयादिभिः पशुभिः, ऐन्द्रवायवादिभिर्ग्रहैश्चेष्टवान् । See सायणभाष्य also on this passage. तस्य यजमानस्य, दर्शपूर्णमासयोः छन्दस्त्रयं पठनीयं सामिधेनीषु। तत्र प्रवो वाजाद्या-गायत्र्यः । ताभिस्सह 'समिध्यमानः प्रथमो नु धर्म' इति त्रिष्टुप्, त्वामग्ने प्र दिव आहुतं घृतेन, इति जगती च प्रयोज्ये । तेन छन्दस्त्रयप्रयोगस्सम्पद्यते इति ।

ग. तत्रैव 'अपरिमितमनुब्रूयादिति यदुक्तं, तदपि सोमयाजिन एवेति ।

घ. आगन्तूनामन्ते निवेश इति न्यायेन परिधानीयायाः पूर्वं धाय्या शब्दितानां प्रक्षेप इति ॥

1. Ad, An, & P. Ms omit प्रवोवाजीयायाः
2. B² Ms reads बहुयाजिनाम्
3. *Ibid* प्राकृतानाञ्च

**'समिद्धो अग्न आहुते'त्यभिज्ञायैकामनूयाजसमिधमवशिष्य सर्वमिध्मशेषमभ्यादधाति परिधानीयायां वा ॥ ६ ॥**

प्च्छन्दस्का त्रिरावृत्ता एकस्तृचः। एवं त्रयस्तृचा राजन्यस्येति॥ वैश्यस्य तु सप्तदश सामिधेन्यः। ता इत्थं सम्पादनीयाः—'प्र वो वाजा' इति प्रथमा त्रिरभ्यस्ता ३, 'ईडे अग्निं विपश्चितं' इत्यृग्वेदपठितैका गायत्रीछन्दस्का ४, 'अग्न आ याहि वीतये' इत्याद्या दश क्रमशः। १४, तदनन्तरं 'समिध्यमानो अमृतस्य राजसि' इत्यृग्वेदपठितया ऋचा त्रिरभ्यस्तया १७, समाप्तिः। एवं सप्तदशत्वसम्पत्तिः। अनन्तरं 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इत्यारभ्य 'अष्टाचत्वारिंशतमनुब्रूयात्पशुकामस्य' इत्यन्ताः काम्यसामिधेनीपक्षा ब्राह्मणे उक्ताः। तद्विषयक उत्तरग्रन्थः। तत्र एकविंशतिसामिधेनीपक्षे—प्र वो वाजा "इति त्रिरभ्यस्ता ३, ततः "ईडे अग्निं विपश्चितं", "अग्ने शकेम ते वयं" इति द्वे ५, ततः सामन्वान् 'अग्न आयाहि' तं त्वा समिद्भिः, स नः पृथु श्रवाय्यम् इति तृचः ८, तदुत्तरा 'ईडेऽन्यो नमस्यः' इति ९, ततः "त्वामग्ने पुष्करादधि, इत्याद्या नव ऋचः त्रयस्तृचाः १८, 'आ जुहोत' इत्यन्तिमा त्रिरभ्यस्ता २१, एवमेकविंशतिसंख्यासम्पत्तिः। त्रिंशदादिपक्षस्ततः उपरितनग्रन्थः। तत्र अष्टम्या 'अग्निं दूतं वृणीमहे' इत्यस्या ऊर्ध्वं अग्निमग्न इत्येकादशर्चः, एवं 'समिध्यमानो अध्वरे' इत्यस्या अनन्तरं 'पृथुपाजा अमर्त्यः' इत्यष्टावृचश्च तत्तत्संख्यासम्पत्तये यथापेक्षं पठनीया इति ॥ मन्त्रपाठश्चेत्थम्—

प्र वो वाजा अभिद्यवः। हविष्मन्तो घृताच्या। देवान् जिगाति सुम्नयुः ॥ १ ॥
अग्न आयाहि वीतये। गृणानो हव्यदातये। निहोता सत्सि बर्हिषि ॥ २ ॥
तं त्वा समिद्भिरङ्गिरः। घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य ॥ ३ ॥
स नः पृथुः श्रवाय्यम्। अच्छा देव विवाससि। बृहदग्ने सुवीर्यम् ॥ ४ ॥
ईडेऽन्यो नमस्यस्तिरः। तमाꣳसि दर्शतः। समग्निरिध्यते वृषा ॥ ५ ॥
वृषो अग्निः समिध्यते। अश्वो न देववाहनः। तꣳहविष्मन्त ईडते ॥ ६ ॥
वृषणं त्वा वयं वृषन्। वृषाणस्समिधीमहि। अग्ने दीद्यतं बृहत् ॥ ७ ॥
अग्निं दूतं वृणीमहे। होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम् ॥ ८ ॥
समिध्यमानो अध्वरे। अग्निः पावक ईड्यः। शोचिष्केशस्तमीमहे ॥ ९ ॥
समिद्धो अग्न आहुत। देवान्यक्षि स्वध्वर। त्वꣳहि हव्यवाडसि ॥ १० ॥
आजुहोता दुवस्यत। अग्निं प्रयत्यध्वरे। वृणीध्वꣳहव्यवाहनम् ॥ ११ ॥
(तै. ब्रा. ३. ५. २.)

त्वं वरुण उत मित्रो अग्ने। त्वां वर्धन्ति मतिभिर्वसिष्ठाः। त्वे वसु
सुषणनानि सन्तु। यूयं पात स्वस्तिभिस्सदा नः ॥ १२ ॥

ईडे अग्निं विपश्चितं गिरा यज्ञस्य साधनम्। श्रुष्टिवानं धितावानम् ॥
(ऋ. सं. ३. १. २८. २) १ ॥

समिध्यमानो अमृतस्य राजसि हविष्कृण्वन्तं सचसे स्वस्तये। विश्वं सधस्थे
द्रविणं यमिन्वस्या तिथ्यमग्ने नि च धत्त इत्वरः ॥ (ऋ. सं. ४.१.२२.२) २ ॥

वेदेनाऽग्निं त्रिरुपवाज्य स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्य, आसीन उत्तरं परिधिसन्धिमन्ववहृत्य प्रजापतिं मनसा ध्यायन् दक्षिणा प्राञ्चमृंजु सन्ततं ज्योतिष्मत्याघारमाघारयन् सर्वाणीध्मकाष्ठानि संस्पर्शयति ॥ ७ ॥

[1]उपवाजनं दीप्त्यर्थम्। [2]तस्मान्नाऽवभृथे। 'अन्ववहृत्य' प्रवेश्य तेन सन्धिना संस्पर्शनम्। [3]केचिन्मनसा ध्यानं 'प्रजापतये स्वाहा' इति ॥ ६–७ ॥

आघारयोर्वेदत्यृजू प्राञ्चौ होतव्यौ तिर्यञ्चौ व्यतिषक्तावव्यतिषक्तौ वा ॥८॥

व्यतिषङ्गः संसर्गः ॥ ८ ॥

स्रुवेण स्थाल्या आज्यमादाय 'आप्यायतां ध्रुवा घृतेन' इत्यवदायाऽवदाय ध्रुवामाप्यायतीति सार्वत्रिकम्॥९॥

'अग्नीत्परिधींश्चाग्निञ्च त्रिस्त्रिस्सम्मृड्ढी'ति सम्प्रेष्यति ॥ १० ॥

इति द्वादशी कण्डिका

क. 'अप्स्ववभृथेन चरन्ति' इत्यपां होमाधिकरणत्वविधानात् तत्र दीप्तेरभावात् अर्थलोपाद्बाध इति।

1. P. Ms reads उपवाजयति
2. B Ms reads अतस्तन्नावभृथे
3. केचित्सन्धिस्पर्शनं मनसा ध्यानम् An & B Mss.

१. आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ॥ ( तै. सं. १. ६. ५. १ )

प्रतिस्रुवमाप्यायनं [क]वीप्सावचनात्। [ख]सार्वत्रिकवचनात् दर्शपूर्णमासाभ्यामन्यत्रापि। ध्रुवाग्रहणात् [1]ध्रुवामेव। [ग]ध्रुवाकार्येऽपि चरावभिपूरणमेव, यावदर्थमित्यतो [2]नाऽऽप्यायते ॥ ९, १० ॥ (१२)

इध्मसन्नहनैस्सहस्फ्यैर्हृते स्फ्यैर्वाऽऽग्नीध्रोऽनुपरिक्रामं परिधीन्यथापरिधितमन्वग्रं त्रिस्त्रिः सम्मृज्य 'अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितं वाजजित्यायै सम्मार्ज्म्यग्निमन्नादमन्नाद्याय' इति त्रिरग्निं प्राञ्चम् ॥१॥

स्फ्योऽपि सम्मार्गार्थः। तस्मादवभृथे स्फ्येन[3] सम्मार्गः। 'अनुपरिक्रामं' गत्वा तस्य तस्य समीपम्, [4]नैकस्थानस्थः। 'यथापरिधितं' तथा। 'अन्वग्रं' अग्रे क्रियापरिसमाप्तिः। अग्निमग्नीदित्यपि लभ्यते। [5]तथाऽग्नेः पूर्वम् ॥ १ ॥

'[१]भुवनमसि' इत्यग्रेण ध्रुवां जुहूं वाऽञ्जलिं कृत्वा "[२]जुहेही"ति जुहूमादत्त 'उपभृदेही'त्युपभृतम् ॥२॥

क. अवदायाऽवदाय इति सूत्रे वीप्साग्रहणात् इति।

ख. सूत्रे सार्वत्रिकमिति कथनात् दर्शपूर्णमासाभ्यामन्यत्र स्थलेऽपि यत्र ध्रौवादवदानं तत्रैवमाप्यायनमभिघारणं च कर्तव्यमिति।

ग. प्रायणीयेष्टौ आज्येन चरुमभिपूर्य तदाज्यं गृहीत्वा पूर्वोक्ता देवता यजेत (वि. आप श्रौ. १०-२१-१२) इति पक्षान्तरमुक्तम्। तस्मिन् पक्षे ध्रुवाकार्यापन्नथासः। तत्र नाऽऽप्यायनं, किन्तु अभिपूरणमेव यावत्प्रयोजनमिति।

1. B Ms reads ध्रुवामेवाप्यायति
2. P. Ms reads नापूर्यते
3. B[2] Ms तेन
4. P. Ms. B[1] Ms, & An नैकत्रस्थः ; B[2] Ms नैकस्थः
5. B. Ms reads तदाग्नेः पूर्वम्

१. भुवनमसि वि प्रथस्वाऽग्ने यष्टरिदं नमः ॥ ( तै. १. १. १२. १ )
२. जुह्वेह्यग्निस्त्वा ह्वयति देवयज्यायै ॥ ,,
३. उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्यायै । ,,

‘[क]नम’ इति लिङ्गात् [1]इह नमस्कारार्थोऽञ्जलिः। ‘[ख]भुवनमसी’ति [2]यज्ञाभिधानम्, ‘विप्रथस्व’ इति यजमानस्य। अतोऽवभृथे ‘[3]आपो यष्टूय’ इत्येतावानूहः’ [ग]न तूपदेशः॥ २॥

**‘सुयमे मे अद्य घृताची भूयास्तꣳस्वावृतौ सूपावृतौ’ इत्युपभृति जुहूमत्यादधाति ॥३॥**

**मुखतोऽभिहृत्य मुखत उपावहरति ॥४॥**

**सर्वत्रैवमत्याधानोपावहरणे भवतः ॥५॥**

[घ]अ[4]त्याधानोपावहरणग्रहणानि तूष्णीमन्यत्र ॥ ३-५ ॥

**न च संशिञ्जयति नाभिदेशे च स्रुचौ धारयति ॥ ६ ॥**

‘न च संशिञ्जयति’ न शब्दं करोति। असंशिञ्जनधारणयोः सार्वत्रिकत्वम्, [5]चशब्दात्॥ ६॥

क. मन्त्रे ‘भुवनमसि विप्रथस्वाग्ने यष्टरिदं नमः’ (तै. सं., १.१.१२) इति नमश्शब्दयोगान्नमस्कारार्थोऽयमञ्जलिरित्यवगम्यत इति।

ख. उत्तरत्र ‘अग्ने यष्टः’ इत्यत्राग्निशब्दश्रवणात् तत्राग्नेरभिधेयत्वेऽपि ‘भुवनमसि’ इत्यत्र भुवनशब्देन यज्ञस्याऽभिधानम्। अतश्चाऽवभृथे ‘भुवनमसि’ इत्यस्य नोहः, किन्तु ‘अग्ने यष्ट’ इत्यत्र स्थाने ‘आपो यष्टूयः’ इत्यूहः कर्तव्य इति।

ग. अग्नेर्यष्टृत्वस्य भाक्तत्वात् असमवेतार्थत्वेनोहो न कर्तव्य इत्युपदेशमतम्। इदञ्च मीमांसकमतानुसारि। परमनेन विरुध्द्धे सायणाचार्यः। See सा. भा., on तै. सं., १.१.१२.१)

घ. अत्याधानं उपरि स्थापनम्। उपावहरणं अपादानम्।

1. An & Ad, omit इह
2. Ad यथाभिधानम्
3. B[2] Ms. ‘आपो यष्टूय इदं नमः’ इत्येतावानूहः
4. B. Ms reads अत्याधानोपावहरणानि.
5. B[2] Ms omits चशब्दात्.

[1]'अग्नाविष्णू मावामवक्रमिषम्' इत्यग्रेण स्रुचोऽपरेण मध्यमं परिधिमनवक्रामं प्रस्तरं दक्षिणेन पदा दक्षिणातिक्रामत्युदक्सव्येन ॥७॥

[2]एतद्वा विपरीतम् ॥८॥

'विष्णोः स्थानमसि' इत्यवतिष्ठते ॥९॥

[क]अन्तर्वेदि दक्षिणः पादो भवति अवग्रस्सव्यः॥१०॥

अथोर्ध्वस्तिष्ठन्दक्षिणं परिधिमन्ववहृत्य ॥ ११ ॥

इति त्रयोदशी कण्डिका ॥

'अनवक्रामं' अनवक्रम्यानवक्रम्य ॥ ७ (८-११) (१३)

[3]'समारभ्यो र्वो अध्वर' इति प्राञ्चमुदञ्चमृजुं सन्तत ज्योतिष्मत्याघारमाघारयन् सर्वाणीध्मकाष्ठानि संस्पर्शयति ॥ १ ॥

'ज्योतिष्मति' ज्वलति ॥ १ ॥

[4]'यत्कामयेत प्रमायुकस्स्यादिति जिह्मं तस्ये'त्युक्तम् ॥ २ ॥

'जिह्मः' वक्रः ॥ २ ॥

क. 'अन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्यः' इतिश्रुतेरनुकरणमिदम् (तै. सं. २.६.११.२.)

१. अग्नाविष्णू मावामवक्रमिषं विजिहाथां मा मा सन्ताप्तम् ॥ ( तै. सं १. १. ११. १ )

२. विष्णोस्स्थानमसीत इन्द्रो अकृणोद्वीर्याणि ॥ ( ,, )

३. समारभ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान्त्स्वाहा ॥

४. यं कामयेत प्रमायुकस्स्यादिति जिह्मं तस्याऽऽघारयेत् प्राणमेवाऽस्माज्जिह्मं नयति ताजक् प्रमीयते ( तै. सं. २. ५. ११. ७. ) इति श्रुतेरेकदेशग्रहणमिदम् ॥

ऊर्ध्वमाघार्यं विच्छिन्द्याद्द्वेष्यस्य ॥ ३ ॥

[1]ऊर्ध्वं ऋजुरिति कर्तृवादः[क] ॥३॥

वृषण्वा ॥ ४ ॥

वृषण्वा विकिरन्[ख] मनसा शत्रुं ध्यात्वा ॥ ४ ॥

न्यञ्चं वृष्टिकामस्य ॥ ५ ॥

द्वेष्यस्येत्येके ॥ ६ ॥

ऊर्ध्वमाघारं स्वर्गकामस्य भूयिष्ठमाहुतीनां जुहुयात् ॥ ७ ॥

अपि वा नाऽऽघारयेत्पूर्वार्धे पश्चार्धे वा जुहुयात् ॥ ८ ॥

हुत्वाऽभिप्राणिति ॥ ९ ॥

हुत्वा उपरिप्राणनमाघारस्य ॥५-९॥

'बृहद्भा' इति स्रुचमुद्गृह्य 'पाहि माऽग्ने दुश्चरितादा मा सुचरिते भज' इत्यसंस्पर्शयन् स्रुचौ प्रत्याक्रामति एते एवाऽऽक्रमणप्रत्याक्रमणे मन्त्रवती भवतः ॥ १० ॥

ते एव मन्त्रवती भवतः, नाऽन्यत् । विधिस्तु सर्वत्राऽसंपर्शन-मुक्त्वा तदाघारार्थं 'प्राण आघार' इति ॥१०॥

[१]'मखस्य शिरोऽसि' इति जुह्वा ध्रुवां द्विस्त्रिर्वा समनक्ति ॥ ११ ॥

क. कर्तृविशेषणमित्यर्थः ।

ख. यजमानशत्रुं मनसा ध्यायन् प्रशिथिलामाहुतिं जुहुयादिति ।

1. An reads ऊर्ध्वं ऋजुम्

१. मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्ताम् । ( तै. सं. १, १, १२, १. )

ध्रुवासमञ्जनमाज्यस्य,[क] 'ज्योतिषा ज्योतिरङ्क्ताम्' इति लिङ्गात् ॥ ११ ॥

'उन्नीतँ राय' इति स्रुवेण ध्रुवाया आज्यमादाय 'सुवीराय स्वाहा' इति जुहूमभिघार्य जुह्वोऽपादाय 'यज्ञेन यज्ञस्सन्तत' इति ध्रुवां प्रत्यभिघार्याऽऽयतने स्रुचौ सादयित्वा ॥ १२ ॥

इति चतुर्दशी कण्डिका ॥

[1]जुह्वोऽपादायेति छान्दसः। न च मन्त्रः पुनरुपादाने। [ख]पुनरुन्नीत-मित्युपदेशः ॥ १२ ॥ (१४)

'क इदमध्वर्युर्भविष्यति स इदमध्वर्युर्भविष्यति यज्ञो यज्ञस्य वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवस्सुवर्विष्णोस्स्थाने तिष्ठामि' इति इध्मसन्नहनानि स्फ्य उपसंगृह्य वेद्याश्च तृणमव्यन्तमादायोत्तरतः प्रवरायाऽवतिष्ठेते पूर्वोऽध्वर्युरपर आग्नीध्रः ॥ १ ॥

क इदमित्यवस्थानमन्त्रः। इध्मसन्नहनानि [२]स्फ्येन गृहीत्वा वेद्याश्च तृणमव्यन्तमविगतान्तं मध्यवर्ति तस्य प्रच्यावनं, '[३]वेद्यां 'तृणमपि-सृजति' इति लिङ्गात्। न मुच्यते वेद्या इत्युपदेशः। वेद्या उत्तरतः, वरुणप्रघासेषु प्रतिप्रस्थातुर्न प्रवरः, अध्वर्युणा वृतत्वात् ॥ १ ॥

क. ध्रुवागतस्यैवाज्यस्य समञ्जनम्, न ध्रुवायाः। मन्त्रे ज्योतिषा (आज्येन) ज्योतिः (आज्यम्) समङ्क्तामित्याज्येनैव समञ्जनप्रतिपादनादिति।

ख. 'जुह्वोपादाय' इत्यत्र पूर्ववाक्योपात्तयोः स्रुवस्याऽऽज्यस्यैवोपस्थितेः तत्सहितस्य मन्त्रस्य परं निवृत्तौ कारणाभावात् पुनरुन्नयन 'उन्नीतँराय:' इति मन्त्रः प्रवर्तत एवेत्यु-पदेशमतमिति।

1. Ad. Ms. reads :–जुह्वोऽपादायेति, न मन्त्रः पुनः

२. P. Ms. & An स्फये गृहित्वा

३. B[2] Ms. reads वेद्याः

इध्मसन्नहनानि आग्नीध्रोऽन्वारभ्य 'क इदमग्नीद्भविष्यति स इदमग्नीद्भविष्यती'ति मन्त्रं सन्नमति ॥ २ ॥

'ब्रह्मन् प्रवरायाऽऽश्रावयिष्यामी'ति ब्रह्माणमामन्त्र्य 'आश्रावय,ओश्रावय, श्रावय,ओमाश्रावये'ति वा श्रावयात ॥ ३ ॥

आश्रावणादिषु प्रथमद्वितीययोः त्रिमात्रत्वम्, श्रावयेत्यत्रापि। [क]ब्रूहिप्रेष्यादीनां व्याकरणसिद्धा प्लुतिः ॥ २, ३ ॥

'अस्तु श्रौषडि'त्याग्नीध्रोऽपरेणोत्करं दक्षिणामुखस्तिष्ठन् स्फ्यं सम्मार्गांश्च धारयन् प्रत्याश्रावयति ॥ ४ ॥

इहापि प्रत्याश्रावणं [ख]दक्षिणामुखस्य ॥ ४ ॥

आग्नीध्रे सोमे ॥ ५ ॥

[ग]आग्नीध्रे सोमे दर्शपूर्णमासविकाराणामपि ॥ ५ ॥

सर्वत्रैवमाश्रुतप्रत्याश्रुते भवतः ॥ ६ ॥

इति पञ्चदशी कण्डिका ॥

यथेह[घ] प्रयुक्ते तथा सर्वत्र ॥ ६ ॥ (१५)

इत्यापस्तम्बश्रौतसूत्रभाष्ये द्वितीयप्रश्ने चतुर्थः पटलः ॥

क. ब्रूहि, प्रेष्य, श्रौषट्, वौषट्, आवह एतेषां ( पा. सू; ८. २. ९१. ) पाणिनिसूत्रेण प्लुतस्सिद्ध इति ।

ख. अपरेणोत्करं दक्षिणामुखस्तिष्ठन् इत्यविशेषेणैव दक्षिणामुखत्वश्रवणात् ।

ग. सोमयागे दर्शपूर्णमासविकृतिषु आग्नीध्राख्यमण्डपे स्थित्वा प्रत्याश्रावणं कर्तव्यमिति ।

घ. आश्रावणादिषु बहवः पक्षाः श्रुताः–' आश्रावय, ओश्रावय' इत्यादयः । तेषु यं कञ्चित्पक्षं स्वेच्छयाऽत्र स्वीकुर्यात् परन्तु योऽत्र पक्षः स्वीकृतः तेनैव पक्षेणाग्रिमक्रतुषु सर्वत्र निर्वाहः कार्य इति ।

अथ द्वितीयप्रश्ने पञ्चमः पटलः ॥

अनपव्याहरन्तः प्रचरन्ति ॥ १ ॥

'अनपव्याहरन्तः इत्यन्यवचनप्रतिषेधस्सयजमानानाम् । केचिच्चतुर्णाम् । [क]प्रचरणम् अवदानग्रहणादीज्यान्तम् । [ख]केचित्सर्वम्[1] । तेषामिडायामनर्थकं [2]वाग्यमविधानम् । [3]अपव्याहारे कृते 'यद्गृक्त' इति प्रायश्चित्तम् । पुनरारम्भ एतेषु कालेषु प्रायश्चित्तान्तरविधानार्थम् ॥ १ ॥

आश्रावयिष्यन्नाऽन्यदाश्रावणाद्ब्रूयादाश्राविते नान्यदाग्नीध्रः प्रत्याश्रावणात् । प्रत्याश्राविते नान्यदध्वर्युर्यजेति वचनात् । यजेत्युक्ते होता नाऽन्यद्वषट्कारात् । यद्यन्यद्ब्रूयात्पुनरेवाऽऽश्रावयेत् । व्याहृतीर्वा जपेत् ॥ २ ॥

सर्वमाश्रावणादि पुनः । व्याहृतिजपो [4]वा शेषकर्तुः ॥ २ ॥

ऊर्ध्वज्ञुमासीनं होतारं वृणीते'अग्निर्देवो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्वद्भरतवदमुवदमुवदि'ति यथार्षेयो यजमानः । त्रीन्यर्षीषि मन्त्रकृतो वृणीते । अपि वैकं द्वौ त्रीन् पञ्च । न चतुरो वृणीते न पञ्चाऽतिप्रवृणीते ॥ ३ ॥

क. कियदादि कियदवध्यनपव्याहरणम् तत्स्पष्टयितुं प्रचरणमिति । एतावानेत्र प्रचरणशब्दार्थः न कृत्स्नप्रयोग इति ।

ख. सङ्कल्पप्रभृति ब्राह्मणतर्पणान्तः सर्वोऽपि प्रयोगः प्रचरणपदार्थ इति वदन्ति । तन्न युक्तम् ; यद्येवमनेनैव सर्वत्र वाग्यमनस्य सिद्धत्वेन पुनरिडाभक्षणे 'वाग्यती आसत आ मार्जनात्' (आप. श्रौ., ३. ३. १) इति वाग्यमविधानमनर्थकं स्यादिति ।

1. Ad reads सर्वत्र
2. B. & P. Mss read वाग्यमनम्
3. B2 Ms. अपव्याहारे तु 'ऋक्त' इत्येतत्प्रायश्चित्तम्
4. B Ms omits वा

इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होता ॥ ४ ॥

वरणस्य पुनः त्रित्वविधानात् [क]द्विपितुरपि त्रय एव व्रियन्ते, न षट् । एक एकतो द्वावेकतः । यदि पञ्च, द्वावेकतः, त्रय एकतः; [ख]शुङ्गशैशिरिदर्शनात् ॥ ३, ४ ॥

पुरोहितस्य प्रवरेण राजा प्रवृणीते ॥ ५ ॥

'ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितार' इति प्रवरशेषमाह ॥ ६ ॥

अपि वा नाऽऽर्षेयं वृणीते मनुवदित्येव ब्रूयात् ॥ ७ ॥

ब्राह्मणस्यापि [ग]राज्यप्राप्तस्य पुरोहितप्रवर एव, पुनर्विधानात् ॥ ५–७ ॥

सीदति होता ॥ ८ ॥

होतुरुपांशु नाम गृह्णाति 'मानुष' इत्युच्चैः ॥ ९ ॥

वेद्यां तृणमपिसृजति ॥ १० ॥

इति षोडशी कण्डिका ॥

होतैव सीदति, न मैत्रावरुणो व्रियमाणो होतृकार्यापन्नोऽपि पशौ ॥ ७–१० ॥ (१६)

घृतवतिशब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रांतोऽपरेणाऽऽघारसम्भेदं पञ्च प्रयाजान् प्राचो यजति ॥ १ ॥

क. द्विपिताऽत्र द्व्यामुष्यायणो । यः स्वकुलमपरित्यजन्नेव कुलान्तरं प्रविशति ।

ख. अथ द्व्यामुष्यायणानां कुलानां यथा शुङ्गशैशिरयोः, भरद्वाजाश्शुङ्गाः । कताश्शैशिरयः ( आप. श्रौ. २४-७-२.३ ) इति सूत्रकारेण द्वयोः कथनादिति ।

ग. अत्र राजशब्देन राज्यं कुर्वन् ब्राह्मणोऽप्यभिधीयते, प्रवरकाण्डे पठितस्य पुनरत्र विधानात् । अतश्च प्राप्तराज्यस्य ब्राह्मणस्यापि पुरोहितप्रवर एवेति भाष्यकर्तुराशयः । परमिदमवेष्ट्याधिकरणविरुद्धम् । तत्राभिषिक्तस्य क्षत्रियस्यैव राजशब्दवाच्यत्वस्य सिद्धान्तितत्वात् । ( See पू. मी. शा; २-३-२ )

[1]आघारयोस्सङ्क्रमः आघारसम्भेदः तमपरेण ॥ १ ॥

प्रतिदिशं वा समिधः पुरस्तात्तनूनपातन्दक्षिणत इडः पश्चाद्बर्हिरुत्तरतस्स्वाहाकारं मध्ये ॥२॥ सर्वान्वैकध्यम् ॥ २,३ ॥

प्रतिदिशमपि प्राचः प्रागपवर्गान् ॥२,३॥

आश्रावमाश्रावं प्रत्याश्राविते समिधो यजेति प्रथमं सम्प्रेष्याति यज यजेतीतरान् ॥ ४ ॥

[2]आश्राव्याऽऽश्राव्य न पुरोनुवाक्यासम्प्रैषः, प्रथमं प्रयाजं प्रति ॥४॥

यं कामयेताऽभितरं वसीयान् स्यादित्याभिक्रामं तस्य जुहुयादवतरं पापीयानिति प्रतिक्रामं, न वसीयान्न पापीयानिति समानत्र तिष्ठन् ॥ ५ ॥

'अभितरं' सुष्ठुतरम्। 'वसीयान्' वसुमत्तरः, [3]धनवान्वा। 'अभिक्रामं' [क]आभिक्रम्याऽभिक्रम्येति[4]। नित्ये कामः, 'अभिक्रामं जुहोति' इति वचनात्। 'अवतरम्' अवकृष्टतरम्। 'पापीयान्'[ख] दरिद्रः; 'पुनरेवैनं वामं वसूपावर्तत' इति। पापिष्ठो वा। 'प्रतिक्रामं' प्रतिनिवृत्य ॥५॥

क. अभिक्रम्य अग्निसमीपं गत्वा। 'अभिक्रामं जुहोत्यभिजित्यै' इत्यभिक्रमणस्य फलार्थत्वदर्शनात् नित्यानुष्ठानेऽपि फलसाधनत्वमिति।

ख. See आप. श्रौ. ९-२१-७ for पापीयान्

1. Ad reads आघारसंभेदः आघारसङ्क्रमः
2. B[2] Ms read आश्राव्य
3. An.edu. श्रेष्ठधनवान्वा; B[2] Ms omits धनवान्वा
4. An.ed reads अभिक्रम्याग्निसमीपम्

त्रीनिष्ट्वाऽर्धमौपभृतस्य जुह्वामानीयोत्तराविष्ट्वा प्रत्याक्रम्य शेषेण ध्रुवामभिघार्याऽनुपूर्वं हवींष्यभिघारयत्युपभृतमन्ततः ॥ ६ ॥

न हवींष्याभिघारयेद्द्वेष्यस्य। आयतने स्रुचौ सादयति ॥ ७ ॥

इति सप्तदशी कण्डिका ॥

समानयनं बर्हिःस्वाहाकारार्थम्, 'चतुर्थाष्टमयोः'[क] इति लिङ्गात्[ग]। न प्रयाजशेषेणाऽऽज्यस्थाल्या अभिघारणम्। 'नाऽन्तर्वेदि गृहीतस्य प्रतीचीनं हरन्ति' इति वचनात् ॥ ६, ७ ॥ (१७)

इत्यापस्तम्बश्रौतसूत्रभाष्ये द्वितीयप्रश्ने पञ्चमः पटलस्समाप्तः ॥

अथ षष्ठः पटलः ॥

आग्नेयस्सौम्यश्चाऽऽज्यहविषावाज्यभागौ चतुर्गृहीताभ्याम् ॥ १ ॥

आज्यभागाविति कर्मनामधेयम् ॥ १ ॥

जमदग्नीनान्तु पञ्चावत्तम्, अप्यजामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चावत्तं कुर्वीत सर्वत्र ॥ २ ॥

पञ्चावत्तं सर्वत्र [ख]वषट्कारप्रदानेषु ॥ २ ॥

क. पशौ 'चतुर्थाष्टमयोः प्रतिसमानीय' (आप. श्रौ., ७-१४-२) इति चतुर्थादिप्रयाजार्थं अष्टमादिप्रयाजार्थञ्च समानयनमुक्तम्। ते च बर्हिःप्रयाजस्वाहाकारप्रयाजविकाराः। अतस्समानयनं बर्हिस्स्वाहाकारार्थं गम्यत इति। बर्हिःप्रयाजार्थं स्वाहाकारप्रयाजार्थं चेत्यर्थः।

ख. याज्यान्ते वषट्कारमुक्त्वा यत्र देवताभ्यो हविः प्रदीयते तद्वषट्कारप्रदानम्।

अवद्यन्नमुष्मा अनुब्रूहीति पुरोनुवाक्यां सम्प्रेष्यति। अवदायाऽवदाय स्रुवेण प्रस्तरबर्हिस्समज्य जुहूपभृतावादाय दक्षिणातिक्रम्याऽऽश्राव्य प्रत्याश्राविते‍ऽमुं यजेति याज्यामिति सार्वत्रिकम् ॥ ३ ॥

प्रधानेषु अवद्यन्नमुष्मा अनुब्रूहीति। 'इन्द्राय[क] पुरोडाशानामवदीयमानानामनुब्रूहि' इति [1]लिङ्गात्[ग]। उपदेशोऽङ्गेषु[ग]। प्रधानेषु हविः प्रत्यभिघारणमेव कृत्वा अनुब्रूहीति। आप्यायनं कृत्वा प्रस्तरबर्हिःसमञ्जनम्[ख], न तु दर्विहोमेषु। आश्रुतप्रत्याश्रुतासम्बन्धात्[2]। उपदेशो दर्विहोमेष्वपीति ॥ ३ ॥

उत्तरार्धपूर्वार्धेऽग्नये जुहोति दक्षिणार्धपूर्वार्धे सोमाय समं पूर्वेण।

उभे ज्योतिष्मति ॥ ४ ॥

पूर्वमाज्यभागं प्रति स्रुचावादत्ते न निदधात्यास्विष्टकृतः ॥ ५ ॥

अनाज्यभागेऽपि पशौ स्रुचौ न स्थाप्येते, स्वकालोऽस्तीति ॥ ४, ५ ॥

आज्यभागावन्तरेणैता आहुतीर्जुहोति ॥ ६ ॥

क. प्रधानयागेष्वेव इन्द्राय पुरोडाशानामित्यादिदर्शनात् तत्रैवेदं, नाङ्गेष्विति, अङ्गेष्वपीत्युपदेशमतात्।

ख. आप्यायनबर्हिस्समञ्जने सवषट्कारेष्वेव[क] प्रधानेषु न दर्विहोमेषु, तत्राश्रवणादीनामभावात् इति भाष्यकारमतम् 'अवदायावदाय' इत्यविशेषश्रवणात्तत्रापि भवतीत्युपदेशमतमिति।

1. अवदीयमानानामिति लिङ्गात् B. Ms.
2. P & B Mss read श्रवणात्

आज्यभागावन्तरेण वषट्काराहुतीस्सर्वाः । आघारसम्भेदेन सह विकल्पः । केचिद्दार्विहोमाहुतीराज्यभागावन्तरेण, [1]आघारसम्भेदेन वषट्काराहुतीरिति ॥ ६ ॥

प्रत्याक्रम्य जुह्वामुपस्तीर्य 'मा भेर्मा संविक्था मा त्वा हि ँसिषम्मा ते तेजोऽपक्रमीद्भरतमुद्धरेमनुषिञ्च । अवदानानि ते प्रत्यवदास्यामि नमस्ते अस्तु मा मा हि ँसीः' इत्याग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं तिरीचीनमवद्यति । पूर्वार्द्धाद्द्वितीयमनूचीनं चतुरवत्तिनः । पश्चार्द्धात्तृतीयं पञ्चावत्तिनः ॥ ७ ॥

अवदानानीति [क]जात्यभिधानम्, मा भूत् प्रकरणोपरोध इति । अतोऽवदानद्वित्वेऽपि न निवर्तते । अवदानैकत्वेऽपि नोह्यते पित्र्यायाम् । 'ति[2]रीचीनं' दक्षिणाग्राभ्यामङ्गुलिभ्याम् । 'अनूचीनं' प्रागग्राभ्याम् ॥ ७ ॥

असम्भिन्दन्मांससंहिताभ्यामङ्गुलीभ्यामङ्गुष्ठेन च पुरोडाशस्याऽवद्याति ॥ ८ ॥

इत्यष्टादशी कण्डिका ।

'असंभिन्दन्' यथा द्वयोरवदानयोरसङ्गमः ॥ ८ ॥ (१८)

स्रुवेणाऽऽज्यसान्नाय्ययोः ॥ १ ॥

आनुजावरस्य पूर्वार्धात् प्रथममवदानमवदाय पूर्वार्धे स्रुचो निदध्यात् । मध्यादपरमवदाय पश्चार्धे स्रुचः ॥ २ ॥

क. 'जात्याख्यायामेकस्मिन्' इत्यनेन एकस्मिन्नप्यवदाने बहुवचनप्रयोग इति ।

1. An. edn. सम्भेदे वषट्काराहुतीः
2. B Ms reads तिरश्चीनम्

'आनुजावरः'[क] अगुरोर्योऽनुगामी, तस्य नैमित्तिकम्॥ १, २॥

पूर्वप्रथमान्यवद्येज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीस्स्यात्।

अपरप्रथमानि कनिष्ठस्य कानिष्ठिनेयस्य यो वाऽऽनुजावरो यो वा बुभूषेत्[ख] ॥ ३ ॥

ज्यैष्ठिनेयः ज्येष्ठायाः पुत्रः। कानिष्ठिनेयः पश्चात्परिणीतायाः[1]। प्रथमज्येष्ठः, न मृतज्येष्ठः। यो वाऽऽनुजावर इति काम्यम्[2], यस्तस्मात् प्रच्युतिमिच्छति। नैमित्तिकं पूर्वमुभे वा विकल्प्येते ॥ ३ ॥

अथ यदि पुरोहितः पुरोधाकामो वा यजेत पूर्वार्द्धात् प्रथममवदानमवदाय पूर्वार्द्धे स्रुचौ निधाय पूर्वार्द्धेऽग्नेर्जुहुयात् ॥ ४ ॥

अवदानान्यभिघार्य 'यदवदानानि तेऽवद्यन् विलोमाकार्षमात्मनः। आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनरि'ति हविः प्रत्यभिघार्य, अग्नयेऽनुब्रूह्यग्निं यजेति सम्प्रैषौ ॥ ५ ॥

क. योऽल्पतेजस्त्वात् समानजातीयानामनुगन्ता भवति स 'आनुजावरः' इति रुद्रदत्तः। अगुरुं अनुजं यो विद्याधनादिनोपजीवति ज्येष्ठः, स आनुजावर इति रामाण्डारः। अनु पश्चात् जातो भ्राताऽनुजः। तस्मादप्यवरः तद्वद्वर्तमानः आनुजावरः। अत्यन्तनिकृष्ट इत्यर्थः इति सायणभाष्ये on तै. सं. २-३-४.

ख. भवितुमिच्छति बुभूषति भूतिं प्राप्तुमिच्छतीति यावत्। See तै. ब्रा. २·१·८·१ सायणभाष्यम्.

1. Ad & B Mss read पश्चादानीतायाः
2. Ad कामः

क'अग्नयेऽनुब्रूहि' इति वचनात्[1] मा भून्मूर्धन्वते निशुत्वते वेति ॥ ४, ५ ॥

आज्यं प्रश्च्योत्यापिदधादिवाऽप्राक्षिणन् हुत्वाऽऽज्ये-नाऽन्ववश्चोतयाति ॥ ६ ॥

'अपिदधत्' [2]स्थगयन्निव । 'अप्राक्षिणन्' अहिंसन्, अग्निमवदानं वा । 'अन्ववश्च्योतयति' क्षारयति ॥ ६ ॥

आघारसम्भेदेनाऽऽहुतीः प्रतिपादयाति ॥ ७ ॥

'संभेदः' सङ्गमः, तस्मिन् प्रथमाहुतिः ॥ ७ ॥

स्रुच्यमाघारमभिजुहोति पूर्वां पूर्वां संहिताम् ॥ ८ ॥

उत्तराः स्रुच्यस्याभिहोमाः । संहिताः लग्नाः ॥ ८ ॥

यं द्विष्यात्तं वृषन्मनसाऽऽहुतीर्जुहुयात् ॥ ९ ॥

शत्रुं विकिरन् मनसा ॥ ९ ॥

यदा वीतार्चिर्लेलायतीवाऽग्निरथाऽऽहुतीर्जुहोति ॥ १० ॥

लेलायति [3]अल्पिकार्चिषि ॥ १० ॥

आज्यहविरुपांशुयाजः पौर्णमास्यामेव भवति वैष्ण-वोऽग्नीषोमीयः प्राजापत्यो वा ॥ ११ ॥

प्रधानमेवोपांशु ॥ १२ ॥

क. अयमाशयः—याज्यापुरोनुवाक्ययोः मूर्धन्वतोऽग्नेः श्रवणात् मूर्धन्वतेऽग्नयेऽनुब्रूहि इति प्राप्नोति । तन्मा भूदित्येतदर्थमत्र वचनमिति । अस्याऽसङ्गतत्वं प्रतिपादयति रुद्रदत्तः See आप. श्रौ., Vol. I P. 131 A. S. B. edn.

1. B Ms reads अनुब्रूहीति वचनमन्यत्र मा भूत्
2. P. Ms. स्तम्भयन्निव
3. Ibid उल्मुकार्चिषि

[क]प्रधानदेवताभिधानमुपांशु, तदर्थत्वाद्धविषः। हविरपि प्रधानम्, तेन[1] [ख]धर्मसिद्धेः। तस्मादभिधानमप्युपांशु[2]। सौम्ये घृतशब्दस्य वैश्वदेव्या-श्चाऽनूबन्ध्यायाम्। उभयस्यायुक्तम्। देवताया एवेत्युपदेशः॥ ११, १२॥

विष्णुं बुभूषन् यजेत ॥ १३ ॥

इत्येकोनविंशी कण्डिका ॥

अग्नीषोमौ भ्रातृव्यवान् ॥ १ ॥

आग्नेयवदुत्तरैर्हविर्भिर्यथादेवतं प्रचरति ॥२॥

समवदाय दोहाभ्याम् ॥ ३ ॥

दध्नोऽवदाय शृतस्यावद्येत्। एतद्वा विपरीतम्। सर्वाणि द्रव्याणि स्रुङ्मुखेन जुहोति ॥४॥

स्रुवेण पार्वणौ होमौ। 'ऋषभं वाजिनं वयं पूर्ण-मासं यजामहे। स नो दोहता॰ सुवीर्य॰ रायस्पोष॰ सहस्रिणम्। प्राणाय सुराधसे पूर्णमासाय स्वाहा' इति पौर्णमास्याम्। 'अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना। सा नो दोहता॰ सुवीर्य॰ राय-स्पोष॰ सहस्रिणम्। अपानाय सुराधसेऽमावास्यायै स्वाहा' इत्यमावास्यायाम् ॥५॥

क. अत्र प्रधानशब्देन देवता, द्रव्यमित्युभयमप्यभिधीयते। प्रधानयागस्वरूपनिष्पादकत्वा-दुभयोः। अतो देवतावाचकश्शब्दो द्रव्यवाचकश्शब्दश्चोपांश्वेव प्रयोक्तव्य इति।

ख. तिस्रोऽनूबन्ध्या एके समामनन्ति मैत्रावरुणीं वैश्वदेवीं बार्हस्पत्यामिति, उपांशु वैश्वदेव्या मध्यतश्चरन्ति (आप. श्रौ. १३, २३, १०, ११, १३) इति आनुबन्ध्याया वैश्वदेव्या उपांशुत्वमुक्तम्। तत्र द्रव्यवाचकपदे उपांशुत्वमिति।

1. Ad & An read तद्धर्मसिद्धेः
2. Ad अभिधानमुपांशु

न विकृतौ[क] पार्वणहोमौ, समुदायेज्याङ्गत्वात्तस्य; समुदायस्याऽन्यत्राऽभावात्, पार्वणाविति[ख] वचनाच्च ॥ १-४ ॥

नारिष्ठान् होमाञ्जुहोति ' दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन । नारिष्ठयोः प्रशिषमीडमानो देवानान्दैव्येऽपि यजमानोऽमृतोऽभूत् ॥ यं वां देवा अकल्पयन्नूर्जो भाग॰ शतक्रतू । एतद्वां तेन प्रीणानि तेन तृप्यतम॰हहौ ॥ अहं देवाना॰सुकृतामस्मि लोके ममेदमिष्टन्न मिथुर्भवाति । अहं नारिष्ठावनुयजामि विद्वान् यदाभ्यामिन्द्रो अदधाद्भागधेयम् ॥ अदारसृद्भवत देव सोमाऽस्मिन् यज्ञे मरुतो मृडतानः । मा नो विददभिभामो अशस्तिर्मा नो विदद्वृजना द्वेष्या या ॥ ६ ॥

इति विंशी कण्डिका

ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञाना॰ हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्स्वाहाकृताहुतिरेतु देवान् ॥ सन्ते मनसा मनस्सम्प्राणे प्राणं दधामि ते सं व्याने समपानं दधामि ते । परिगृह्य यजमानोऽमृतोऽभूच्छन्न एधि द्विपदे शञ्चतुष्पदे स्वाहा' इत्येतैः प्रतिमन्त्रम् ॥ १ ॥

एष उपहोमानां कालोऽनन्तरं वा प्रधानात्, प्राग्वा समिष्टयजुषः ॥ २ ॥

क. See Also पू. मी. ८. ४. पार्वणयोस्त्वप्रवृत्तिः etc.

ख. पर्वसम्बन्धिनौ पार्वणौ इति पार्वणशब्दव्युत्पत्तिः । पर्वशब्देन पूर्णमास्यमावास्याकालिकौ कर्मसमुदायावुच्येते इति ।

[क]क्वचिदादेशः 'सन्ते मनसा मन' इति ॥ १, २ ॥

जुह्वामुपस्तीर्य सर्वेषां हविषामुत्तरार्द्धात्सकृत्सकृत् स्विष्टकृतेऽवद्यति । द्विः पञ्चावत्तिनः ॥ ३ ॥

नाऽवदानमन्त्रः स्विष्टकृति, साधारणत्वात् शेषस्य च ध्रुवावत् ॥ ३ ॥

दैवतैः सौविष्टकृतैडचातुर्द्धाकारणिकानामुत्तरमुत्तरं ज्यायः ॥ ४ ॥

द्विरभिघार्य न हविः प्रत्यभिघारयति ॥ ५ ॥

अग्नये स्विष्टकृतेऽनुब्रूह्यग्निं स्विष्टकृतं यजेति सम्प्रैषौ । उत्तरार्धपूर्वार्धे जुहोत्यसंसक्तामितराभिराहुतिभिः ॥ ६ ॥

प्रत्यभिघारणं स्विष्टकृदर्थम् । अतो न सौम्ये[1] पश्ववदानेषु च त्र्यङ्गेभ्यः स्विष्टकृदिति ॥ ४–६ ॥

प्रत्याक्रम्य जुह्वामप आनीय "वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सꣳ शतधारमेतम् । स नः पितरं पितामहं प्रपितामहꣳ स्वर्गे लोके पिन्वमानो बिभर्तु स्वाहा" इत्यन्तःपरिधि निनयति निनयति ॥ ७ ॥

इत्येकाविंशी कण्डिका ॥

वैश्वानरे हविरिति प्राचीनावीती हि[ख]रण्यकेशिमतात् ॥ ७ ॥ (२१)

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते द्वितीयप्रश्ने षष्ठः पटलः ॥

द्वितीयप्रश्नश्च समाप्तः ॥

क. अत्र 'सन्ते मनसा' इत्यारभ्य 'चतुष्पदे स्वाहा' इत्यन्त एको मन्त्र इति भाष्यकारमतम् । 'सन्ते मनसा' इति प्रतीकगृहीतं 'सन्ते मनसा मनस्सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहा' इति यजुरेको मन्त्रः । 'सं प्राणे प्राणं' इत्यारभ्य स्वाहान्तोऽपरो मन्त्र इति केषांचित् पक्षः । अत्र द्वतीयपक्षमेवाङ्गीकरोति रुद्रदत्तः प्रथमपक्षं खण्डयति च । See आप. श्रौ., Vol. I P 135. 4. A. S. B. edn.

ख. पितृप्रीत्यर्थत्वेन पित्र्यत्वात् प्राचीनावीतमिति हिरण्यकेशिनोऽभिप्रायः । भाष्यकारमते तु अग्न्यभिधानान्न तदिति ॥ परं न हिरण्यकेशिसूत्रे प्राचीनावीतं दृश्यते ।

1. B² Ms reads प्रत्यभिघारणं, स्विष्टकृदभावात् after सौम्ये

श्रीः

# आपस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

## तृतीयः प्रश्नः

### प्रथमः पटलः

इडामेके पूर्वं समामनन्ति प्राशित्रमेके ॥ १ ॥

यदेडा प्रथमं तदाऽभिघार्येडां प्राशित्रम्। इडा देवता वृष्टिः। तदर्थत्वाद्द्रव्यमपीडा। प्रकृष्टैर्मन्त्रैः प्राश्यत इति प्राशित्रम् ॥ १ ॥

आग्नेयं पुरोडाशं प्राञ्चं तिर्यञ्चं वा विरुज्याऽङ्गुष्ठेनोपमध्यमया चाऽङ्गुल्या व्यूह्य मध्यात्प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वा "अज्यायो यवमात्रादाव्याधात्कृत्यतामिदम्। मा रूरुपाम यज्ञस्य शुद्धꣳ स्विष्टमिदꣳ हविः" इति ॥ २ ॥

'विरोजनम्' भञ्जनम्। उप समीपे मध्यमायाः या [1]सोपमध्यमा। 'पिप्पलम्' फलम्, "सुपिप्पला ओषधीः कृधि" इति लिङ्गात्। 'अज्याय' इति यवमात्र एव। आख्यानविशेष[2]गलिङ्गविरोधात्। यवेन सम्मितमिति यद्यवादधिकं न भवति तत्प्रमाणं [3]प्राशित्रम्। अतस्तत्राऽप्यनिवृत्तिर्मन्त्रस्य ॥ २ ॥

एवमुत्तरस्याऽवद्यति ॥ ३ ॥

उपस्तीर्य नाऽभिघारयत्येतद्वा विपरीतमपि वोपस्तृणात्यभि च घारयति ॥ ४ ॥

अत्रैवाऽस्य परिहरणप्राशनमेके समामनन्ति ॥ ५ ॥

1. सा इति नास्ति B. 2.
2. विशेषेण 'ख' 'ब' पु.
3. प्राशित्रहरणम् 'घ' पु.

न सान्नाय्यात्प्राशित्रम् । [1]" सर्वेभ्यो हविर्भ्यः " इति [क]इडाया- मुक्तत्वात् ॥ ३–५ ॥

**इडापात्र उपस्तीर्य सर्वेभ्यो हविर्भ्य इडां समवद्यति चतुरवत्तां पञ्चावत्तां वा ॥ ६ ॥**

पञ्चावत्तां चतुरवत्तिनोऽपि ॥ ६ ॥

**" मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् । दक्षिणार्धादसम्भिन्दन्नवद्याम्येकतो मुखाम् " इत्या- ग्नेयस्य पुरोडाशस्य दक्षिणार्धात्प्रथममवदानमवद्यति ॥ ७ ॥**

**सम्भेदाद्द्वितीयम् ॥ ८ ॥**

संम्भेदा[2]द्दक्षिणार्ध्य[ख]एव ॥ ८ ॥

**पूर्वार्धाच्च यजमानभागमणुमिव दीर्घम् ॥ ९ ॥**

यस्मात्पूर्वं गृहीतं तस्मादेव तृतीयम् । अणुमिव तनु- मिव ॥ ९ ॥

**तमाज्येन सन्तर्प्य ध्रुवाया उपोहति ॥ १० ॥**

[3]तमेकीभूतमाज्येन सर्वतस्तर्पयति । अवचनाद्वीप्सायाः सान्नाय्ययजमानभागस्याऽपि [4]तर्पणम् ॥ १० ॥

क. ' सर्वेभ्यो हविर्भ्य इडां समवद्यति ' आप. श्रौ. (३. १. ६.) इतीडावदाने सर्वह- विरुपादानकत्वविधानादितरत्र न तथा इति प्रतीतेरिति ।

ख. तस्यैव प्रकृतत्वादिति भावः ।

1. सर्वेभ्योभवति 'घ' पु.
2. दक्षिणार्ध्यादेव Ad & B².
3. तम् इति नास्ति 'ब' पु. दीर्घमित्यधिकम् B².
4. सन्तर्पणम् 'ब' & An Mss.

अपि वा दक्षिणार्धादवदाय यजमानभागमथ सम्भेदात् ॥११॥

दक्षिणार्धादवदायेडां यजमानभागमवद्यति । तत इडासम्भेदात् । द्रव्यैकत्वान्न पुनर्मन्त्रः । यजमानभागव्यवायादावृत्तिमेके ॥११॥

एवमुत्तरस्याऽवद्यति ॥१२॥

इति प्रथमा कण्डिका ॥

अभिघार्येडां होत्रे प्रदाय दक्षिणेन होतारमातिक्रामत्यनुत्सृजन् ॥ १ ॥

अनुत्सृजन्निडां [1]दक्षिणेनाऽतिक्रामत्यध्वर्युः ॥ १ ॥

होतेडयाऽध्वर्युं परिगृह्णाति ॥ २ ॥

होतेडां दक्षिणेन नयत्यध्वर्योः, यथोत्तरा भवतीडा ॥ २ ॥

अपि वा प्राचीमिडामपोह्य दक्षिणत आसीनस्स्रुवेण होतुरङ्गुलिपर्वणी अनक्ति ॥ ३ ॥

सन्धिः पर्व ॥ ३ ॥

अपरमङ्क्त्वा पूर्वमेतद्वा विपरीतम् ॥ ४ ॥

उपसृष्टोदकाय पुरस्तात्प्रत्यङ्ङासीन इडाया होतुर्हस्तेऽवान्तरेडामवद्यति ॥ ५ ॥

अध्वर्युः प्रथममवदानमवद्यति स्वयं होतोत्तरमेतद्वा विपरीतम् ॥ ६ ॥

स्वयं होतेति वचनान्न मैत्रावरुणस्याऽवान्तरेडा ॥ ४–६ ॥

1. दक्षिणातिक्रामति 'ख' 'ङ'.

लेपादुपस्तरणाभिघारणे भवतः ॥ ७ ॥

द्विरभिघारयेत्पञ्चावत्तिनः । उपहूयमानामन्वारभेतेऽध्वर्युर्यजमानश्च । "दैव्या अध्वर्यव उपहूता" इत्यभिज्ञायो-"पहूतः पशुमानसानी"त्यध्वर्युर्जपत्यु"पहूतोऽयं यजमान" इत्यभिज्ञायैतमेव मन्त्रं यजमानः ॥ ८ ॥

प्रतिप्रस्थातुरप्यन्वारम्भो वरुणप्रघासेषु इडाया उपहूत इति जपश्च ॥ ८ ॥

उपहूतायामग्रेणाऽऽहवनीयं ब्रह्मणे प्राशित्रं परिहरति ॥ ९ ॥

तस्मिन् प्राशिते होताऽवान्तरेडां प्राश्नाति "वाचस्पतये त्वा हुतं प्राश्नामि, सदसस्पतये त्वा हुतं प्राश्नामि" इति ॥ १० ॥

प्राशिताया"मिडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः । तस्यास्ते भक्षिवाणस्स्याम सर्वात्मानस्सर्वगणा" इति यजमानपञ्चमा इडां प्राश्य ॥ ११ ॥

इति द्वितीया कण्डिका ॥

अग्रेणाऽऽहवनीयमिति [1]वचनात् अन्यत्राऽन्तराऽग्नी नीयत इति केचित् । प्रदर्शनं वा ॥ ९–११ ॥

वाग्यत आसत आमार्जनात् ॥ १ ॥

"[१]मनो ज्योतिर्जुषता"मित्यद्भिरन्तर्वेदि प्रस्तरे मार्जयित्वाऽऽग्नेयं पुरोडाशं चतुर्धा कृत्वा बार्हिषदं करोति बार्हिषदं वा कृत्वा चतुर्धा करोति ॥ २ ॥

1. नियमात् 'ख' 'ढ'.

१. मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञँ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् । तै. सं. १. ५. ३. ७.

शिरस्यपामानयनं [क]मार्जनम् । प्रस्तरादप [1]आदाय । मन्त्रावृत्तिश्च । [ख]अभिघारणचतुर्धाकरणे आग्नेयविकाराणां चरुपुरोडाशानां न मुख्यधर्मः । पुरोडाशग्रहणाच्चा[2]ऽनाग्नेयस्याप्याग्नेयकार्यापन्नस्योभयं भवतीति । अग्नीषोमीयेषु प्रधानेषु । पुरोडाशग्रहणान्नोभयं चरावित्युपदेशः ॥ २ ॥

**तं यजमानो व्यादिशतीं "दं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीध" इति ॥ ३ ॥**

**अग्नीत्प्रथमान् होतृप्रथमान्वा ॥ ४ ॥**

कृते व्यूहने आग्नीध्रभागस्याऽपि व्यादेशः । संस्पृशता तमभिमृशेदिति । 'इदं ब्रह्मण' इत्येवमादिनानाभूतानामादेशो व्यादेशः ॥ ३, ४ ॥

**इदं यजमानस्येति अध्वर्युर्यजमानभागं निर्दिश्य स्थविष्ठमग्नीधे षडवत्तं सम्पादयति ॥ ५ ॥**

**सकृदुपस्तीर्य द्विरादधदुपस्तीर्य द्विरभिघारयति ॥ ६ ॥**

परिहरणमाग्नीध्रभागस्यापि । [ग]'पात्राभ्यामितरयो'रिति [3]व्यपदेशात् ॥ ५, ६ ॥

क. प्रस्तरे जलमासिच्य तज्जलं हस्तेनादायेडाभक्षकाणां शिरसि प्रोक्षणं मार्जनमिति भाष्याशयः । हस्तेऽपामासेचनमेव मार्जनमिति रुद्रदत्तः ।

ख. 'आग्नेयं पुरोडाशमभिघारयति' (आप. श्रौ. २. १०. ४.) 'आग्नेयं पुरोडाशं चतुर्धा कृत्वा' (आप. श्रौ. ३. ३. २.) इत्युभयत्राप्याग्नेयपदश्रवणात् तस्य चोद्देश्यसमर्पकत्वेन तत्वेन विवक्षायोगात् तस्य प्रथमश्रुतत्वेन प्राथम्यमात्रबोधकत्वमङ्गीकृत्य तद्विकारेषु चरुपुरोडाशेषु प्राथम्ययोगात् अभिघारणादि प्राप्नोति इति न मन्तव्यमिति ।

ग. 'पृथक्पात्राभ्यामितरयोः' (आप. श्रौ. ३. ३. १०.) इत्युत्तरत्र पात्रभेदश्रवणादत्रैकेनैव पात्रेण परिहरणमिति ।

1. अपादाय इति wrong reading B[2].
2. नाग्नेयस्याप्याग्नेयकार्यापन्नस्य 'ख'. चाग्नेयकार्यापन्नस्याप्यनाग्नेयस्य 'ङ'.
3. उपदेशात् 'घ'. पु.

अपि वा द्विरुपस्तृणाति द्विरादधाति द्विरभिघारयति ॥७॥

" अग्नेराग्नीध्रमस्यग्नेश्शामित्रमासि नमस्ते अस्तु मा मा हिंꣳसी" रित्याग्नीध्रो भक्षयति ॥ ८ ॥

वेदेन ब्रह्मयजमानभागौ परिहरति ॥ ९ ॥

पृथक्पात्राभ्यामितरयोः ॥१०॥

'पृथिव्यै भागोऽसी'ति होता भक्षयति, 'अन्तरिक्षस्य भागोऽसी'त्यध्वर्युः, 'दिवो भागोऽसी'ति ब्रह्मा ॥११॥

दक्षिणाग्नावन्वाहार्यं[क] महान्तमपरिमितमोदनं पचति ॥१२॥

क्षीरे भवतीत्येके ॥१३॥

तमभिघार्याऽनभिघार्य वोद्वास्याऽन्तर्वेद्यासाद्य ॥१४॥

इति तृतीया कण्डिका ॥

' दक्षिणसद्भ्य उपहर्तवा ' इति सम्प्रेष्यति ॥ १ ॥

इतरे दक्षिणतो गच्छन्ति । ब्रह्मा तु गत एव । तस्मा अपि दीयते ॥ १ ॥

ये ब्राह्मणा उत्तरतस्तान् यजमान आह 'दक्षिणत एते'ति ॥ २ ॥

तेभ्योऽन्वाहार्यं ददाति ' ब्राह्मणा अयं व ओदन ' इति ॥ ३ ॥

क. अन्वाहार्यो नाम दक्षिणार्थ ओदनः ।

अन्वाहार्यो दक्षिणा यतः अतो 'ब्रह्मण ओदनम्' इति मन्त्रः। प्रतिग्रहणं च दक्षिणेन हस्तेन। सर्वदक्षिणानां व्यावृत्य प्रतिगृह्णीयादिति लिङ्गात्[1] ॥ २, ३ ॥

प्रतिगृहीत 'उत्तरतः परीते'ति सम्प्रेष्यति ॥ ४ ॥

उत्तरतः परीतेति याजमानम्; [क]बहुवचनान्तत्वात्[2], तेन चोक्तत्वाद्दक्षिणत[3] एतेति। उपदेशस्तु [ख]आध्वर्यवम् 'उक्तस्सम्प्रैष' इत्येकवचनात् ॥ ४ ॥

हविश्शेषानुद्वास्याऽपिसृज्योल्मुके 'ब्रह्मन् प्रस्थास्यामस्समिधमाधायाऽग्नीत्परिधींश्चाऽग्निञ्च सकृत्सकृत्सम्मृड्ढि' इति सम्प्रेष्यति ॥ ५ ॥

अनुज्ञातो ब्रह्मणाऽऽग्नीध्रस्समिधमादधा'त्येषा ते अग्ने समित्तया वर्धस्व चाऽऽच प्यायस्व वर्धताञ्च ते यज्ञपतिरा च प्यायतां वर्धिषीमहि च वयमा च प्यासिषीमहि स्वाहे'ति ॥ ६ ॥

[ग]अनुज्ञातो ब्रह्मणा यदाऽध्वर्युस्तदाऽऽग्नीध्रस्समिधमादधातीति ॥ ५, ६ ॥

क. यजमानकर्तृकोऽयं सम्प्रैषः। 'परीत' इति बहुवचनश्रवणात्। अध्वर्युकर्तृकत्वे होत्राग्नीध्रयोरुभयोरेव प्रेष्यत्वात् द्विवचनं स्यान्न बहुवचनमिति।

ख. उपदेशमतं तु आध्वर्यव एवायं प्रैषः। याजमाने उक्तस्सम्प्रैषोऽन्वाहार्यस्य च दानम् (आप. श्रौ. ४. ११. ४.) इत्येकस्यैव सम्प्रैषस्य वचनात् तस्य च 'ये ब्राह्मणा' इत्यनेनैव गतार्थत्वात् द्वितीयोऽयं प्रैषोऽध्वर्युकर्तृक एवेति।

ग. 'ब्रह्मन् प्रस्थास्याम' इत्यनूयाजार्थं अध्वर्युणा प्रार्थितो ब्रह्मा यदा तमनुजानाति तदाऽऽग्नीध्रस्समिधमादध्यादिति।

1. ताःस्वायैत्र हस्ताय दक्षिणायानयदिति इत्यधिकं 'क'. पु.
2. बहुवचनत्वात् इति 'घ' पु. बहुवचन चोदितत्वात् इति.
3. दक्षिणत एवेति: Ad.

पूर्ववत्परिधीन् सकृत्सकृत्सम्मृज्या"ग्ने वाजजिद्वाजं त्वा ससृवाॺ सं वाजञ्जिगिवाॺ सं वाजिनं वाजजितं वाजजित्यायै सम्माज्र्म्यग्निमन्नादमन्नाद्याये"ति सकृदग्निं प्राञ्चम् ॥ ७ ॥

इध्मसन्नहनान्यद्भिस्संस्पर्श्य "यो भूतानामाधिपती रुद्रस्तंतिचरो वृषा। पशूनस्माकं मा हिॺसीरेतदस्तु हुतं तव स्वाहे"त्यग्नौ प्रहरत्युत्करे वा न्यस्यति शालायां वल्जायां परोगोष्ठे परोगव्यूतौ वा ॥ ८ ॥

इति चतुर्थी कण्डिका ॥

अध्वर्योरिध्मसन्नहनाधानम् ( अत्र रुद्रो देवतेति केचित्। तदानीमपामुपस्पर्शनम् ) बलजा तृणराशिर्धान्यराशिर्वा । [1]वंशेषु भवस्सम्पुटो वा । 'परोगोष्ठे' गोष्ठात्परतः । उपरि गोष्ठ इत्युपदेशः । गव्यूतिर्गोमार्गः । 'परो गव्यूतिः' परतो गोमार्गात् ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते तृतीयप्रश्ने प्रथमः पटलः ॥

अथ द्वितीयः पटलः ॥

औपभृतं जुह्वामानीय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽग्रेणाऽऽघारसम्भेदं प्रतीचस्त्रीननूयाजान् यजन्त्याश्रावमाश्रावं प्रत्याश्राविते'देवान् यजे'ति प्रथमं सम्प्रेष्याति 'यज यजे'तीतरौ ॥ १ ॥

[ प्रतीचः प्रत्यगपवर्गं ][2] देवान् यजेति सर्वार्थः । उत्तरावनूयाजौ [3]द्वियजौ । दग्निकाऽनूयाजसमित् । यावदग्रेणाऽऽघारसम्भेदम् ॥ १ ॥

1. तेषु भव इति 'ब' पु.
2. कोष्ठान्तर्गतो भागः केवलं 'क' पुस्तक एवोपलभ्यते ।
3. द्वियजाविति $B^2$.

पूर्वार्धे प्रथमं समिधि जुहोति, मध्ये द्वितीयम्, प्राञ्चमुत्तमं संस्थापयन्नितरावनु सम्भिद्य ॥ २ ॥

तस्या मध्ये मध्यमः। उत्तमस्तस्याऽपरेण। सोऽप्यग्रेणाऽऽघारसम्भेदं प्राक्संस्थः । इतरौ तेन सम्भिद्येते ॥ २ ॥

प्रत्याक्रम्याऽऽयतने स्रुचौ सादयित्वा वाजवतीभ्यां व्यूहति ॥ ३ ॥

वाजवतीभ्यामिति परिज्ञानार्थं उत्तरो विधिः ॥ ३ ॥

"[1]वाजस्य मा प्रसवेने"ति दक्षिणेन हस्तेनोत्तानेन सप्रस्तराञ्जुहूमुद्यच्छति । "[2]अथासपत्नानि"ति सव्येनोपभृतं नियच्छति ॥ ४ ॥

'उद्ग्राभं चे'ति जुहूमुद्यच्छति 'निग्राभञ्चे'त्युपभृतं नियच्छति ॥ ५ ॥

नियच्छति पीडयति[1] ॥ ४, ५ ॥

"ब्रह्म देवा अवीवृधन्नि"ति प्राचीं जुहूं प्रोहति ॥ ६ ॥

"[3]अथासपत्नानि"ति सव्येनोपभृतं प्रतीचीं बहिर्वेदि निरसित्वा प्रोक्ष्यैनामभ्युदाहृत्य जुह्वा परिवीननक्ति 'वसुभ्यस्त्वे'ति मध्यमं 'रुद्रेभ्यस्त्वे'ति दक्षिण'मादित्येभ्यस्त्वे'त्युत्तरम् ॥ ७ ॥

1. निपीडयति इति 'ब'. पु.

१. वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् ।

२. अथाऽसपत्नाँ इन्द्रो मे निग्राभेणाधराँ अकः ।

३. अथाऽसपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ॥ (तै. सं. १. १. १३. १ ).

अञ्जनमेकदेशस्य, समस्तस्थाऽसम्भवात् ॥ ६, ७ ॥

न प्रस्तरे जुहूं सादयति ॥ ८ ॥

"सञ्जानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावता"मिति विधृतीभ्यां प्रस्तरमपादाय बर्हिषि विधृती अपिसृज्य स्रुक्षु प्रस्तरमनक्ति ॥ ९ ॥

इति पञ्चमी कण्डिका ॥

"[1]अक्तꣳरिहाणा" इति जुह्वामग्रम्। 'प्रजां योनि' मित्युपभृति मध्यम्। 'आप्यायन्तामाप ओषधय' इति ध्रुवायां मूलम्। एवं त्रिः ॥ १ ॥

अपि वा 'दिव्यङ्क्ष्वे'ति जुह्वामग्रम्। 'अन्तरिक्षेऽङ्क्ष्वे'ति उपभृति मध्यम्। 'पृथिव्यामङ्क्ष्वेति' ध्रुवायां मूलम् ॥ २ ॥

एवं पुनः ॥ ३ ॥

अथाऽपरम्– 'पृथिव्यै त्वे'ति ध्रुवायां मूलम्। 'अन्तरिक्षाय त्वे'त्युपभृति मध्यम् 'दिवे त्वे'ति जुह्वामग्रम् ॥ ४ ॥

'आयुषे त्वे'त्यक्तस्य तृणमपादाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां पाणिभ्यां प्रस्तरं गृहीत्वा जुह्वां प्रतिष्ठाप्याऽऽसीन आश्राव्य प्रत्याश्राविते सम्प्रेष्यति 'इषता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषस्सूक्तवाकाय सूक्ता ब्रूहि" इति ॥ ५ ॥

१. अक्तꣳरिहाणा वियन्तु वयः (तै. सं. १. १. १३. १).
२. प्रजां योनिं मा निर्मृक्षम् (तै. सं. १. १. १३. १).

अक्तस्येति वचनात् [1]वेदतृणस्याप्यपादीयत एकदेशः । दक्षिणोत्तराभ्यां दक्षिण उपरि हस्तः । [2]आसीनस्याऽऽश्रावणम्, तिष्ठतोऽवचनात् । [3]प्रत्याश्रावणमलोपार्थम् ॥ ५ ॥

**अनूच्यमाने सूक्तवाके 'मरुतां पृषतयस्स्थे'ति सह शाखया प्रस्तरमाहवनीये प्रहरति ॥ ६ ॥**

सहशाखयेति सपवित्रा प्रह्रियते । [क]कालमात्रश्चाऽस्याः । अतस्सवनीयेषु सूक्तवाको [4]नोच्यते । 'प्रस्तर आहुतिः सूक्तवाको याज्या' इति [5]श्रुतेः [ख]मन्त्रेण च प्रहरणम् ॥ ६ ॥

**न स्वाहा करोति ॥ ७ ॥**

[6]तत्राऽप्राप्तस्य[ग] स्वाहाकारस्य प्रतिषेधाद्वषट्कारप्रदानेष्वपि मन्त्रवत्सु वपाहोमादिषु स्वाहाकारः कर्तव्य इति ज्ञापयति ।

क. शाखाया अप्युपयुक्तत्वेन प्रतिपत्तिसापेक्षत्वात् प्रस्तरप्रहरणकालविशिष्टप्रहरणान्तरमेव शाखोद्देशेन विधीयते । न प्रस्तरवत् प्रहरणरूपयागीयद्रव्यत्वम्, येन मन्त्रप्राप्तिर्भवेत् । अतश्च यत्र केवलं शाखाप्रहरणमेव सवनीयहविरादौ तत्र न सूक्तवाकमन्त्रप्राप्तिरिति । ( See पू. मी. ४, २, ४ + ६, ९, १४. ) सूक्तवाको नाम तत्रेष्टिपशुषु इष्टानां यागीयदेवतानामनुसङ्कीर्तनार्थः " इदं द्यावापृथिवी " इत्यादिः " नमो देवेभ्यः " इत्यन्तोऽनुवाको होत्रा पठनीयः ।

ख. " मरुतां पृषतयस्स्थ " इति मन्त्रमुक्त्वा प्रस्तरमग्नौ प्रक्षिपेदिति ।

ग. वषट्कारप्रदानत्वात्स्वाहाकारस्य प्राप्तिर्नास्ति । इदमत्राभिसंहितम्—'स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयत ' इति वचनात् यद्यपि हविःप्रदाने स्वाहाकारवषट्कारयोः विकल्पः प्रतीयते, तथापि यजतिचोदनाचोदितेषु वषट्कारः जुहोतिचोदनाचोदितेषु स्वाहाकार इति जैमिनिकात्यायनापस्तम्बादिभिर्महर्षिभिः व्यवस्थित एव सोऽङ्गीकृतः । एवञ्च प्रकृते प्रस्तरप्रहरणस्य यागरूपत्वेन वषट्कारस्यैव प्राप्तेः स्वाहाकारस्याऽप्राप्ततया प्रतिषेधो न घटते । क्रियते च प्रतिषेधः । तेनेदमवगम्यते-यागरूपत्वेऽपि यत्राऽऽध्वर्यवः करणमन्त्रः, तत्रान्ते स्वाहाकारः प्रयोक्तव्य इति । अतश्च तथाप्राप्तस्य निषेधः वपायागादौ निषेधाभावात्स प्रयोक्तव्य इति ।

1. अपनीयत इति $B^2$ & Ad.
2. Ad & An read आसीनस्याश्रवणम्.
3. B. Ms omits प्रत्याश्रावणमलोपार्थम्.
4. अनूच्यते इति 'घ' पु.
5. Ad reads श्रुतिः
6. Ad & An read तत्र प्राप्तस्य.

केचित्तु स्वाहाकारप्रतिषेधाद्वषट्कारप्रदानेष्वपि यद्यदग्नौ प्राक्षिप्यते[1] समिदादि तत्र तत्र स्वाहाकारं कुर्वन्ति ॥ ७ ॥

न विधूनोति, नाऽवधूनोति, न विक्षिपति, न प्रमार्ष्टि, न प्रतिमार्ष्टि, नानुऽमार्ष्टि, नोदञ्चं प्रहरेत् ॥ ८ ॥

विधूननं [2]कम्पनम् । अवधूननम् अवाचीनकम्पनम् । [3]विक्षेपो विचालनम् दाक्षिणत उत्तरतो वा ॥ ८ ॥

तिर्यञ्चं हस्तं धारयन् कर्षन्निवाऽऽहवनीये प्रहरति ॥ ९ ॥

न प्रतिश्रृणीयादित्युक्तम् ॥ १० ॥

प्रतिशरणमङ्गारेषु कुट्टनम् । कअत्यग्रमतिगताग्रमग्नेः ॥ ९, १० ॥

प्रथयित्वा प्रहरेद्यं कामयेत स्त्र्यस्य जायेतेति ॥ ११ ॥

आशीः प्रति प्रस्तरमवसृजति ॥ १२ ॥

इति षष्ठी कण्डिका ॥

अवसृजति विमुञ्चति ॥ १२ ॥

न्यञ्चं हस्तं पर्यावर्तयन् ॥ १ ॥

अग्नीद्गमयेति सम्प्रेष्यति ॥ २ ॥

क. अत्र न प्रतिश्रृणाति, उपरीव प्रहरति, नात्यग्रं प्रहरेत्, न पुरस्तात्प्रत्यस्येत् प्राञ्चं प्रहरति, न विष्वञ्चं वियुयात्, ऊर्ध्वमुद्यौति, हस्तेन योयुष्यते' (तै. सं. २.६.९.) इत्येते ब्राह्मणोक्ता धर्मा अनुसन्धेयाः । तत्रत्यस्यैव अत्यग्रपदस्य व्याख्यानमिदम् ।

1. क्षिप्यते इति 'ख' 'ङ'.
2. धूननम् इति 'क' 'ख' 'ङ'.
3. क्षेपणमिति B².

त्रिरञ्जलिनाऽऽग्नीध्रोऽविष्वञ्चं प्रस्तरमूर्ध्वमुद्यौति "रोहितेन त्वाऽग्निर्देवतांगमय" त्वित्येतैः प्रतिमन्त्रम् ॥ ३ ॥

[1]अविष्वञ्चं असर्वतोऽग्रम् ॥ १-३ ॥

अथैनमाहाऽग्नीध्रोऽनुप्रहरेति ॥ ४ ॥

यत्प्रस्तरात्तृणमपात्तं तदनुप्रहरति 'स्वगा तनुभ्य' इति ॥ ५ ॥

'एतदेतदि'ति त्रिरङ्गुल्या निर्दिश्याऽग्निमभिमन्त्रयत 'आयुष्पा अग्नेऽस्यायुर्मे पाही'ति, ॥ ६ ॥

ध्रुवाऽसीत्यन्तर्वेदि पृथिवीमभिमृशति, ॥ ७ ॥

अथैनमाग्नीध्र'स्संवदस्वे'ति, ॥ ८ ॥

'अगानग्नी'दित्यध्वर्युराह, 'अगन्नि'त्याग्नीध्रः, 'श्रावये'त्यध्वर्युः, 'श्रौषडि'त्याग्नीध्रः ॥ ९ ॥

एतदित्येतावता संवादः प्रहृतमेतदिति ॥

मध्यमं परिधिमन्वारभ्य सम्प्रेष्याति 'स्वगा दैव्या होतृभ्यस्स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूही'ति ॥ १० ॥

अनूच्यमाने शंयुवाक आहवनीये परिधीन् प्रहराति ॥ ११ ॥

न [क]परिधिप्रहरणार्थः शंयुवाकः । अतो गार्हपत्येऽपि भवति ॥ ४ ॥

क. सूक्तवाको याज्या इतिवत् शंयुवाको याज्या इत्यश्रवणान्न परिधिप्रहरणाङ्गत्वमिति ।

1. B. Ms reads विष्वञ्चं सर्वतोऽग्रम् ।

[१]"यं परिधिं पर्यधत्था' इति मध्यमं 'यज्ञस्य पाथ' उपसमित"मितीतरौ ॥ १२ ॥

उत्तरार्धस्याऽग्रमङ्गारेषूपोहति ॥ १३ ॥

'यजमानं प्रथते'ति परिधीनाभिमन्त्र्य जुह्वामुपभृतोऽग्रमवधाय[२] 'सꣳस्रावभागा' इति सꣳस्रावेणाभिजुहोति ॥ १४ ॥

सँस्रावेणाभिहोमः[1] परिध्यङ्गम् । अतो न[2] गार्हपत्ये । केचित् वसवो वै रुद्रा आदित्याः सँस्रावभागा इति देवतार्थत्वाद्भिनापि परिधिभिः गार्हपत्येऽपि कुर्वन्ति ॥ ५ ॥

अत्रैवर्त्विजो हविश्शेषान् भक्षयन्ति ॥ ॥ १५ ॥

इति सप्तमी कण्डिका ॥

अत्रैवेति हविश्शेषावधारणात्कृत्वा हविःशेषभक्षणं । हारियाजनेन प्रचरन्ति । अत्रैव भक्षयन्ति । तुरायणे न भक्षयन्तीति केचित् ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये तृतीयप्रश्ने द्वितीयः पटलः समाप्तः ॥

अथ तृतीयः पटलः ॥

आज्यलेपान् प्रक्षाल्य सस्रुवे जुहूपभृतावध्वर्युरादत्ते वेदं होता स्फ्यमाज्यस्थालीमुदकमण्डलुञ्चाऽऽग्नीध्रः ॥ १ ॥

1. सँस्रावाभिहोमः इति 'ख' पु.
2. न इति नास्ति 'क' पु.

१. यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः । तं त एतमनुजोषं भरामि नेदेष त्वदपचेतयातै ( तै. सं. १. ११. ३. १ ).
२. संस्रावभागास्स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च. ( तै. सं. १. ११. ३. १. )

[1]जुहूपभृतोर्विमोकार्थं नयनं हिरण्यकेशिनोक्तम् । [क]अतोऽपत्नीसंयाजायामपि पित्र्यायां क्रियते ॥ १ ॥

आग्नीध्रप्रथमाः पत्नीस्संयाजयिष्यन्त्यः प्रत्यञ्चो यन्ति ॥ २ ॥

अग्रेण गार्हपत्यं दक्षिणेनाऽध्वर्युः प्रतिपद्यत उत्तरेणेतरौ ॥ ३ ॥

"अग्नेर्वामपन्नगृहस्य सदसि सादयामी"ति कस्तम्भ्यां स्रुचौ सादयित्वा "धुरि धुर्यौ पात"मिति युगधुरोः प्रोहति ॥ ४ ॥

कस्तम्भ्यां सादनं प्रोहणञ्च स्रुवाभ्यां यागपक्षेऽपि । पत्नीग्रहणेन सोमादयो गृह्यन्ते । [ख]कस्तम्भी उपस्तम्भनार्था शकटस्य ॥ २–४ ॥

यदि पात्न्या निर्वपेदेताभ्यामेव यजुर्भ्यां स्फ्ये स्रुचौ सादयेत् ॥ ५ ॥

स्फ्यः सादने कृते पुनरुपादीयते प्रत्याश्रावणार्थम् ॥ ५ ॥

स्रुग्भ्यां स्रुवाभ्यां वा पत्नीस्संयाजयन्ति ॥ ६ ॥

स्रुवाभ्यामेकस्मिन् गृह्यते महति एक उपभृदर्थो ग्रहणे च ॥ ६ ॥

वेदमुपभृतं कृत्वा जुह्वा स्रुवेण चेत्येके ॥ ७ ॥

स्रुवेण चेति जुहूसहायो होमेऽपि ॥ ७ ॥

क. पत्नीसंयाजकाले जुहूपभृतोर्नयनं न पत्नीसंयाजाङ्गम्, किन्तु यज्ञे व्यापृतानां पात्राणां तद्विमोचनार्थमेव । अतश्च यत्र पत्नीसंयाजा न भवन्ति पित्र्येष्ट्यादौ तत्रापि तयोः पश्चान्नयनमिति ।

ख. शकटस्याऽग्रभागेऽवस्थितः शकटधारणकाष्ठविशेषः ।

1. विमोचनार्थं इति 'क' & B[2].

अपरेण गार्हपत्यमूर्ध्वज्ञव आसीनाः ध्वानेनोपांशु वा पत्नीस्संयाजयन्ति ॥ ८ ॥

अक्षरव्यञ्जनानामुपलब्धिः ध्वानः । करणवदशब्दमनःप्रयोग उपांशु । [क]आश्रावणादीनामपि ॥ ८ ॥

दक्षिणोऽध्वर्युरुत्तरत आग्नीध्रो मध्ये होता ॥ ९ ॥

आज्येन सोमत्वष्टाराविष्ट्वा जाघन्या पत्नीस्संयाजयन्ति । आज्यस्य वा यथागृहीतेन ॥१०॥

[ख]जाघन्या एवं चतुरवत्तं भक्षस्य[ग] पशोर्देवपत्नीनामेव [1]यागः । [घ]केचित्पशुवदिडावर्जम् । आज्यस्य वा यथागृहीतेनेति पूर्णो वाऽपूर्णो वा ॥ १० ॥

'सोमायाऽनुब्रूहि' 'सोमं यजे'ति सम्प्रैषावुत्तरार्धे जुहोति ॥११॥

एवमितरांस्त्वष्टारम् ॥ १२ ॥

इत्यष्टमी कण्डिका ॥

क. पत्नीसंयाजे आश्रावणादीनामप्ययमेव स्वरः । न क्रुष्ट इति, अतः क्रुष्टस्वरापवादविधिरयम् ।

ख. जाघनी पशोः पुच्छम् । तस्या आज्येन सह विकल्पः । जाघन्या पत्नीसंयाजकरणपक्षे जाघनी आपणतो ग्राह्या, न तदर्थं पशुविशसनमिति पूर्वमीमांसायां निर्णीतम् । ( See पू. मी. ३. ३. १०. )

ग. यो यजमानस्य गृहेऽन्यत्र वा भक्षणार्थमुपयुक्तः पशुः तस्य पुच्छमानीय तेन देवपत्न्य एव यष्टव्याः । सोमत्वष्टाराविष्ट्वा इत्युक्त्वाऽनन्तरमेव जाघनीविधानात् ।

घ. केचिदिडावर्जं पशुवत्कुर्वन्ति । पशौ देवपत्नीगृहपतियागयोरुभयोरपि जाघनीद्रव्यकत्वश्रवणात् तद्वदेवात्रापीति । एवञ्चात्र गृहपतियागस्यापि जाघन्येव द्रव्यमिति फलितम् । जाघनीपक्षे सर्वा अपि देवता जाघन्यैवेति प्रयोगकारः ।

1. An reads प्रयोगः

¹वाजलिङ्गत्वादृचः सोमायाऽनुब्रूहीत्युच्यते मा भूत्सोमाय वाजिने इति । सर्वे पत्नीसंयाजा उत्तरार्धे ॥ १२ ॥

देवानां पत्नीरग्निं गृहपतिमिति ॥ १ ॥

दक्षिणतस्त्वष्टारमुत्तरतो वा मध्येऽग्निं गृहपतिम् ॥ २ ॥

दक्षिणतस्सोमस्योत्तरतो वा त्वष्टा । तयोर्मध्ये गृहपतिः । केचिदग्नेर्दक्षिणतस्त्वष्टा मध्ये च गृहपतिरिति विकल्पः ॥ २ ॥

आहवनीयतः परिश्रिते देवानां पत्नीरपरिश्रिते वा ॥ ३ ॥

राकां पुत्रकामो यजेत सिनीवालीं पशुकामः कुहूं पुष्टिकामः ॥ ४ ॥

नित्यवदेके समामनन्ति ॥ ५ ॥

पुरस्ताद्देवपत्नीभ्य एता एके समामनन्ति, उपरिष्टाद्वा ॥ ६ ॥

पूर्ववद्धोतुरङ्गुलिपर्वणी अङ्क्तोपस्पृष्टोदकाय होतुर्हस्ते चतुर आज्यबिन्दूनिडामवद्यति षडग्नीधः ॥ ७ ॥

क. अस्य 'आप्यायस्व, सन्ते पयांसि' इति याज्यानुवाक्ये । तत्र 'भवा वाजस्य' 'समुयन्तु वाजाः' इति वाजशब्दश्रवणात्तद्विशिष्टस्यैव देवतात्वं मा भवतु इत्येतदर्थं सूत्रे देवतानामग्रहणमिति । विधिगतशब्दस्य देवतात्वात् तत्र च केवलस्यैव श्रवणात्तस्यैव देवतात्वमिति ।

1. Ad & B² read वाजिलिङ्गत्वात्.

न [क]क्रुष्टेन पत्नीसंयाजानामाश्रुतप्रत्याश्रुतादीनि बहूचानामूर्ध्वञ्च शंयुवाकादीनि वचनात् । अग्नीधो हस्ते षडाज्यबिन्दून् ॥ ७ ॥

उपहूयमानामन्वारभन्तेऽध्वर्युराग्नीध्रः पत्नी च ॥ ८ ॥

उपहूतां प्राश्नीतो होताऽऽग्नीध्रश्च ॥ ९ ॥

अत्र स्रुवेण सम्पत्नीयञ्जुहोति पत्न्यामन्वारब्धायां "सम्पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम्। सञ्जानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेता ँ स्वाहे"ति ॥ १० ॥

[1]पत्न्यभावेऽपि न निवर्तते [ख]सम्पत्नीयहोमः । प्रवसन्त्या अपि पत्न्याः फलं विद्यत इति । न च पत्नीसंयाजाङ्गम् । अतः [2]पिष्ट्यायामपत्नीसंयाजायामपि भवति ॥ १० ॥

पुरस्ताद्देवपत्नीभ्य एतामेके समामनन्त्युपरिष्टाद्वा । उपरिष्टाद्वा पिष्टलेपफलीकरणहोमाभ्याम् ॥ ११ ॥

[ [3]उपरिष्टाद्वा पिष्टलेपफलीकरणहोमाभ्याम् ॥ ११ ॥

दक्षिणाग्नाविध्मप्रव्रश्चनान्यभ्याधाय पिष्टलेपफलीकरणहोमौ जुहोति ॥ १२ ॥

इति नवमी कण्डिका ॥

क. क्रुष्टेन शेष इति स्विष्टकृत्प्रभृति क्रुष्टस्वरविधानेऽपि न पत्नीसंयाजेषु क्रुष्टस्वरः, विशेषविहितेनोपांशुस्वरेण बाधादिति ।

ख. मन्त्रस्य सम्पत्नीपदघटितत्वात् तत्साधनककर्मणस्तन्नाम ।

1. पत्न्यभावेऽपि सम्पत्नीहोम इति B[2].
2. B. Ms. reads पत्नीसंयाजाभावेऽपि.
3. कुण्डलान्तर्गतो भागः B[2] नास्ति, लेखकप्रमादात् त्रुटितः प्रतिभाति ।

पिष्टलेपः कृष्णाजिनात् दृषदश्चोपलादेश्च । पिष्टलेपफलीकरणाभावे तयोर्निवृत्तिः, तन्नामधेयत्वात् ॥ १२ ॥ ९ ॥

फलीकरणहोमं पूर्वमेतद्वा विपरीतम् । चतुर्गृहीतआज्ये फलीकरणानोप्या "ग्नेऽदब्धायोऽशीततनो" इति जुहोति । एवं पिष्टलेपा"नुलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत्कपाले । अव प्रुषो विप्रुषस्संयजामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषस्सन्ति बह्वीरग्नौ तास्सर्वास्स्विष्टास्सुहुता जुहोमि स्वाहे"ति ॥ १ ॥

या सरस्वती वेशभगीना तस्यै स्वाहा । या सरस्वती वेशभगीना तस्यै स्वाहा, इन्द्रोऽपानस्य केह मनसो वेशान् कुरु सुमनसस्सजातान् स्वाहे'ति दक्षिणाग्नौ प्रतिमन्त्रं जुहोति ॥ २ ॥

'वेदोऽसी'ति वेदं होता पत्न्या उपस्थे त्रिः प्रास्यति ॥ ३ ॥

'निर्द्विषन्तं निररातिं नुदे'तीतरा प्रास्तं प्रास्तं प्रति निरस्यति ॥ ४ ॥

निरसनव्यवायाद्वेदप्रासनमन्त्रावृत्तिः । वेदस्य च प्रासनं पत्नीसंस्कारः । अतः प्रतिपत्तिर्न भवति । वरुणप्रघासेषु च द्वयोर्वेदयोः प्रासनमुभयसंस्कारत्वात् । केचित्पत्नीसंस्कारं, "विन्दते प्रजाम्" इति लिङ्गात् । तदा त्वेकस्य प्रासनम् ॥ ४ ॥

१. अग्नेऽदब्धायोऽशीततनो पाहि माद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषन्नः पितुं कृणु सुषदा योनिꣳस्वाहा ॥ ( तै. सं. १.१.१३.१. )

[1]"तन्तुं तन्वन्नि"ति वेदं होता गार्हपत्यात्प्रक्रम्य सन्ततमाहवनीयात् स्तृणात्या वा वेदेः ॥ ५ ॥

स्तरणं भेदेन, वेदिभेदात्। मर्यादा आवेदेरिति ॥ ५ ॥

[2]"इमं विष्यामि" इति पत्नी योक्त्रपाशं विमुञ्चते ॥ ६ ॥

[क]होता चेद्योक्त्रं विमुञ्चति न तदा पत्नी । कर्तृभेदाद्वा समुच्चयः ॥ ६ ॥

तस्यास्सयोक्त्रेऽञ्जलौ पूर्णपात्रमानयाति ॥ ७ ॥

[3]"समायुषा सम्प्रजये"त्यानीयमाने जपति ॥ ८ ॥

प्रतिपत्तिः पूर्णपात्रनिनयनम् ॥७, ८॥

निनीय मुखं विमृज्योत्तिष्ठति 'पुष्टिमती पशुमती प्रजावती गृहमेधिनी भूयास'मिति ॥ ९ ॥

इति दशमी कण्डिका

निनीयोदकालिप्तेन हस्तेन मुखविमार्गः । उत्थानमन्त्रः पुष्टिमतीति ॥ ९ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते तृतीयप्रश्ने

तृतीयः पटलः समाप्तः ॥

क. यदा बह्वृचहौत्रं क्रियते तदा तद्विध्यनुसारेण होतुरेव योक्त्रविमोचनम्। ततश्च पत्नी योक्त्रं न विमुञ्चेत्। अथवोभयोः कर्तृत्वं समुच्चयेन। होता ग्रन्थिं विस्रंसयति, पत्नी विमुञ्चतीति ।

१. तन्तुं तन्वन् रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्। अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥ ( तै. सं. ३. ४. २. २ ).

२. इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि ॥ ( तै. सं. १. १. १०. २ ).

३. समायुषा सम्प्रजया समग्ने वर्चसा पुनः। सं पत्नी पत्या सङ्गच्छे समात्मा तनुवा मम ॥

## चतुर्थः पटलः

यथैतमाहवनीयं गत्वा जुह्वा स्रुवेण वा सर्वप्रायश्चित्तानि जुहोति ॥ १ ॥

अविज्ञातदोषनिर्घातार्थानि सर्वप्रायश्चित्तानि । सर्वत्राऽऽप्यायनम्, [1]अनेकार्थत्वात् यस्माद्ध्रुवाया होमः । यत्र नास्त्यर्थः तत्र न क्रियते । [क]यथेडान्ते स्विष्टकृति परिसमाप्यते । उपदेशस्तु-त्रिर्न करोत्याप्यायनम् । एकः स्रुवस्समिष्टयजुष इति ॥ १ ॥

(१)ब्रह्म प्रतिष्ठा मनस इत्येषा ॥ आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तञ्च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् स्वाहाकृताहुतिरेतु देवान् ॥ यद्वो देवा अति पादयानि वाचा चित् प्रयतं देवहेडनम् । अरायो अस्माँ अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तन्निधेतन ॥ ततम्म आपस्तदुतायते पुनस्स्वादिष्ठा धीतिरूचथाय शस्यते । अयं समुद्र उत विश्वभेषजस्स्वाहा कृतस्य समु तृप्णुतर्भुवः ॥ (२)उद्वयन्तमसस्परि (३)उदु त्यं (४)चि-

क. यथा इडान्ता आतिथ्या सन्तिष्ठन्ते, तत्र स्विष्टकृत्पर्यन्तमेव होमो न ततः परम् । तत्रेतरत्र प्रयोजनाभावान्नाऽऽप्यायनम् ।

1. सर्वत्राव्याप्यानेकार्थत्वात् इति 'घ' 'ब' पु; सर्वत्राप्यायनमेकार्थत्वात् इति 'ङ' पु.

१. ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानां हविषा माज्यस्य । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्त्स्वाहा कृताहुतिरेतु देवान् (तै. ब्रा. ३. ७. ११. १.)

२. उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ (तै. सं. ४. १. ७. ४).

३. उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । (तै. सं. १. २. ८. २).

४. चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आ प्रा द्यावापृथिवी अन्तरिक्षꣳसूर्य आत्मा जगतस्तस्थुषश्च ॥ (तै. सं. २. ४. १. ४).

अ (१)मिमं मे वरुण (२)तत्वा यामि (३)त्वन्नो अग्ने (४)स-त्वन्नो अग्ने। त्वमग्ने अयास्यया सन्मनसा हितः। अया-सन् हव्यमूहिषेऽयानो धेहि भेषजम्॥ (५)प्रजापत इत्येषा। इष्टेभ्यस्स्वाहा वषडनिष्टेभ्यस्स्वाहा। भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा। दौराध्यै स्वाहा दैवीभ्यस्तनूभ्य-स्स्वाहा। ऋध्यै स्वाहा समृध्यै स्वाहा। अयाश्चाग्नेऽस्य-नभिशस्तीश्च सत्यमित्वमया असि। अयसा मनसा धृतोऽयसा हव्यमूहिषेऽयानो धेहि भेषजम्॥ यदस्मिन् यज्ञेऽन्तरगाममन्त्रतः कर्मतो वा। अनयाऽऽहुत्या तच्छ-मयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन॥ २॥

इत्येकादशी कण्डिका॥

आज्ञातमनाज्ञातममतश्च मतश्च यत्। जातवेदस्स-न्धेहि त्वꣳहि वेत्थ यथातथम्॥ यदकर्म यन्नाकर्म यद-त्यरेचि यन्नात्यरेचि। अग्निष्टत्स्विष्टकृद्विद्वान् सर्वꣳ स्विष्टꣳ सुहुतं करोतु॥ यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहा-करम्। अग्निष्टत्स्विष्टकृद्विद्वान् सर्वꣳ स्विष्टꣳ सुहुतं करोतु॥ यत इन्द्र भयामहे ततो नो अभयं कृधि। मघवञ्छग्धि

१. इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके॥ (तै. सं. २, २. ११. ६).

२. तत्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः॥

३. त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासिसीष्ठाः। यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्॥

४. स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणꣳरराणो वीहि मृडीकꣳ सुहवो न एधि॥ (तै. सं. २. ५. १२. ३)

५. प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳस्याम पतयो रयीणाम्॥ (तै. सं. ३. २. ५. ७)

तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नस्स्वस्तिदा अभयंकरः ॥ आभिर्गीभिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम ॥ अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वꣳहि वेत्थ यथातथम् ॥ पुरुषसम्मितो यज्ञो यज्ञः पुरुषसम्मितः । अग्ने तदस्य कल्पय त्वꣳहि वेत्थ यथातथम् ॥ यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः । अग्निष्टद्धोता क्रतुविद्विजानन् यजिष्ठो देवाꣳऋतुशो यजाति ॥ यद्विद्वाꣳसो यदविद्वाꣳसो मुग्धाः कुर्वन्त्यृत्विजः । अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चताम् ॥ १ ॥

इति द्वादशी काण्डिका ॥

अयाडग्निर्जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य । सन्वन्त्सनिꣳसुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रम् ॥ ये ते शतं वरुण ये सहस्रं याज्ञियाः पाशा वितताः पुरुत्रा । तेभ्यो न इन्द्रस्सवितोत विष्णुर्विश्वे देवा मुञ्चन्तु मरुतस्स्वस्त्या ॥ [१]यो भूताना [२]मुद्बुध्यस्वाग्न [३]उदुत्तममिति व्याहृतीभिर्विहृताभिस्समस्ताभिश्च हुत्वा ॥ १ ॥

"पुनः कृण्वꣳस्त्वा" इति यस्यास्सा "उद्बुध्यस्व" इति ऋक् । "उदुत्तमम्" इति [1]परिच्छेदात् द्वौ गणौ । व्यावृत्त्यर्थं पुनर्गृह्यते ॥ १ ॥

1. B. Ms reads परिच्छेदार्थम्.
१. See page 126 for यो भूतानाम्
२. उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृथायामयञ्च ।
( पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत् त्वयि तन्तुमेतम् ॥ तै. सं. )
३. See page 139 for उदुत्तमम्

पूर्ववद्ध्रुवामाप्याय्य "[1]देवा गातुविद" इत्यन्तर्वेद्यूर्ध्वस्तिष्ठन् ध्रुवया समिष्टयजुर्जुहोति ॥ २ ॥

पूर्ववदाप्यायनं वचनकृतम् । समिष्टयजुरित्येकवचनादन्त एव होमः स्वाहाकारेण । यद्यन्ते न क्रियते मध्यमो न स्यात् । अतोऽ[1]न्तवर्तिनामप्रदानार्थत्वम् । पुरस्तादन्ते वा स्वाहाकारः प्रदानार्थः । [क]"पुरस्तात्स्वाहाकारा वा" इति ॥ २ ॥

मध्यमे स्वाहाकारे बर्हिरनुप्रहरति ॥ ३ ॥

बर्हिःप्रहरणस्य कालमात्रम् । तस्मात् पित्र्यायां प्रह्रियते अभावेऽपि समिष्टयजुषः ॥ ३ ॥

यदि यजमानः प्रवसेत् [2]"प्रजापतेर्विभान्नाम लोक" इति ध्रुवायां यजमानभागमवधाय समिष्टयजुषा सह जुहुयात् ॥ ४ ॥

अभिस्तृणीहि परिधेहि वेदिं जामिं मा हिꣳसीरमुया शयाना । होतृषदना हरितास्सुवर्णा निष्का इमे यजमानस्य ब्रध्न" इति होतृषदनैर्वेदिमाभिस्तीर्य "को वोऽयोक्षीथ्स वो विमुञ्चात्वि"त्यन्तर्वेदि प्रणीता आसाद्य विमुञ्चति ॥ ५ ॥

हरितत्वं होतृषदनानां लिङ्गात् । विमोकार्थो मन्त्रः प्रणीतानाम् ॥ ५ ॥

क. "पुरस्तात्स्वाहाकारा वा अन्ये देवा उपरिष्टात्स्वाहाकारा अन्ये" (तै. सं. ३, १, ४.) इति श्रुतिबलादाद्यस्याऽन्त्यस्य वा स्वाहाकारस्य हविःप्रदानार्थत्वं । न मध्यगतस्येति ।

1. B Ms reads अन्त्यवर्तिना

"यं देवा मनुष्येषूपवेषमधारयन् । ये अस्मदपचेतसस्तानस्मभ्यामिहा कुरु । उपवेषोपाविड्ढि नः प्रजां पुष्टिमथो धनम् । द्विपदो नश्चतुष्पदो ध्रुवाननपगान् कुर्वि"ति पुरस्तात्प्रत्यञ्चमुत्करे उपवेषं स्थविमत उपगूहति ॥ ६ ॥

अग्रं स्थविमत् स्थूलम् । मूलं तनूपवेषस्य ॥ ६ ॥

इति त्रयोदशी कण्डिका ॥

यद्यभिचरेद्योपवेषे शुक् साऽमुमृच्छतु यं द्विष्म इत्यथास्मै नाम गृह्य प्रहरति ॥ १ ॥

योपवेष इत्युत्करे प्रहरणमुपवेषोपगूहनप्रत्याम्नायः । अत्रैव मन्त्रे नामग्रहणं शत्रोः ॥ १ ॥

निरसुं नुद ओकसस्सपत्नो यः पृतन्यति । निर्बाध्येन हविषेन्द्र एणं परा शरीत् ॥ इहि ति ः परावत इहि पञ्च जनाँऽअति । इहि तिस्रोऽतिरोचना यावत्सूर्यो असद्दिवि ॥ परमां त्वा परावतमिन्द्रो नयतु वृत्रहा । यतो न पुनरायसि शश्वतीभ्यस्समाभ्य ॥ इति हतोऽसाववधिष्मामुमित्येताभिः पञ्चभिर्निरस्येन्निखनेद्वा ॥ २ ॥

'निरमुं नुद' इति तिसृभिः ऋग्भिर्यजुर्भ्यांश्च निरसनमुपवेषस्य ॥ २ ॥

"अवसृष्टः परापत शरो ब्रह्म संशितः । गच्छामित्रान् प्रविश मैषां कञ्चनोच्छिष" इति वा ॥ ३ ॥

'अवसृष्ट' इति वा पञ्चभिर्विकल्प्यते । एताभिरिति स्त्रीलिङ्गमृग्बहुत्वात् । केचित्तु योपवेष इत्युपगृह्य शत्रोर्नाम गृहीत्वोत्करे [1]प्रहरन्त्युवेषेण ॥ ३ ॥

1. ऋग्भिरिति नास्ति 'घ' पु.
2. An reads; प्रहरन्त्युपवेषम्

'यानि घर्मे कपालानि' इति चतुष्पदयर्चा कपालानि विमुच्य संख्यायोद्वासयति ॥ ४ ॥

चतुष्पदयेति ज्ञानार्थम् । कृत्वा [क]विमोकं गणना ॥ ४ ॥

सन्तिष्ठेते दर्शपूर्णमासौ ॥ ५ ॥

ततस्समाप्तिराध्वर्यवस्य ॥ ५ ॥

शंय्वन्तं वाऽऽहवनीये संस्थापयेदाज्येडान्तं गार्हपत्ये, इडान्तं वाऽऽहवनीये शंय्वन्तं गार्हपत्ये ॥ ६ ॥

यदि शंय्वन्तं पश्चात्स्यात् वेदात्तृणमपादाय जुह्वामग्रमञ्ज्यात् स्रुवे मध्यमुपभृति वाऽऽज्यस्थाल्यां मूलम् । तस्य प्रस्तरवत् कल्पः सूक्तवाकाद्याशंयुवाकात् ॥ ७ ॥

उभयाग्निसंयुक्ते [1]उत्तरे द्वे संस्थे । अग्निग्रहणं पूर्वापरदेशलक्षणार्थम् । न च कल्पचतुष्टयम्, वाशब्दस्य द्विरेव पाठात्[2] । शंय्वन्तं संस्रावान्तमाहवनीये कर्म । तत्र हविःशेषभक्षणनिवृत्तिः । ध्रौवस्य च समाप्तिः पूर्वमेव । नोपवेषप्रणीताविसर्गौ । [ख]यजमानपत्नीकर्मणामनिवृत्तिः[3] । अन्यो वा वृतो होता [4]ब्रह्माऽऽग्नीध्रो वा अन्तर्वेद्यासाद्य विमोकं कृत्वा प्रणीतानां धारां स्रावयेत् । पूर्णपात्रनिनयनञ्च कुर्यात्, पत्न्यास्तदर्थत्वात् । आज्येडां भक्षयित्वा समाप्तिः । [ग]न जुहोति सम्पत्नीयं । यद्यहुतः ।

क. पुरोडाशश्रपणार्थमुपहितानां कपालानां समूहीकरणं विमोकः ।

ख. आध्वर्यवसमाप्त्यनन्तरं कर्मान्तरोपदेशात् आध्वर्यवस्यैव समाप्तिः । न तु याजमानस्य । अतो यजमानकर्मणां पत्नीकर्मणाञ्चानुष्ठानमेव न त्याग इति ।

ग. पत्नीसंयाजमध्ये सम्पत्नीयहोमः प्रमादाद्यद्यहुतः स्यात् तदा तस्य न पुनः करणमिति ।

१. यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम् ॥ ( तै. सं. १. १. ८. )

1. B. 2. reads इतरे

2 द्विदेशपाठात् इति 'क' पु.

3 यजयानकर्यणां निवृत्तिः B. 2.

4 आग्नीध्योवा इति नास्ति 'क' पु. B, 2.

हूयन्ते दक्षिणाग्निहोमाः । अग्निनियमात् अनिवृत्ति[क]र्वा याजमानस्यापि । यत्राध्वर्युरुपरमति आहवनीयसमीपस्थस्य प्रणीताविसर्गस्य गार्हपत्यसमीपस्थस्य योक्त्रविमोकादेः । इतरथा इडान्तनियमोऽनर्थकस्स्यात्, यदि मिश्राणि चतुर्धाकरणादीनि क्रियेरन् । अतोऽध्वर्युरेतानि कर्माणि करोतीति ब्रूयात् ।

केचित् पृथगेतास्संस्थाः कल्पयन्ति । तेषामाहवनीयग्रहणमनर्थकम् । इडान्ते दक्षिणाचतुर्धाकरणादेर्निवृत्तिः[1] । आज्येडां भक्षयित्वा वेदात्तृणमपादाय तस्यैवावयवं 'आयुषे त्वे'ति निधाय[ख]विकृतस्सूक्तवाकः । आहवनीये परिधयो न क्षिप्यन्ते । न च संस्रावः क्रियते,[2] शंयुवाकानङ्गत्वात्[3] ततो दक्षिणाग्निहोमाः । सर्वत्र समानं [ग]विष्णुक्रमादि याजमानम् ॥ ७ ॥

**स्वर्गकामो दर्शपूर्णमासौ, एककामः सर्वकामो वा ॥८॥**
**युगपत्कामयेताऽऽहारपृथक्त्वे वा ॥ ९ ॥**

यदैककामः तदा स्वर्ग एवाऽऽद्ये कामयितव्यः । [घ]आहारपृथक्त्वे वा स्वर्गादीन्[4] वा युगपत्पौर्णमासे पौर्णमासे एकैककामः ॥ ९ ॥

क. निवृत्तिर्वा इत्यनेन पूर्वोक्तपक्षवैपरीत्येनोच्यते । अथवा याजमानस्यापि निवृत्तिरेव । यदि तस्याऽनिवृत्तिः 'संस्थापयेदि'त्यविशेषश्रवणमनर्थकं स्यात् यद्युभयकर्तृकाः ।

ख. सूत्रे शंय्वन्तं वाऽऽहवनीये इत्येकः पक्षः । आज्येडान्तं गार्हपत्य इति द्वितीयः । इडान्तं वाऽऽहवनीय इति तृतीयः । शंय्वन्तं गार्हपत्य इति चतुर्थः । एवं चतुरः पक्षान् कल्पयन्ति । तत्रोभयत्राऽऽहवनीयग्रहणमनर्थकं भवति । आहवनीयसमीप एव शंय्विडयोः क्रियमाणत्वात् अन्यत्र प्रसक्त्यभावादाहवनीयग्रहणमनर्थकमिति ।

ग. यजमानपत्नीकर्मणां निवृत्तिपक्षेऽपि विष्णुक्रमादि कर्तव्यमेवेति । तत्र ऋत्विग्व्यापारानपेक्षत्वात् आत्मसंस्कारत्वाच्चेति ।

घ. सर्वकामपक्षे एकैकस्मिन् प्रयोगे एकैकं फलम्, इति तत्तत्प्रयोगकाले तत्तत्फलं कामयेत । अथवा सकृदेव सर्वप्रयोगारम्भे तत्तत्प्रयोगजन्यत्वेन तानि तानि फलानि कामयेत इति । आहारः प्रयोगः, तस्य पृथक्त्वं भेदः ।

1. इडान्ते चतुर्धाकरणादेर्निवृत्तिः इति 'क' पु; इडान्ते चतुर्धाकरणंदक्षिणादेर्निवृत्तिः इति B. 2.
2. Ad omits क्रियते
3. B. 2. reads शंयुवाकांगत्वात्
4. स्वर्गादिना युगपदिति B. 2.

**ताभ्यां यावज्जीवं यजेत, त्रिंशतं वा वर्षाणि, जीर्णो वा विरमेत् ॥ १० ॥**

[क]यावज्जीवादिसङ्कल्पः[1]। [ख]दर्शपूर्णमासयोरुपरमे तद्विकारणामप्युपरमः तत्प्रकृतित्वात्। दर्विहोमाग्रयणं तु क्रियते। दर्विहोमसोमानामपि[2] निवृत्तिः। [ग]केवलमग्निहोत्रमित्युपदेशः। अग्निहोत्रमेव [3]जुहुयादिति कात्यायनमतिश्च ॥ १० ॥

**द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेतर्ध्नुयामित्युक्त्वाऽऽहैकामेव यजेतेति ॥ ११ ॥**

इति चतुर्दशी कण्डिका

[घ]प्रतिपद्द्वितीययोरिज्या ऋद्धिकामस्य, 'यमद्येजानं' मिति लिङ्गात्। [ङ]पौर्णमासीप्रतिपदोरित्युपदेशः, साकमेधेषु विरोधात्। [च]एकाप्यृद्धि-

क. सूत्रोक्तेषु यावज्जीवादिपक्षेषु विकल्पः। तत्र यं कञ्चन पक्षमाश्रयेत्। तं च प्रथमप्रयोगारम्भ एव सङ्कल्पे उल्लिखेत्। यथा–यावज्जीवं दर्शपूर्णमासाभ्यां यक्ष्य इत्यादि।

ख. अयं भावः–अन्वारम्भणीयया यजमानः संस्क्रियते, तथैव सिद्धान्तात्। तत्संस्कृत एव दर्शपूर्णमासयोस्तद्विकारेषु चाधिकारी। अतश्च दर्शपूर्णमासोपरमे तत्प्रयुक्तान्वारम्भणीयाजन्यापूर्वनाशात् तन्नाशे च तज्जन्यसंस्कारनाशात् तद्रहितस्य विकृतावनधिकार इति। परमाग्रयणेष्टिः कर्तव्या अग्निहोत्रञ्च। तस्य नाहिताग्नेरपि विधानादिति।

ग. 'ताभ्यां यावज्जीवम्' इत्यत्र ताभ्यामिति नित्यकर्ममात्रोपलक्षणम्। एवञ्च विरमणपक्षे सर्वेषां नित्यकर्मणां निवृत्तिः। अतो दर्वीहोमसोमादयोऽपि न क्रियेरन्। केवलमग्निहोत्रं परं कर्तव्यमेव। चतूरात्रमहूयमानो लौकिकस्सम्पद्यते-' जरामर्यं वा एतत्सत्रं यदग्निहोत्रं जरया चैव मृत्युना च विमुच्यते " इत्यादिश्रुतिभ्यः।

घ. यदा द्वयोः पौर्णमास्योरनुष्ठानं, तदैकः प्रयोगः पौर्णमास्यनन्तरप्रतिपदि। एकातदनन्तरद्वितीयायामिति। एवममावास्यायामपि। आमावास्यप्रयोगे 'यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेति अस्मिन्नेवास्मै लोकेऽर्धुकं भवति' इति श्रवणात्।

ङ. पौर्णमास्यां प्रतिपदि चेत्युपदेशमतम्। 'द्वे अमावास्ये' इति वचनात् चतुर्दश्यामारभ्य पञ्चदश्यामेकस्य समाप्तिः। पञ्चदश्यामारभ्य प्रतिपद्येकस्य समाप्तिः अन्यथा साकमेधविरोधात्। साकमेधे चातुर्मास्यान्तर्गते तृतीये पर्वणि 'द्व्यहं चातुर्मास्येन यजेत' इतिश्रुते द्व्यहकालिकत्वं पञ्चदशीप्रतिपदावादायैव सम्पाद्यते तद्वदिति।

च. ऋद्धिकामविषय एव पूर्वं 'एकामेव यजेत' (तै. सं. २, ५, ५, ३) इति वचनादनेन प्रयोगद्वयेनैकप्रयोगो विकल्प्यते। एवञ्च ऋद्धिकामस्याप्येकप्रयोगो लभ्यते। एतदर्थमेव 'एकामेव' इति पुनर्विधानमिति।

1. B. Ms reads यावज्जीवसङ्कल्पः
2. दर्विहोमानां सोमानामपि इति 'घ' पु.
3. विकाराश्च इति 'क' 'ङ'

कामस्य लभ्यते। योऽप्येककामः तस्यापि ऋद्धिकामो लभ्यत इति पुनरारम्भः ॥ ११ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते तृतीयप्रश्ने
चतुर्थः पटलः ॥

अथ पञ्चमः पटलः

**संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमेकादशकपालमनुनिर्वपति ॥ १ ॥**

**समानतन्त्रमेके समामनन्ति ॥ २ ॥**

[क]समानतन्त्रे वैमृधे सोमयाजिनो नानाबीजधर्मः, प्रकृतावूहविरोधात् [ख]ऐन्द्राग्नविकारश्च[1]। अत आमावास्यं तन्त्रम्। उपदेशो यथाभागमिति। समानतन्त्रेऽपि भवत्यूहः [ग]विकृत्याश्रयणात् ॥ १,२ ॥

**तस्य याथाकामी प्रक्रमे। प्रक्रमात्तु नियम्यते ॥ ३ ॥**

अनित्यश्चाऽस्याऽऽरम्भः। [2]'यद्यग्रे [घ]निरुप्य नानुनिर्वपेत्' इति। यस्यारब्धस्तस्य नियतः याथाकामी प्रक्रम इति। यथास्य काम इच्छा तथा प्रयुक्त इति याथाकामी। समानतन्त्रे नानातन्त्रे च याथाकामीत्युपदेशः ॥ ३ ॥

क. प्रथमसूत्रे पौर्णमासीसमाप्त्यनन्तरं वैमृधेष्टेः भिन्नतन्त्रेण पृथक् प्रयोगो विहितः। द्वितीये तु तस्यास्सहैव एकतन्त्रेण प्रयोगो विहितः। तत्र समानतन्त्रप्रयोगे 'स सोमेनेष्ट्वाऽग्नीषोमीयो भवती' ति वचनबलात् सोमयाजिनोऽग्नीषोमीयपुरोडाशोऽपि भवति। एवञ्चाऽऽग्नेयाग्नीषोमीयवैमृधपुरोडाशानां त्रयाणां सत्वात् पुरोडाशार्थं संयवनानन्तरभाविपिण्डविभागकाले प्रयुज्यमाने 'यथाभागं व्यावर्तेथाम्' इति मन्त्रे व्यावर्तध्वमिति प्राप्तस्याऽकरणम्, प्रकृतावूहनिषेधादिति।

ख. वैमृधस्य पृथगनुष्ठानपक्ष इदम्।

ग. वैमृधस्य विकृतिरूपत्वेन तदनुरोधेनोहः न दोषाय। अतो बहुवचनान्तेनोह एवेति। अयमेव ( ऊहपक्ष एव ) इदानीं प्रचलति।

घ. वैमृधस्य पौर्णमास्यङ्गत्वश्रवणेऽपि तस्यानुष्ठानं न नियतम्। अतस्तस्याऽऽरम्भः ऐच्छिकः। यद्यारभ्येताग्रेऽनुष्ठानमवश्यं कर्तव्यम्, न तस्य त्याग इति।

1. विकाराश्च इति 'क' 'ड'.
2. B. Ms reads यद्यग्नये निरुप्यानुनिर्वपेदिति श्रुतौ यदिशब्दश्रवणात्.

सप्तदशसामिधेनीको यथाश्रद्धदक्षिणः ॥ ४ ॥

समानतन्त्रेऽपि केचिद्दक्षिणामिच्छन्ति । दर्शपूर्णमासविकारेषु "[क]ब्रह्मणे गाम्" इति कस्मान्न भवति, दर्शपूर्णमासार्थत्वात् सर्वप्रतिग्रहमन्त्राणाम् । तत्रानर्थकत्वात्तद्विकारेषु पौष्णाद्यनुमन्त्रणवत् । वैमृधे सर्वप्रतिग्रहमन्त्राणां [ख]प्राप्तिः । यथाश्रद्धदक्षिणत्वात् पौर्णमासविकारेषु न वैमृधः, समुदायाङ्गत्वात् संस्थाप्य पौर्णमासीमिति ॥ ४ ॥

शर्धवत्यौ संयाज्ये । "अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु । सञ्जास्पत्य ँ सुयममाकृणुष्व शत्रूयतामभितिष्ठा महा ँसि ॥ वातोपधूत इषितो वशा ँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे । आ ते यतन्ते रथ्यो यथा पृथक्श्छर्धा ँस्यग्ने अजराणि धक्षतः" इति ॥ ५॥

अग्नीषोमीयमेकादशकपालं पौर्णमास्यामनुनिर्वपत्यादित्यं च घृते चरुं सारस्वतं चरुममावास्यायां पौष्णश्चैन्द्रमेकादशकपालममावास्यायां पौर्णमास्याञ्च भ्रातृव्यवतोऽभिचरतो वा ॥ ६ ॥

क. 'गाम्' इत्युपलक्षणं तत्तद्वैकृतद्रव्याणाम् । दर्शपूर्णमासयोः प्रतिग्रहमन्त्रः 'ब्रह्मण ओदनम' इति यथाम्नानं पठ्यते । यत्र तु विकृतौ गवादयो दक्षिणात्वेन विहिताः, यथा—'धेनुर्दक्षिणा' 'वासो दक्षिणा' इति तत्र 'ब्रह्मणे गाम, ब्रह्मणे वासः' इति कुतो नोह इति शङ्का । दर्शपूर्णमासार्थत्वादिति समाधिः । प्रतिग्रहमन्त्रस्सर्वोऽपि देवस्य त्वेत्यादिः 'उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु' ( तै. आ. ३, १० ) इत्यन्तोऽनारभ्याधीतः । स चानारभ्याधीतानां प्रकृतिगामित्वमिति न्यायेन दर्शपूर्णमासगामी । तत्र 'ब्रह्मण ओदनम' इत्यतिरिक्तस्योपयोगाभावात् तेषां विकृतिगामित्वमुपदेशेनैव । अतश्च यथा 'पूष्णोऽहं देवयज्यया, इत्यस्याऽनुमन्त्रणस्योपदेशेनैव विकृत्यङ्गत्वान्नोहस्याऽऽवश्यकता तद्वदेव 'सोमाय वासः, रुद्राय गाम' इति तत्तद्द्रव्यसम्बन्धिमन्त्राणामुपदिष्टत्वात्तथैव तत्प्राप्तेः नोह इति ।

ख. तस्य यथाश्रद्धदक्षिणत्वात् यस्मिन् द्रव्यत्वेन श्रद्धोदेति तद्देयमिति सर्वेषां द्रव्याणां विकल्पेन समुच्चयेन वा प्राप्तत्वात् तत्तन्मन्त्राणामपि प्राप्तेरिति ।

**अग्नीषोमीयादीनि त्रीणि। वैमृधं कृत्वा भ्रातृव्यवतो भ्रातृव्यो मा बाधतामिति। अदितिर्देवताऽस्येत्यादित्यः। तथा सरस्वत्यादीन्यमावास्यायाम्। अग्नीषोमीयस्य याज्यानुवाक्ये [1]प्राकृते[क] [१]"अदितिर्न उरुष्यतु [२]महीमू षु मातरम्" इत्यादित्यस्य [३]"इन्द्रं वो विश्वतस्परि, [४]इन्द्रं नर" इत्यैन्द्रस्य [५]"प्र णो देव्या [६]नो दिव" इति सरस्वत्याः। [७]"पूषा गा अन्वेतु नः, [८]शुक्रं ते अन्यत्" इति पौष्णस्य। [2]सर्वत्र चास्य पेषणं चरोः। "तस्मात्पूषा प्रपिष्टभाग" इत्यविशेषवचनात्। [ख]आदित्यं प्रणीता-**

क. " अग्नीषोमा " ( तै. सं. २-३-१४ ) " युवमेतानि दिवि " ( तै. सं. २-३-१४-१ ) इत्यृग्द्वयं याज्यापुरोनुवाक्ये ।

ख. " आदित्यं घृते चरुम् " इत्यादितिदेवताकस्य चरोः घृते श्रपणार्थंप्रणीताप्रणयनकालेऽपां स्थाने घृतं प्रणीय तत्संयवनार्थं तण्डुलेष्ववनयेत् । अथ वा " अन्या वा यजुषोत्पूय । ( आप. श्रौ. १-२४-४ ) इति न्यायेनाऽन्यद्वा घृतं देवस्य त्वेत्युत्पूय तत्र चर्वर्थतण्डुलान् क्षिपेत् । तेन चरुपाक इति । तत्र लिङ्गं पवित्रवतीति । राजसूयान्तर्गतमैत्राबार्हस्पत्यचरुगतं वाक्यमिदम् । तत्र कणांश्चाऽकणांश्च तण्डुलान् विचिनुयाद्ये कणास्स पयसि बार्हस्पत्यः, येऽकणास्स आज्ये मैत्रः" ( तै. सं. १-८-९ ) इति श्रौतो विधिः । कणाः भग्नास्तण्डुलाः, अकणा अभग्नाः । तत्र भग्नैस्तण्डुलैः पयसि बृहस्पतये चरुः । अभग्नैस्तण्डुलैः घृते मित्राय चरुस्सम्पादनीयः । तदर्थमुक्तम्—पवित्रवत्याज्येऽकणानावतीति । मैत्रचरुपाकार्थमुपात्ते पात्रे आज्यमानीय तत्र सपवित्रेऽकणानखण्डितान् तण्डुलानावपति पाकार्थमिति । तदिदं लिङ्गं प्रणीतातिरिक्तेनापि पाकः क्रियत इत्यत्र ।

1. Ms. read उक्ते
2. Ms. read सर्वत्र चास्य पौष्णश्चरोः पेषणम्

१. अदितिर्न उरुष्यत्वदितिः शर्म यच्छतु । अदितिः पात्वꣳहसः ॥ ( तै. सं. १-५-११-५ )

२. महीमूषु मातरꣳसुव्रतानामृतस्य पत्नीमवसे हुवेम । तुविक्षत्रामजरन्तीमुरूचीꣳसुशर्माणमदितिꣳसुप्रणीतिम् ॥ ( तै. सं. १-५-११-५ )

३. इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ( तै. सं. १-६-१२-१ )

४. इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।
शूरो नृषाता शवसश्चकान आगोमति व्रजे भजा त्वन्नः ॥ ( तै. सं. १-६-१२-१ )

५. प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु । ( तै. सं. १-५-२२-१ )

६. आ नो दिवो बृहतः पर्वतादा सरस्वती यजताऽगन्तु यज्ञम् ।
हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥ ( तै. सं. १-५-२२-१ )

७. पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजꣳसनोतु नः ॥ ( तै. सं. ४-१-११-२ )

८. शुक्रन्ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु । ( तै. सं. ४-१-११-२ )

घृतेन यजुरुत्पूतेन वा स्थालीगतेन चरूणां पाकः। 'पवित्रवत्याज्ये कर्णानावपति' ( आप. श्रौ. १८-११-१८ ) इति लिङ्गात्। सर्वत्रैन्द्राग्नविकाराणामूहेनाभिमर्शनम्, न नूपदेशः ॥ ६ ॥

**इन्द्राय त्रात्रे चरुं द्वितीयं वैमृधस्य कुर्याद्यो मृत्योर्ज्यान्या वा बिभीयात्। मुष्करो दक्षिणा ॥ ७ ॥**

पौर्णमाससमानतन्त्रेऽपि वैमृधे[क]। इन्द्राय त्रात्र इति चतुर्थी निर्वापप्रोक्षणाधिवापसंवापानुब्रूहीत्येतेषु। यत्र चाऽऽग्नेयविकारास्तत्र चाऽभिघारणचतुर्धाकरणे। इन्द्र त्रातर्हव्यमिति [ख]आमन्त्रणेनोपसादनम्। इन्द्रं त्रातारमिति द्वितीयाऽऽवाहने[ग] स्वाहाकारे यजेत्येतेषु। इन्द्रस्य त्रातुरिति षष्ठी हुतानुमन्त्रणेऽयाड्‌ढकरणे उज्जितौ च। इन्द्रस्त्राता भुवनान्नुदतामिति प्रथमा अभिमर्शने इदं हविरजुषतेति च ॥ [1]"त्रातारमिन्द्रम्," "[2]माते अस्याम्" इति याज्यानुवाक्ये ॥ ७ ॥

**इन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालमनुनिर्वपेत् प्रजाकामः पशुकामस्सजातकामः ॥ ८ ॥**

क. नोह इति पूर्वत अनुषज्यते। वैमृधस्य पौर्णमासेन समं समानतन्त्रेणानुष्ठानेऽपि न तत्रोहः, प्रकृतिमन्त्रोपजीवित्वादित्युपदेशमतम्। ज्यानिर्हानिः। मुष्करः सेचन ( गर्भाधान ) समर्थोऽनड्वान्।

ख. आमन्त्रणं सम्बोधनविभक्तिः।

ग. 'इन्द्रं त्रातारमावह, स्वाहेन्द्रं त्रातारम्, इन्द्रं त्रातारं यज' इति क्रमाद्देवतावाहने पञ्चमप्रयाजे याज्याप्रैषे च वेदितव्यम्। हविस्त्यागान्तरं क्रियमाणे हुतानुमन्त्रणमन्त्र इन्द्रस्य त्रातुर्देवयज्यया त्रातो भूयासमिति। स्विष्टकृति अयाडिन्द्रस्य त्रातुः प्रिया धामानि इति। उज्जितिकरणे इन्द्रस्य त्रातुरहमुज्जितिमनूज्जेषमिति षष्ठीप्रयोक्तव्या एषु स्थलेष्विति। याजमाने हविरभिमर्शने "यो नः कनीयः" इति मन्त्रे "अपतमिन्द्राग्नी भुवनान्नुदेताम्" इत्यस्य स्थाने "अपतमिन्द्रस्त्राता भुवनान्नुदताम्" इति। "इन्द्रस्त्रातेदं हविरजुषत" इति प्रथमेति।

१. त्रातारमिन्द्रमवितारमिन्द्रꣳहवे हवे सुहवꣳशूरमिन्द्रम्।
हुवे नु शक्रं पुरुहूतमिन्द्रꣳस्वस्ति नो मघवा धात्विन्द्रः ॥ ( तै सं. १-६-१२-५ )

२. माते अस्याꣳसहसावन् परिष्टावघाय भूम हरिवः परादै।
त्रायस्व नो वृकेभिर्वरूथैस्तव प्रियासस्सूरिषु स्याम ॥ ( तै सं. १-६-१२-४ )

सजातकामो ग्रामकामः। इन्द्रायेन्द्रियावते। इन्द्रेन्द्रियावन्, इन्द्रमिन्द्रियावन्तं, इन्द्रस्येन्द्रियावतः, इन्द्र इन्द्रियावान् [1]"इन्द्रियाणि शतक्रतोऽ[2]नु ते दायि" इति ॥ ८ ॥

**एतं वाऽनुनिर्वाप्यं कुर्वीत ॥ ९ ॥**

[क]एतं वाऽनुनिर्वाप्यमिति-वैमृधेन विकल्पः ॥ ९ ॥

**इतरौ वा ॥ १० ॥**

'इतरौ' वैमृधत्रातारौ अकाम्यौ ॥ १० ॥

**यमभीव संशयीत ॥ ११ ॥**

इति पञ्चदशी कण्डिका

**स इन्द्रायं वैमृधाऽयानुनिर्वपेत् ॥ १ ॥**

'अभीव संशयीत' कश्चिदर्थम्। यथा मरणं मे स्यान्नवेति। द्वितीयोऽत्र[ख] वैमृधः ॥ १ ॥

**यो नेव घोषेन्नेव शृणुयात्स इन्द्रायांहोमुचे ॥२॥**

नेव घोषेत् यस्य शब्दो न निर्गच्छति स वैमृधं कृत्वा इन्द्रायांहोमुचे। इन्द्रांहोमुक्, इन्द्रमंहोमुचम्, इन्द्रस्यांहोमुचः, इन्द्रोंऽहोमुक्। [3]अंहोमुचे [4]विवेष यन्मेति ॥ २ ॥

**यो भ्रातृव्यवान् स्यात्स इन्द्राय वृत्रतुरे ॥ ३ ॥**

इन्द्राय वृत्रतुरे इन्द्रवृत्रतुर्हव्यम्। इन्द्रं वृत्रतुरं, इन्द्रस्य वृत्रतुरः, इन्द्रो वृत्रतूः, [3]'इन्द्रो यज्ञं वर्धयन्', 'इमं यज्ञं वर्धय'न्निति ॥ ३ ॥

क. इन्द्रियवन्तमेव वा वैमृधस्य स्थाने नित्यतया पौर्णमासाङ्गत्वेनाऽनुनिर्वाप्यं कुर्यादिति। एवञ्च वैमृधेनास्य विकल्पः।

ख. प्रथमं नानातन्त्रं भिन्नतन्त्रं वा वैमृधं कृत्वा अनन्तरं भिन्नतन्त्रतया पुनर्वैमृधं कुर्यादिति।

१. इन्द्रियाणि शतक्रतो याँ ते जनेषु पञ्चसु। इन्द्र तानि त आवृणे ॥ (तै सं. १-६-२-१)

२. अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये। अनु क्षत्रमनु सहो यजत्रेन्द्र देवीभरनु ते नृषह्ये ॥

३. अंहोमुचे प्रभरेमा मनीषामोषिष्ठदाव्ने सुमतिं गृणानाः। इदमिन्द्र प्रतिहव्यं गृभाय सत्याः सन्तु [ यजमानस्य कामाः ॥ (तै. सं. १-६-१२-३)

४. विवेश यन्मा धिषणा जजानस्तवै पुरा पार्यादिन्द्र मह्नः। अंहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये [ हवन्ते। (तै. सं. १-६-१२-३)

अत्रै व कण्डिका समाप्तिस्सर्वेषु पुस्तकेषु

**अथ यन्न कुतश्च नाऽऽतपेत्स इन्द्रायैव ॥ ४ ॥**

नाऽऽतपेत् भ्रंशो मे मा भूदिति ॥ ४ ॥

**यो भ्रातृव्यवान् स्यात्स पौर्णमासꣳसंस्थाप्यैतामिष्टिमनुनिर्वपेदाग्नावैष्णवमेकादशकपालं सरस्वत्यै चरुꣳ सरस्वते चरुम् ॥ ५ ॥**

'स पौर्णमासँ सँस्थाप्ये'ति [क]यस्याऽप्रवृत्तो वैमृधः। यस्य तु प्रवृत्तः तस्य वैमृधं कृत्वाऽऽग्नावैष्णवादीनि त्रीणि। अग्नाविष्णुभ्यां, सरस्वत्यै, सरस्वते। अग्नाविष्णू, सरस्वति, सरस्वन्। अग्नाविष्णू, सरस्वतीं, सरस्वन्तम्। अग्नाविष्णवोः, सरस्वत्याः, सरस्वतः। अग्नाविष्णू, सरस्वतीं, सरस्वान्। [1]अग्नाविष्णू [2]अग्नाविष्णू [3]प्र णो दैव्यानो[4] दिवः, [5]पीपिवाँसँ सरस्वतः [6]यस्य व्रतमिति। एवं सर्वत्र याज्यानुवाक्याः अन्यत्र परिपाठात् ॥ ५ ॥

**पौर्णमासीमेव यजते भ्रातृव्यवान् नाऽमावास्याम् ॥ ६ ॥**

क. वैमृधारम्भस्य वैकल्पिकत्वात् यस्य यजमानस्य वैमृधो नारब्धः, तस्य पौर्णमाससमाप्त्यनन्तरमेवाऽऽग्नावैष्णवेष्टिः। यस्य त्वारब्धः तस्य पौर्णमास्यनन्तरं वैमृधेष्टिः, तदनन्तरमाग्नावैष्णवेष्टिरिति । इदञ्च वैमृधस्य भिन्नतन्त्रत्वपक्षे। समानतन्त्रत्वे तु समाप्त्यनन्तरमेवाऽऽग्नावैष्णवेष्टिः ततस्सारस्वतौ चरू इति।

ख. निर्वपामि, इति निर्मापमन्त्रे, उपसादनमन्त्रे, आवाहनमन्त्रे, अनुमन्त्रणमन्त्रे, सूक्तवाके चैवं विधया देवतावाचकपदानामूहः कर्तव्य इति ॥

१. अग्नाविष्णू महि तद्वां महित्वं वीतं घृतस्य गुह्यानि नाम ।
दमे दमे सप्तरत्ना दधाना प्रति वां जिह्वा घृतमाचरण्येत् ॥ तै. सं. १-८-२२-१

२. अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा ।
दमे दमे सुष्टुतीर्वावृधाना प्रति वां जिह्वा घृतमुच्चरण्येत् ॥ "

३. प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥ ( तै. सं. १-८-२२-१

४. आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् । हवं देवी जुजुषाणा घृताची शग्मान्नो [ वाचमुशती श्रृणोतु ॥

५. पीपिवाꣳसꣳसरस्वतस्तनं यो विश्वदर्शतः । भुक्षीमहि प्रजामिषम् ॥ ( तै. सं. ३-१-११-२

६. यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः । यस्य व्रते पुष्टिपतिर्निविष्टस्तꣳसरस्वन्त- ] मवसे हुवेम ॥ "

पितृयज्ञमेवाऽमावास्यायां कुरुते ॥ ७ ॥

सङ्क्रामे सङ्क्रामे वज्रं भ्रातृव्याय प्रहरतीति विज्ञायते ॥ ८ ॥

[क]सङ्क्रामः[1] अकरणम् ॥ ८ ॥

त्र्यवरार्ध्यममावास्यायां सङ्क्रामति ॥ ९ ॥

अग्नीषोमीयाणि प्रधानानि स्युरमावास्यायां पौर्णमास्यां च भ्रातृव्यवतोऽभिचरतो वा ॥ १० ॥

[ख]प्रधानान्यग्नीषोमीयाणि न वैमृधः पौर्णमास्याम् । पृथक्प्रदानमनयोरुपांशुयाजव्यवायात् । अदेवतार्थत्वात् यो यस्य प्रदानस्य धर्मो हुतानुमन्त्रणच[ग]तुर्धाकरणादि स तस्यैव भवति । केवलं देवतापनयः[2] । तस्मादग्नीषोमयोरहं देवयज्ययान्नादो भूयासमिति हुतानुमन्त्रणम् । एव-

क. यो भ्रातृव्यवान् सोऽमावास्यां ( दर्शयागं ) परित्यज्य पौर्णमासीमेव यजेत । अमावास्यायां पितृयज्ञमेव कुर्यात् । यः परित्यक्तो दर्शस्स एव वज्री भूत्वा शत्रुं प्रहरतीति ।

ख. सर्वेऽपि प्रधानयागा अत्र पक्षेऽग्नीषोमदेवताका एवामावास्यायां पौर्णमास्या । तत्र पौर्णमास्यां प्रथममग्नीषोमीयपुरोडाशेनेष्ट्वा तत आज्येनोपांशुयाजमग्नीषोमदेवताकमिष्ट्वा ततः पुनरग्नीषोमीयपुरोडाशानुष्ठानमिति पृथगेव प्रचारः, न तु सान्नाय्यवत्सहैव प्रदानमिति ।

ग. हुतानुमन्त्रणचतुर्धाकरणादीनां कर्माङ्गत्वमेव न देवताङ्गत्वम् । अत्र च तत्तत्कर्मभ्यो देवता एवाऽपनीयन्तेऽभ्युदितेष्टिवत् , न कर्मणां भेदः अतश्च तदर्थं पठिते हुतानुमन्त्रणे ' अग्नेरहं देवयज्ययाऽन्नादो भूयासम् ' इति मन्त्रे अग्निपदस्थानेऽग्नीषोमपदमेवोहनीयम् । तथाकृत्वा अग्नीषोमयोरहं देवयज्ययाऽन्नादो भूयासम् इत्येव मन्त्रपाठः, न त्वग्नीषोमीयार्थं पठितस्य ' अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् इति मन्त्रस्य पाठः । एवमेवाऽन्येऽपि धर्मा आग्नेयस्यैव प्रथमप्रधाने । द्वितीयस्मिन् प्रकृतिवदेव दब्धिरस्यदब्धो भूयासमित्यादि । उपदेशमतं तु सर्वत्रापि प्राथमिकस्याऽऽग्नेयस्यैवाभिमन्त्रणम् अन्नादो भूयासमिति, न तु जेमानमित्यादि, संसृष्टहविष्षु तथैव विधानादिति ।

1. नास्तीदं in Anedn.
2. देवतापनयनं 'क' पु.

मन्यानि। प्रकृतिवदुत्तरे। तन्त्रेणामावास्यायां प्रदानम् विभवात्[1]। आशिषस्समुच्चयः–अग्नीषोमयोरहं देवयज्ययान्नादो भूयासम्, जेमानं महिमानं गमेयमिति। उपदेशो मुख्यानुमन्त्रणं सर्वस्य, मुख्ये साधर्म्य-मिति दर्शनात्। [क]अग्नीषोमीये तु याज्यानुवाक्ये, देवतासंस्कारत्वात्॥

## साकंप्रस्थायीयेन यजेत पशुकाम इत्यमावास्या विक्रियते ॥ ११ ॥

अमावास्यायां सङ्क्रामभुक्त्वा प्रधानानां चाग्नीषोमीयत्वं तदनन्तरं शाखान्तरे साकम्प्रस्थायीयमनुविदधे। ब्राह्मणेऽपि तदनन्तरं विहित इति साकम्प्रस्थायीयेन यजेत पशुकामः इत्यमावास्या विक्रियत इति। साकमिति सहत्ववाची। [ख]सहप्रस्थानमत्र कृत्स्नैरिति साकम्प्रस्थायीयः। तेन यजेत पशुकामः। तस्य [ग]प्रयोगं कुर्वीतेति एष श्रुत्यर्थः। तां श्रुतिं सूत्रकार इतिशब्देन [2]निर्दिशति। सैषा संज्ञा विकारनिमित्ता उभयो-र्दर्शपूर्णमासयोर्विकारोऽन्यतरस्य वेति प्राप्ते आह–अमावास्या विक्रियत इति।

[घ]सह वसनाद्देवैरिन्द्रस्य स कालोऽमावास्या। तत्कालप्रयोगात्प्रधान-समुदायोऽप्यमावास्या सा विकारमेति। न पौर्णमासी। न चैतत्कर्मान्तरं

क. अग्नीषोमीये इति प्रथमाद्विवचनं याज्यानुवाक्याविशेषणम्।

ख. अत्र द्वे अमावास्ये इत्यनेन द्वयोरमावास्ययोः तन्त्रेणानुष्ठानमिति वेद्यां द्वौ सायं-दोहौ द्वौ प्रातर्दोहौ कुम्भीषु निक्षिप्तौ। ताश्चतस्रः कुम्भीः युगपदेव गृहीत्वा होमा-र्थमाहवनीयसमीपगमनं यत् तदेव सहप्रस्थानमिति।

ग. प्रयोगवचनाद्दर्शस्यैवानुष्ठाने प्रकारविशेषोऽयम्, न तु कर्मान्तरमिति मीमांसक-सिद्धान्तोऽनुसृतः (See पू. मी. २-३-४; and also कात्यायनश्रौ. ४-४-१-३)

घ. इन्द्रो वृत्रहननानन्तरं भीतस्सन् पलायमानः क्वचिदात्मानं तिरोधायाऽवसत्। ततः पितरस्तमन्विष्य देवसमीपं प्रापयन्। यस्मिन्दिने स आनीतो देवसमीपं प्रापितः साऽमावास्याऽभवत्। तदिदं तैत्तिरीयश्रुतौ "इन्द्रो वृत्रम्" इत्यादिना "अमा वै नोऽद्य वसु वसतीति, इन्द्रो हि देवानां वसु, तदमावास्याया अमावास्यत्वम्" ( तै. सं. २-५-३ ) इत्यन्तेन संदर्भेण प्रतिपादितम्।

1. स भवदिति B 2 of Ad.

2. Ad reads उपदिशति also B 2

चोद्यते, तस्यैव समुदायस्य दोहचतुष्टयविकृतस्य संज्ञैषा। यथा एकस्यैव पुरुषस्य संज्ञा [1]दण्डी शिखीति। अतश्च गुणविकारेष्वग्नीषोमीयादिषु दाक्षायणयज्ञान्तेषु न पुनःप्रयोगो नित्यस्य[क] फलस्याऽनिवृत्तिः। पार्वणयोर्वैमृधस्य च [2]पौर्णमासगुणविकारेष्वपि प्रवृत्तिः ॥ ११ ॥

**द्वौ सायं दोहावेवं प्रातः ॥ १२ ॥**

**सायं सायंदोहाभ्यां प्रचरन्ति प्रातः प्रातर्दोहाभ्याम् ॥ १३ ॥**

**सर्वैर्वा प्रातः ॥ १४ ॥**

तत्र [3]यदा सायंदोहाभ्यां पृथक्प्रचरणं [4]तदा विचारयामः-किं तावत्सायंदोहापकर्षात् साधारणस्य तन्त्रस्याऽपकर्षः? स्वकाले वा प्रयोग इति। स्वकाले प्रयोगमेक आहुः। आग्नेयस्य [ख]मुख्यत्वादाग्नेयप्रातर्दोहानां भूयस्त्वाच्च। तदनुपपन्नम्; सायंदोहयोः पूर्वप्रयोगादाग्नेयस्य मुख्यत्वनिवृत्तिः। सायंदोहावेव मुख्यौ भवतः। अथ च सायंदोहधर्माः पूर्वमेव प्रवर्तन्ते। तस्मान्मुख्यत्वमेव [ग]प्रवृत्तिकारणम्[5]। भूयस्त्वस्यैक-

क. नित्यानामेव दर्शपूर्णमासकर्मणां प्रकारभेदेनाऽनुष्ठानं परम्। न पुनः कर्मणां भेदः। अतः पुनर्नित्यानां नाऽनुष्ठानम्। अत एव च नित्यापूर्वस्याऽप्यनेनैव सिद्धिरिति।

ख. आग्नेयः प्रथममनुष्ठीयते, अतो मुख्यः, मुखे भवो मुख्यः प्रथम इति यावत्। एवमाग्नेयः प्रातर्दोहौ द्वौ इति त्रीणि हवींषि। सायंदोहौ तु द्वावेव। अतस्तेषां भूयस्त्वमपि। अतो 'मुख्यं वा पूर्वचोदनात्' (जै. सू. १२-२-२३) इति न्यायेन भूयोऽनुग्रहन्यायेन च प्रातरेव साधारणं तन्त्रमिति।

ग. सायंदोहौ प्रथमप्रवृत्ताविति तौ मुख्यौ। एवं सायंदोहधर्माः केचित् पूर्वं प्रवृत्ता इति तेऽपि मुख्याः। तदेतदुभयगतं मुख्यत्वमेकं भूयस्त्वं बाधत इति ते पाणिप्रक्षालनादयः स्वकाले प्रातरेवानुष्ठेया इति।

1. B Ms reads शिखी दण्डी च
2. इत आरभ्य अग्रिमसूत्रस्थ तन्त्रस्येति पर्यन्तं B 2 पुस्तके नास्ति
3. An reads यथा
4. तथा इति 'ख' पु.
5. प्रयोगकारणम् 'घ' पु.

कारणस्य ताभ्यां बाधितत्वादपकर्ष एव न्याय्यः। अपि च भूयस्त्वान्मुख्यत्वमेव बलीयः। [क]आग्रयणे आमावास्यतन्त्रनियमात्[1]।

ननु [ख]तन्त्रमध्यपातित्वात्पशुपुरोडाशवद्दोहयोस्तन्त्रं प्रति दौर्बल्यमिति, तदसत्; [ग]न हि दोहयोस्तन्त्रमध्ये पातः। साकंप्रस्थायीयेनेति समुदायस्य चोदितत्वात्। पशोस्तु वाक्यान्तरचोदितस्य वाक्यान्तरेण पशुपुरोडाशश्चोद्यते-"पशुमालभ्य पुरोडाश"मिति। तस्मादिह सहप्रवृत्तेस्तन्त्रस्य दोहयोरुत्कर्षे तन्त्रस्याप्यपकर्षः। न [घ]चान्यस्तन्त्रभेदः। न च प्रयुक्तस्य प्रधानस्य पूर्वकालदृष्टैरुत्तरेद्युः प्रयुज्यमानैराघारादिभिः[2] सम्बन्धस्स्यात्। तस्मात्प्रधानानां सर्वेषां साधारणानामङ्गानामपकर्ष इति। अत उत्तरेद्युराग्नेयस्य प्रातर्दोहायोश्च वैशेषिकं प्रणीताप्रणयनादि प्रयुज्य पार्वणहोमादि [3]क्रियते। दोहास्तु सर्वहुता एव, न तेभ्यः शेषकार्याणीति। आसादने द्वे कुम्भ्यौ द्वे अपिधान्यौ। तन्त्रमितराणि।

क. आग्रयणे ऐन्द्राग्न-वैश्वदेव-सौम्य-द्यावापृथिव्यानि चत्वारि हवींषि। तत्र प्रथमं ऐन्द्राग्नो दार्शिकैन्द्राग्नविकारः। इतरे पौर्णमासविकाराः। तत्र भूयस्त्वन्यायाश्रयणे सर्वेषां पौर्णमासधर्मकत्वमापद्यते। तद्बाधित्वा 'आमावास्यं "तन्त्रम्" (आप. श्रौ. ६. २९. ९) इति दार्शिकधर्माः सूत्रकारेण नियम्यन्ते। तेनावगम्यते—भूयस्त्वापेक्षया मुख्यत्वस्यैव प्राबल्यमभिप्रैति सूत्रकार इति।

ख. प्रथममाग्नेयो विहितः अनन्तरं सायंप्रातर्दोहौ। तत्क्रमेण चानुष्ठानम्। एवञ्च प्रथममाग्नेयधर्माणामनुष्ठानम्, तन्मध्यपतितत्वाच्च दोहयोः तदुपजीवकत्वात् तदनुसारेणैव धर्मग्राहकत्वम्। न तु स्वातन्त्र्येण धर्मप्रयोजकत्वम्, यथा पशुयागप्रयोगान्तर्गतस्य पुरोडाशयागस्य न स्वातन्त्र्येण धर्मप्रयोजकत्वमिति।

ग. दोहयोर्नाऽन्यतन्त्रमध्ये पातः, तयोः स्वातन्त्र्येण विधानात्— "साकंप्रस्थायीयेन यजेत पशुकामः" इति। अत आग्नेयस्य धर्मप्रयोजकत्वम्। तद्वदेव दोहयोरपि। पशुपुरोडाशस्तु न तथा। तस्य "पशुमालभ्य पुरोडाशं निर्वपति" इति पश्वङ्गत्वेन विहितत्वादिति। अतः पशुपुरोडाशस्य पशुतन्त्रमध्यपातात् प्रसङ्गित्वमेव, न तन्त्रित्वमिति।

घ. देशकालकर्तृभेदादिः प्रयोगभेदापादकः, स कोऽप्यत्र नास्तीति।

1. B. Ms reads णामावास्यतन्त्रनियमात्

2. Ad Ms. adds अङ्गैः

3. क्रियेत इति 'क' पु.

प्रोक्षणनिष्टपनोपवेषादानाङ्गारनिरूहणानि तन्त्रम् । [क]कुम्भ्यधिश्रयणपर्यूहणे पर्यायेण, युगपद्दक्षिणहस्तेनाऽशक्तेः । मन्त्रस्य चैकाभिधायिन ऊहाभावाच्च । शाखापवित्रात्याधानादिसंक्षालननिनयनान्तमेकस्यां कृत्वा तथोत्तरस्यां कुम्भ्याम् । दोहनक्रियैकत्वात्पवित्रस्य चासम्भवात् । संक्षालना[1]संसर्गित्वाच्चोद्वासनादि पर्यायेण । आतञ्चनार्थानि सर्वाण्येकस्यां प्रक्षिप्याऽथाऽपरस्यां, आतञ्चनक्रियैकत्वात् । अमृन्मयमिति चैकवचनान्मन्त्रावृत्तिः । द्रव्याभिधानस्य [2]प्रकृतत्वात्सन्निहितत्वाच्च द्रव्ययोरिदमभिहितमिति विशेषा[3]विज्ञानात् । असन्निहिताः पत्न्यः प्रैषकाले । न च तासां संस्कारः, जात्याभिधानवत् । इमौ पर्णमिति तन्त्रेण, एकत्वात् । पृथक्पृथगुपलक्षितानां वत्सानामपाकरणम् । तथा गवां सायंदोहार्थानाम् । संस्कारस्तन्त्रेण भवति । पृथक्पृथक् तिस्रस्तिस्र आतञ्चनार्थाः । [3]द्व्यहे पुरस्ताद्दोह्याः । तत्क्षणादेव दधि यथा स्यात्तथोपाय आस्थेयः । परिस्तरणान्ते कृते आरण्याशनान्ते वा अनन्तरमेव पाणिप्रक्षालनादि ॥ १४ ॥

## पात्रसंसादनकाले चत्वार्यौदुम्बराणि पात्राणि प्रयुनक्ति । तेषां जुहूवत्कल्पः ॥ १२ ॥

स्फ्योऽग्निहोत्रहवणी[5] चाऽपरतः । पुरतः पात्रीप्राशित्रान्वाहार्यस्थालीडापात्र्यश्ममदन्तीवर्जानि । औदुम्बरयोर्जुह्वा सह प्रयोगः । न प्रणीताः

क. 'तेषु कुम्भीमधिश्रयति' (आप. श्रौ. १-१२-१) इति विहितं कुम्भधिश्रयणं (कुम्भ्या अङ्गारोपर्यारोपणं) 'भृगूणां........प्रदक्षिणमङ्गारैः पर्यूह्य' (आप. श्रौ. १-१२-३) इति विहितं पर्यूहणं (अङ्गाराणां समूहीकरणं कुम्भ्या अधोभागे) च प्रथममेकस्यां कृत्वा ततोऽपरस्यां कर्तव्यम् । एकदैव द्वयोः दक्षिणहस्तेन कर्तुमशक्यत्वात्, वामहस्तस्य कर्मानर्हत्वादिति । दक्षिणस्य व्यापृतत्वे वामस्यापि कर्मार्हत्वमिति कथञ्चित्प्रवृत्तावपि वा "मातरिश्वनो घर्मोऽसि" इति कुम्भ्यधिश्रयणमन्त्रे एकवचनश्रवणेन तेन कुम्भीद्वयाभिधानासम्भवात्, प्रकृतावूहासम्भवाच्चेति ।

1. संसर्गानर्हत्वाच्च इति 'ख' पु.
2. प्रस्तुतत्वादिति B 2
3. विशेषविज्ञानादिति B 2
4. संस्कारोऽस्य जातस्य जातस्य संस्कारो गोजात्यभिनवत् ' घ ' पु.
5. B Ms. reads द्वे द्वे
6. भवतीति B[2]
7. स्फयाग्निहोत्रहवण्यौ 'ख' पु.
8. इडापात्रवर्जानि B 2

पुरोडाशश्रपणार्थत्वात्। स्रुः [क] अदृष्टार्थत्वादित्येके[1]। 'यजमान वाचं यच्छे'-त्युक्त्वा वाग्यतः पात्राणि इत्येवमादि पशुवत् वाचं यत्वा यज्ञयोगः। न कुर्वीतेत्युपदेशः[2]; [ख] औषधार्थ इति। 'प्रोक्षणीरासादये'त्यविकृतः सम्प्रैषः। स्रुक्सम्मार्गे पात्रयोस्सहादानादि। जुहूं संमृज्य ततः पात्रे अविकृतेन जुहूमन्त्रेण। लिङ्गमविवक्षितम्, सामान्याभिधानात्। किं सामान्यम्? वाजित्वम्। यथा पत्नीषु पत्नीत्वम्। [ग] कथं स्त्रीत्वं सामान्यवचनं भवतीति चेत्—यथा पुंस्त्ववचनम्। अलिङ्गमसङ्ख्यञ्च सामान्यम्। तत्र यथा पुंशब्दः, एवं स्त्रीशब्दोऽपि। मण्डूकेन विकर्षति "मण्डूकिताभिरागहि" इति। प्रकरणे च समानकार्याणां मा भूत्संस्कारहानिरिति सामान्याभिधानमाश्रीयते। एष एव न्यायो वचनविरोधेऽपि। "इदं देवानाम्" इत्याग्नेये केवले। [घ] अवदानमन्त्रे च। ऊहमेक [ङ] आहुर्गुणविकारेषु। [3]तदा [च] वाजि त्वेति भवति। वेदाग्राणां विभागः। न पवित्रविसर्गः। आज्यान्यभिमन्त्र्य दोहयोरासादनं करोति ॥ १५ ॥

**आज्यभागाभ्यां प्रचर्याऽऽग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सहकुम्भीभिरभिक्रामन्नाहेन्द्रायाऽनुब्रूह्या श्रावयेन्द्रं यजेति सम्प्रैषौ ॥ १६ ॥**

इति षोडशी कण्डिका ॥

क. "अपः प्रणयति" इत्यप्प्रणयनं विधाय ततस्तासां "रक्षसामपहत्यै" इति रक्षोहननरूपादृष्टार्थत्वात् तस्यात्राऽपि सम्भवात्कर्तव्यमिति केचिदाहुरिति।

ख. वाग्यमस्य यज्ञयोगस्य च "तदुदित्वा वाचं यच्छति" (तै. सं. १-६-९४) इत्यादिना हविर्निर्वापानुमन्त्रणमन्त्रपाठानन्तरकर्तव्यत्वेन विधानात् तत्प्रकरणात्तदङ्गत्वमेव। अतस्तयोस्सान्नाय्ये न करणमित्युपदेशमतमिति।

ग. पात्रसामान्याभिधाने नपुंसकेन भाव्यम्—वाजि त्वेति। कथं वाजिनीमिति स्त्रीत्वमिति प्रश्नः। अलिङ्गमसंख्यञ्च सामान्यम्। तस्मिन्नभिधातव्ये लिङ्गमविवक्षित्वा येन केनापि लिङ्गेन प्रयोगो भवति। यथा "मण्डूकेन विकर्षति" इति। अत्र लिङ्गमविवक्षित्वा स्त्रिया पुंसा वा विकर्षणमिति।

घ. "अवदानानि ते प्रत्यवदास्यामि" इति बहुवचनान्त एव प्रयुज्यतेऽवदानद्वित्वेऽपि।

ङ. काम्यगुणस्थले नैमित्तिकस्थले च कर्मण एकत्वेऽपि गुणयोः प्रकृतिविकृतिभावमाश्रित्योहमिच्छन्ति।

च. "वाचं प्राणम्" इति मन्त्रे "वाजि त्वा सपत्नसाहम्" इत्यूहो भवति।

1. इत्यन्ते 'क' पु.
2. न कुर्वन्तीत्युपदेशः 'घ' पु; B. Ms. reads न कुर्वन्त्युपदेश.
3. तदा B

आज्यभागान्ते कुम्भ्यावादायातिक्रामन्नाह—'इन्द्रायाऽनुब्रूहि' इति । महेन्द्रयाजिनो 'महेन्द्रायाऽनुब्रूहि' इति । द्वौ ब्राह्मणौ पात्राभ्यामनुजुहुतः । 'अग्निमावह' 'अग्निं होत्रायाऽऽवह' इति [क]नैनावावाहयति । अन्यदविकृतम् । दोहौ सर्वहुतौ हुत्वा रात्रौ विरमेयुः । श्वोभूते स्तीर्णेषु दर्भेषु अप्रयुक्तान्यपराणि प्रयुज्याऽप्रयुक्तानि पूर्वाणि प्रयुनक्ति । रात्रौ [1]तु कृतं न पुनः क्रियते । प्रणीताप्रणयनादि सर्वं क्रियते आप्यलेपनिनयनान्तम् । बर्हिष्येव निनयनम् । केचित्प्राचीः कुर्वन्ति । हविःपात्रप्रोक्षणे सर्वासां प्रोक्षणीनामुपयोगः । प्रोक्षणीरासादयेति न प्रैषः ।[2] पात्र प्राशित्रहरणश्चादाय तूष्णीम् । अघृताक्तत्वात्प्रतितपनादिसम्मार्गप्रहरणान्तमविकृतम् । स्तीर्ण एव प्रस्तरे पवित्रे अपिसृज्य कपालवत्पुरोडाशाविभात्येवमादि प्रतिपद्यते । दोहयोरभिघारणम् ।[ख] भेदेन हवींषि [4]आसाद्याऽऽसन्नाभिमर्शनम् । उपोत्थाय होता, आवह देवान् [5]यजमानायअग्निमग्न आवह' इत्युक्त्वा दोहदेवतामावाह्य 'अग्निं होत्रायावह' इत्येवमादि 'जातवेद' इत्येवमन्तमुक्त्वोपविशेत् । नाऽऽर्षेयं वृणीते । न निविदः, अग्नेरसंस्कृतत्वात् । आग्नेयस्य हविराहुतिप्रभृत्येवाध्वर्युः प्रतिपद्यते । समानः [6]शेषः । केचित्साधारणानामुत्कर्षम् ।[ग] [घ]द्वे बर्हिषी ।[ङ]न प्रथमे प्रस्तरः । द्वाविध्मौ । पञ्चदश [च]दारूणि परिधयश्च [7]प्रथम इध्मे । न सम्भरणमन्त्रौ प्रथमे ।

क. अग्नेः स्विष्टकृतश्चाभावात्तयोरनावाहनम् ।

ख. "यस्त आत्मे"ति मन्त्रेणोभयोरभिघारणम् ।

ग. मन्यत इति शेषः ।

घ. रात्रावपि हविरासादनार्थं बर्हिः ।

ङ. प्रयाजानुयाजार्थत्वात्प्रस्तरस्य प्रयाजानुयाजानामुत्कर्षस्य वक्ष्यमाणत्वात् रात्रिप्रयोगे न प्रस्तर इत्यर्थः ।

च. आघारानुयाजानामभावात् समित्त्रयनिवृत्तिः ।

१. तु इति केवलं 'क' पुस्तक एव । रात्रौ कृतं न पुनः क्रियत इति 'ख' पु.

२. सम्प्रैष इति 'ख' पु.

३. पुरोडाशावङ्गारानित्येवमादि इति 'ख' पु,

४. सन्नाय्याभिमर्शनमिति B2

५. यजमानायाग्निमावह इति 'घ' 'ङ' पु.

६. शेषस्समाज इति 'ख' पु, शेषं समानमिति B2

७. B Ms omits प्रथम इध्मे

बन्धनमन्त्रः। [क]यज्ञाभिधानान्नोलपराजिः। द्रव्यसंस्कारत्वात् [ख]स्फ्याग्निहोत्रहव[1]ण्यौदुम्बरवेदानां प्रयोगः। ब्रह्मवरणं 'यजमान वाचं यच्छ' इत्येवमादि पशुवत्। [2]न सम्प्रैषः। न सन्नहनमन्त्रः, अन्वा[3]सनार्थं तत्संस्कार इति। न चाग्रे सन्नहनं [4]न दृष्टः [ग]प्रधानोपकार इति। अतः [घ]श्वोभूते। न चायं पत्नीसंस्कारः, तत्संस्कृतायाः क्रियान्तराकरणात्। पात्रयोस्सम्मार्गः, नान्येषां, प्रयोजनाभावात्। प्रोक्षण्युत्पवनादिसंस्काराः। [ङ]न पवित्राविसर्गः। [5]ततस्तरणम्। परिधिभिः परिधानम्। आहवनीयाभिमन्त्रणमग्निकल्पनम्। नाऽऽघारसमिधौ। न विधृती। दोहासादनम्, वेदस्य[च] च। सामिधेन्यः। उपवाजनम्। न चाऽऽघारादय आहुतयः। [छ]नास्ति प्रवरः। न स्रुगादापनं [ज]होतुः। [6]प्रचर्य दोहाभ्याम्। नाऽन्वाहार्यः। ततः परिधिप्रहरणम्। पात्राभ्यां [झ]संस्रावणम्। तूष्णीं बर्हिःप्रहरणम्। न [ञ]वेदस्तरणम्। ब्रह्मा निष्क्रामति। [ट]न यजमानभागः। [ठ]न युनक्ति, न विमुञ्चति। विष्णुक्रमादि याजमानम्, प्रधानसंस्कारत्वात्। श्वोभूते सर्वं यथाप्रकृति।

क. स्तरणमन्त्रे "यज्ञस्य सन्ततिरसि" इति यज्ञाभिधानात् यज्ञस्य साधारणत्वात् तेनैव गतार्थत्वात्।

ख. स्फयस्य वेद्यग्निसंस्कारत्वात्। अग्निहोत्रहवण्याः पात्रप्रोक्षणार्थत्वात्, औदुम्बरपात्रस्य होमार्थत्वात्, वेदस्य चोपवाजनार्थत्वात् प्रयोगः।

ग. प्रथमप्रयोगे दृष्टोपकाराभावान्न पत्न्यास्सन्नहनम्।

घ. श्वोभूते परस्मिन्दिन एव सन्नहनमिति। पात्रयोः औदुम्बरयोः।

ङ. श्वोभूते प्रोक्षण्युत्पवनार्थं तस्यावश्यकत्वात्।

च. वेदस्य चाऽऽसादनमिति।

छ. प्रवरोऽस्ति, अन्यार्थत्वादिति आण्डप्पिल्लै।

ज. प्रयोजनाभावादिति।

झ. "सᳪस्रावभागाः स्थ" इति मन्त्रेण।

ञ. उत्तरत्र वेदकार्यसत्वादिति।

ट. सर्वहुतत्वात् इति।

ठ. यज्ञयोगो यज्ञविमोकश्च न भवतीति।

1. हवण्युदुम्बर इति 'ख' पु,
2. असम्प्रैष इति B2 + 'ख' पु.
3. अन्वाधानार्थमिति B2
4. अदृष्टप्रधानोपकार इति B2
5. तत्र स्तरणमिति B2 + 'ख' पु.
6. B Ms reads प्रचर्यसायंदोहाभ्याम्

उपदेशो नेध्माबर्हिषी। केवलं पात्रसादनम्, ब्रह्मवरणम्। अभिमर्शनम्। प्रोक्षणम्[क]। सम्मार्गं कृत्वा दोहासादनम्। ततो यागं कृत्वोपरमः। श्वोभूते [ख]पुनस्सर्वमित्यधिकं कुर्वन्नाग्नेयादीनां प्रयोगं दर्शयति। आज्यभागाभ्यां प्रचर्य, रात्रौ प्रचारः। [ग]आग्नेयेन प्रचर्य श्वोभूते। [घ]इहाश्रावयेत्येव लभ्यत इति केचित्॥ १६॥

यावत्यः कुम्भ्यस्तावन्तो ब्राह्मणा दक्षिणत उपवीतिन उपोत्थाय कुम्भीभ्यः पात्राणि पूरयित्वा तरध्वैर्युं जुहुतमनुजुह्वति॥ १॥

[ङ]पूर्वंगता ब्राह्मणा नाऽपरेणाऽऽहवनीयं गच्छन्तीत्युपदेशः। उपवीतविधिः श्रौतप्रायश्चित्तार्थ[1]ः॥ १॥

स्विष्टकृद्भक्षाश्च न विद्यन्ते॥ २॥

समानमत ऊर्ध्वम्। सन्तिष्ठते साकंप्रस्थायीयः॥३॥

[च]विद्यन्ते स्विष्टकृद्भक्षाः आग्नेयस्य। दोहास्तु सर्वहुताः॥ २, ३॥

दाक्षायणयज्ञेन सुवर्गकामः॥ ४॥

द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत॥ ५॥

आग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादशकपालः पूर्वस्यां पौर्णमास्याम्। आग्नेयोऽष्टाकपाल ऐन्द्रं दध्युत्तर-

क. पात्राणामिति शेषः।

ख. श्वोभूते रात्रौ कृतादधिकं कर्तव्यमित्युपदिशन् आग्नेयादीनामपि प्रयोगः कर्तव्य इति सूचयतीति।

ग. रात्रावाज्यभागाभ्यां प्रचर्याऽऽज्यभागान्ते दोहयोः प्रचारः। श्वोभूते आग्नेयेन प्रचर्य दोहयोः प्रचारः कर्तव्यः, इतरथाऽऽज्यभागाभ्यामित्यनर्थकं स्यादिति।

घ. अत्र 'आश्रावय, इन्द्र यज' इति पाठादेव दोहयोः प्रचारो लभ्यत इति केचिद्वदन्तीति।

ङ. आहवनीयमग्रेण दक्षिणतः प्रविष्टानां ब्राह्मणानामाश्रावणोत्तरकालमुत्थापनमात्रम्, न पुनरतिक्रमणमित्युपदेशमतम्। स्वमते त्वध्वर्युवदतिक्रमणं कर्तव्यमिति।

च. सूत्रे दोहानामिति शेषः। तेषां सर्वहुतत्वात्। आग्नेयस्य तु शेषसत्वात् विद्यन्त इति।

1. श्रौतः प्रायश्चित्तार्थः इति 'ख' पु.

स्याम् । आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालः पूर्वस्याममावास्यायाम् । आग्नेयोऽष्टाकपालो मैत्रावरुण्यामिक्षा द्वितीयोत्तरस्याम् ॥ ६ ॥

दाक्षायणयज्ञे नोपांशुयाजः, आग्नेयादीनामनुक्रमणात् । असोमयाजिनोऽप्यग्नीषोमीयः, पुनर्विधानात् । दध्येव द्वितीयम् । तच्च [क]स्थानादेकदेवतत्वाच्चोपांशुयाजविकारः । [ख]प्रकरणात्तु दधिधर्माणां प्राप्तिः, अनुपकारकाणां निवृत्तिः । इदानीमुपांशुयाजस्यो[1]पकुर्वन्ति द्वारं जातमिति । उपांश्विज्या हुतानुमन्त्रणादीनामद्रव्यद्वारत्वादुपांशुयाजधर्मा एव क्रियन्ते । पूर्णमासे सन्नयेदिति वचनात्साान्नाय्यप्रधानस्योभयत्र[2] भावः, आग्नेयवत् । तत्र दध्येव नियम्यते । महेन्द्रयाजिनोऽप्यैन्द्र एव [ग]समाम्नानात् । न च तस्याऽऽमावास्यत्वम् यथा [घ]पौर्णमास्यामाग्नेयः[3] । अयमेवोपदेशः। सन्नयतोऽपि भवत्यैन्द्राग्नः। उभयविकारः आमिक्षेयम्, [ङ]द्वितीयेति वचनात् । सान्नाय्यस्य विकार आमिक्षा, न [च]वैश्वदेव्याः । वाजसनेयिनान्तु वाजिनेज्या भवति ॥ ६ ॥

क. स्थानात् क्रमात्, आग्नेयानन्तरं द्वितीयस्थाने पाठात् । ऐन्द्रं दधीति सान्नाय्यप्रत्यभिज्ञानेऽपि पौर्णमास्यामाग्नेयानन्तरं विधानात् उपांशुयाजविकारत्वमिति ।

ख. दर्शपूर्णमासप्रकरणाम्नानाद्दधिधर्माणां प्रकरणस्योभयाविशेषात् अत्रापि प्राप्तौ उपांशुयाजे तेषामुपकाराभावात् अनुपकारकाणामङ्गत्वासम्भवात् ततस्तेषां द्वारलोपान्निवृत्तिर्जाता। इदानीमुपांशुयाजे दध्नो द्रव्यत्वेन विधानात् लब्धद्वाराः दधिधर्माः प्रवर्तन्त इति । अत्र दधिधर्माणामुपांशुयाजार्थत्वकथनं मीमांसकमतविरुद्धम् ।

ग. वाजसनेयिशाखायाम् "अथ प्रातः आग्नेयः पुरोडाशो भवत्यैन्द्रं सान्नाय्यम्" ( श. ब्रा. २-४-१-१२ ) इत्यविशेषेणेन्द्रस्यैव देवतात्वेन विधानादिति ।

घ. आमावास्यस्याऽऽग्नेयस्यं यथा पौर्णमास्यामपि विधानम्, तद्वत्सान्नाय्यस्यापीति ।

ङ. आमिक्षा द्वितीयेत्युक्तत्वात् द्वितीयस्थानापन्नपयोदध्युभयविकृतिभूतेयमामिक्षेति ।

च. चातुर्मास्यान्तर्गताया वैश्वदेव्या आमिक्षाया एव सर्वामिक्षाप्रकृतित्वात् अस्या अपि तद्विकृतित्वमेव युक्तम्, तथापि सान्नाय्यस्यैव स्वधर्मयुक्तस्य कथञ्चिद्द्रव्यदेवताविकृतस्योपदेशात् । अतो न वैश्वदेवीधर्माः प्रसूनमयत्वादयः । वाजिनयागस्तु भवत्येव—"अथ वाजिभ्यो वाजिनं जुहोति" ( श. ब्रा. २-४-१-२२. ) इति वाजसनेयिनां ब्राह्मणे विधानादिति ।

1. उपांशुयाजविकारस्य इति B2
2. उभयत्राभाव इति B2
3. आग्नेयस्य इति B2

**व्यावृत्काम इत्युक्तम् ॥ ७ ॥**

व्यावृत्कामः[क] पाप्मना पृथक्त्वमिच्छन् । क्षुरपविः क्षुरधारा । ताजक् तस्मिन्नेव काले । पल्पूलनम् सम्मर्दनम् । पौर्णमास्याममावास्यायां वा प्रधानानि यानि, तानि पुनः [ख]पुनः । अनृतप्रतिषेधः [1]क्रत्वर्थः । तस्यातिक्रमेऽन्तरितप्रायश्चित्तं व्रातपत्यादि । [ग]आहिताग्निकालस्योपनयनकालस्य[2] त्रिरात्रमक्षरादि तेषां समुच्चयः । केचित्तु[घ] उत्तरमेव, पूर्वस्य निवृत्तिः । [ङ]दधि यजमानभागस्यार्धमासपानं केचित्, ' एतमर्धमासम् ' इति लिङ्गात् ॥ ७ ॥

**ऋत्वे वा जायामुपेयात् ॥ ८ ॥**

[च]ऋत्वमार्तवम् । तत्र सवर्णायामुपगमनम्, यस्यामधिकृतो जायते सा जाया ॥ ८ ॥

**सोऽयं दर्शपूर्णमासयोः प्रक्रमे विकल्पोऽनेन दर्शपूर्णमासाभ्यां वा यजेत ॥ ९ ॥**

**तेन पञ्चदशवर्षाणीष्ट्वा विरमेद्यजेत वा ॥**

क. समानेभ्य आत्मनो व्यावृत्तिमीप्सुरिति रुद्रदत्तः । 'व्यावृत्तंकाम एतेन यज्ञेन यजेत क्षुरपविर्ह्येष यज्ञस्ताजक् पुण्यो वा भवति प्र वा मीयते तस्यैतद्व्रतं नाऽनृतं वदेन्न मांसमश्नीयान्न स्त्रियमुपेयान्नाऽस्य पल्पूलनेन वासः पल्पूलयेयुः ( तै. सं. २-५-५-६ ) इति ब्राह्मणभागस्य व्याख्यानमिदम् ।

ख. दाक्षायणशब्देनाऽऽवृत्तेरेव विधानादिति ।

ग. आहिताग्निकाले ये नियमाः उपनयनकाले च तेषामुभयेषामतिक्रमे तत्प्रायश्चित्तसमुच्चयः ।

घ. आहिताग्निनियमानामेवेदानीमनुष्ठानम्, न पूर्वेषाम । तेषां तु निवृत्तिरेव । उत्तराश्रमधर्मैः पूर्वाश्रमधर्मनिवृत्तिवदिति ।

ङ. यजमानभागस्य दध्नोऽर्धमासं यावत्पानं कर्तव्यमिति केषाञ्चिन्मतम । यतः श्रुतौ स एतमर्धमासं सधमादं देवैस्सोमं पिबति ( तै. सं. २-५-५-५ ) इति दधिपानस्य पञ्चदशदिनावधिकसोमपानत्वसंस्तवात् तावत्कालिकपानं ततोऽवगम्यत इति ।

च. "न स्त्रियमुपेयात्" इति ब्राह्मणनिषिद्धस्य स्त्र्युपगमनस्य विकल्पार्थमिदम् ।

1. न त्वङ्गार्थ इति 'घ' 'ब' पु, क्रत्वङ्गम इति ख. पु.

2. उपनयनकालस्येति नास्ति 'घ' पु.

प्रक्रम आरम्भः । तेनैवान्तो ऽनेयः ॥ ९, १० ॥

सन्तिष्ठते दाक्षायणयज्ञः ॥ ११ ॥

[ख]दक्षस्यायनं दाक्षायणम् । दाक्षायणश्च यज्ञश्च दाक्षायणयज्ञः ॥ ११ ॥

एतेनैडादधः सार्वसेनियज्ञो वसिष्ठयज्ञश्शौनकयज्ञश्च व्याख्याताः ॥ १२ ॥

इति सप्तदशी कण्डिका ॥

इडादधेन दृष्टः ऐडादधः । सर्वसेनादिभिर्दृष्टा यज्ञाः सार्वसेन्यादयः । नामधेयप्रयोजनम्– ऐडादधेन यक्ष्ये, 'ऐडादधं[1] हविरिदमेषां मयि' इत्येवं यथानामोत्तरेषु ॥ १२ ॥ १७ ॥

इति आपस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

तृतीयप्रश्ने पञ्चमः पटलः

अथ षष्ठः पटलः ॥

ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोः । तं वृणीते–'भूपते भुवनपते महतो भूतस्य पते । ब्रह्माणं त्वां वृणीमह ' इति ॥ १ ॥

ब्रह्मवरणमध्वर्युणाऽपि कर्तव्यम् । [ग]उभयत्र वरणविधानात् । ब्रह्मिष्ठो ब्राह्मणाधिकः ॥ १ ॥

क. विकल्पेषु स्वेच्छया किञ्चिद्गृहीतव्यं प्रथमप्रयोगे । यत्तत्र गृहीतं तेनैव आन्तमनुष्ठानं कर्तव्यमिति । उक्तं ह्यभियुक्तैः–रूपं कालोऽनुनिर्वापो देवतायोग एव च । आदौ ये त्रिधृताः पक्षास्त इमे सर्वदा स्मृताः इति ।

ख. एतेन मीमांसकपक्ष एवाभिमतो भाष्यकारस्येति गम्यते ।

ग. आध्वर्यवे याजमाने च ब्रह्मवरणस्य विधानादिति ।

1 ऐडादधेन यक्ष्य इति नास्ति ' क ' पु.

वृतो जपति–अहं भूपतिरहं भुवनपतिः । अहं महतो भूतस्य पतिः । देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि । देव सवितरेतं त्वा वृणते । बृहस्पति दैव्यं ब्रह्माणम् । तदहं मनसे प्रब्रवीमि । मनो गायत्रियै । गायत्री त्रिष्टुभे । त्रिष्टुब्जगत्यै । जगत्यनुष्टुभे । अनुष्टुप्पङ्क्त्यै । पङ्क्तिः प्रजापतये । प्रजापतिर्विश्वेभ्यो देवेभ्यः विश्वे देवा बृहस्पतये । बृहस्पतिर्ब्रह्मणे । ब्रह्म भूर्भुवस्सुवः । बृहस्पतिर्देवानां ब्रह्मा । अहं मनुष्याणाम् । बृहस्पते यज्ञं गोपायेति ॥ २ ॥

वृतो जपतीति वचनात् यत्र वरणं नास्ति [क]सोमेष्टिषु तत्र जपस्यापि लोपः ॥ २ ॥

उक्त्वाऽपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य ' निरस्तः परावसुः सह पाप्मने'ति ब्रह्मसदनात्तृणं निरस्य 'इदमहमर्वाग्वसोस्सदने सीदामि । प्रसूतो देवेन सवित्रा बृहस्पतेस्सदने सीदामि । तदग्नये प्रब्रवीमि तद्वायवे तत्सूर्याय तत्पृथिव्या " इत्युपविशति ॥ ३ ॥

आहवनीयमभ्यावृत्याऽऽस्ते ॥ ४ ॥

उपविशत्याहवनीयाभिमुखः । आस्ते च तत्रैवासमाप्तेः । [ख]केचित्प्राङ्मुख उपविश्य पश्चात्परिवर्तत इति ॥

कर्माणि कर्माणि वाचं यच्छति ॥ ५ ॥

ऋत्विग्यजमानकर्माणि ॥ ५ ॥

क. प्रायणीयातिथ्यादयः सोमाङ्गभूता इष्टयः सोमेष्टयः ।

ख. तत्पृथिव्या इत्युपविशति इति पूर्वं विधाय आहवनीयमभ्यावृत्याऽऽस्ते इति पुनर्विधानात् पूर्वं प्राङ्मुख उपविश्य पश्चात् उदङ्मुखमभिपर्यावर्तत इति ।

मन्त्रवत्सु वा कर्मसु । याथाकामी तूष्णीकेषु ॥

अमन्त्रवत्यपि वेद्यन्तपरिस्तरणादौ । तूष्णीकेष्वर्थकृत्येष्वपि पात्रप्रक्षालनादिषु । मानसानि वा तूष्णीकानि, “ स प्रजापतिस्तूष्णीमाघारमाघारयत् ” इति दर्शनात् । थाऽस्येच्छा तथा प्रयुङ्क्त इति याथाकामी ॥६॥

यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं[1] व्याहृतीश्च जपित्वा वाचं यच्छेत् ॥ ७ ॥

प्रमत्तः प्रमादेन युक्तः, अभिव्याहरेत् उल्लापयेत् ॥ ७ ॥

'ब्रह्मन्नपः प्रणेष्यामी'त्युच्यमाने ॥ ८ ॥

इत्यष्टादशी कण्डिका

'प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणा९ं सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानञ्च धेह्योंं प्रणये'ति प्रसौति ॥ १ ॥

उच्यमान इति वर्तमानसामीप्ये, नाऽसमासे प्रैषे । प्रणवाद्युच्चैः, “ यज्ञेषु चैतदादयः प्रसवा ” इति वचनात् ॥

सर्वेष्वामन्त्रणेष्वेवं प्रसवस्तेन कर्मणा यस्मिन्नामन्त्रयते ॥ २ ॥

“प्रोक्ष यज्ञ”मिति हविष इध्माबर्हिषश्च प्रोक्षे । “बृहस्पते परिगृहाण वेदि९ं स्वगा वो देवास्सदनानि सन्तु । तस्यां बर्हिः प्रथता९ं साध्वन्तरहि९ंस्रा नः पृथिवी देव्यास्त्वि”त्युत्तरस्मिन् परिग्राहे । 'प्रजापतेऽनुब्रूहि यज्ञ'मिति सामिधेनीरनुवक्ष्यन्तम् । 'वाचस्पते वाचमाश्रावयैतामाश्रावय यज्ञं देवेषु मां मनुष्येष्वि'ति प्रवरे ॥ ३ ॥

1 इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पा९ंसुरे इति वैष्णवी ऋक् ।

'देवता वर्धय त्व'मिति सर्वत्राऽनुषजति ॥ ४ ॥

यस्मिन् कर्मण्यामन्त्रयतेऽ[1]ध्वर्युः प्रणेष्यामि, प्रोक्षिष्यामि, परिग्रहीष्यामीति तेषु प्रतिवचनम्-प्रणय, प्रोक्ष, परिगृहाण, अनुब्रूहि, आश्रावय । प्रणवादीन्येतानि सर्वाणि ॥ २-४ ॥

"मित्रस्य त्वा चक्षुषा प्रेक्ष" इति प्राशित्रमवदीयमानं प्रेक्षते ॥ ५ ॥

अवदीयमानस्य प्रेक्षणं प्राशित्रस्य । [क]बहुष्वपि सकृदेव मन्त्रः । अकालभेदात् प्राजापत्येषु मनोतावत, अकरणत्वात् । केचिदावृत्तिः [2]विशेष[ख]वचनात् ॥ ५ ॥

'ऋतस्य पथा पर्येही'ति परिह्रियमाणं 'सूर्यस्य त्वा चक्षुषा प्रतिपश्यामी'त्याह्रियमाणम् ॥ ६ ॥

परिह्रियमाणमग्रेणाऽऽहवनीयम् । आह्रियमाणमात्मसमीपम् ॥ ६ ॥

सावित्रेण प्रतिगृह्य "पृथिव्यास्त्वा नाभौ सादयामीडायाः पद" इत्यन्तर्वेदि व्यूह्य तृणानि प्राग्दण्डं सादयित्वा 'अदब्धेन त्वा चक्षुषाऽवेक्ष' इत्यवेक्ष्य सावित्रेणाऽङ्गुष्ठेनोपमध्यमया चाऽङ्गुल्याऽऽदाय "अग्नेस्त्वाऽऽस्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे सादयामि" इत्यसंम्लेत्याऽपिगिरति ॥ ७ ॥

इत्येकोनविंशी कण्डिका

क. इष्टिषु बह्वीष्वपि सहप्रयुज्यमानासु प्राशित्रहरणावदानस्य बहुत्वेऽपि सकृदेव मन्त्रः प्रयोक्तव्यः । यथा पशुगणे प्राजापत्यादौ क्रियमाणानुवादिनो मनोतामन्त्रस्य सकृदेव प्रयोगः कालभेदाभावात् इति ।

ख. प्रतिद्रव्यमवदानभेदेन तत्कालस्यापि भेदात्कर्मकाल एव मन्त्रः प्रयोक्तव्य इति विशेषविधेरिति ।

1. B. Ms omits अध्वर्युः
2. B. Ms reads अविशेषवचनात्; शेषवचनादिति 'घ' पु.

[क]सावित्रः प्रतिगृह्णाम्यन्तः । आदद इति द्वितीयः । एवमन्तयोरन्यत्रापि पाठात् । असंश्लेत्य असंस्पर्शयन् दन्तोष्ठाभ्याम् ॥ ७ ॥ २१ ॥

"या अप्स्वन्तर्देवतास्ता इदꣳ शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ स्वाहा" इत्यद्भिरभ्यवनीयाऽऽचम्य "घसीना मे मा सपृक्था ऊर्ध्वं मे नाभेस्सीदेन्द्रस्य त्वा जठरे सादयामी'ति नाभिदेशमभिमृशति ॥ १ ॥

[१]'वाङ्म आस'न्निति यथालिङ्गमङ्गानि ॥ २ ॥

[२]"अरिष्टा विश्वानी"त्यवशिष्टानि ॥ ३ ॥

[ख]अभ्यवनयनम् अन्तर्निनयनं प्राशित्रस्योच्छिष्टेनैव,[ग] उत्तरत्राऽऽचमनविधानात् ॥ १–३ ॥

प्रक्षाल्य प्राशित्रं पूरयित्वा 'दिशो जिन्वे'ति पराचीनं निनयति ॥ ४ ॥

पराचीनमनिवर्तयन् मुखेन [1]पुरस्तात् ॥ ४ ॥

मां जिन्वेत्यभ्यात्मम् ॥ ५ ॥

मां जिन्वेति पुनर्गृहीत्वा शेषमित्यवचनात् । अभ्यात्ममात्मन उपरि ॥ ५ ॥

यत्राऽस्मै ब्रह्मभागमाहरति तं प्रतिगृह्य नाऽसास्थिते भक्षयति ॥ ६ ॥

क. "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि" ( तै. आ. ३-१०-१. ) इति प्रतिग्रहमन्त्रमध्ये 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे' (तै. आ. ४–२) इति प्रवर्ग्यमन्त्रे च पाठादिति ।

ख. अद्भिस्सह प्राशित्रस्य निगलनमिति यावत् ।

ग. मन्त्रोच्चारणमिति शेषः ।

1. पुरस्तान्निनयति मां जिन्वेति 'च' 'व' पु.

१. वाङ्मआसन् । नसोः प्राणः । अक्ष्योश्चक्षुः । कर्णयोश्श्रोत्रम् । बाहुवोर्बलम् । ऊरुवोरोजः ।

२. अरिष्टा विश्वान्यङ्गानि तनूस्तनुवा मे सह नमस्ते अस्तु मा मा हिꣳसीः ॥

[क]संस्थिते भक्षणमाध्वर्यवे । सन्तिष्ठते दर्शपूर्णमासाविति तन्त्रोक्तत्वात् ॥ ६ ॥

'ब्रह्मन् ब्रह्माऽसि ब्रह्मणे त्वा हुताद्यमा मा हिꣳसीरुतो मह्यꣳशिवो भवे'त्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति ॥७॥

'ब्रह्मन् प्रस्थास्याम' इत्युच्यमाने 'देव सवितरेतत्ते प्राह तत्प्रच सुव प्रच यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्यों प्रतिष्ठे'ति प्रसौति ॥ ८ ॥

अभिमृष्टेऽन्वाहार्ये ब्रह्मणा यजमानेन च प्रैषोऽध्वर्युणोच्यते ॥ ७, ८ ॥

"भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यता"मिति यत् किञ्च यज्ञे मृन्मयं भिद्येत तदभिमन्त्रयेत ॥ ९ ॥

मृन्मये भिन्नेऽभिमन्त्रणं [क]समुच्चीयते ॥ ९ ॥

ब्रह्मभागं प्राश्य, "अयाडग्निर्जातवेदाः । प्र णो यक्ष्यभिवस्यों अस्मान् सन्नस्सृज सुमत्या वाजवत्ये"त्याहवनीयमुपस्थाय यथेतं प्रतिनिष्क्रामति ॥ १० ॥

[1]"अयाडग्निर्जातवेदा" इत्यृक् । प्रणो यक्ष्यभिवस्य इति यजुः । वरुणप्रघासेषु तन्त्रेणोपस्थानं [ख]विभवात् ॥ १० ॥

क. अध्वर्युप्रयोगसमाप्त्यनन्तरमेव, कपालमोचनान्त इति यावत् । प्राशित्रं ब्रह्मा भक्षयेत् न ब्रह्मतर्पणान्ते । कपालविमोकान्त एव 'सन्तिष्ठते दर्शपूर्णमासौ' इति समाप्त्यभिधानात् ।

क. अध्वर्युणा यजमानेन चायं मन्त्रः प्रयोक्तव्य इति ।

ख. विहारद्वयगतस्याऽप्याहवनीयस्य सन्निहितत्वात् अनूहेन सकृत्कृतेनैवोपस्थानेनोभयत्र कार्यनिष्पत्तेस्सम्भवादिति ।

1. अयाडग्निर्जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य । सन्वन्सनि ꣳ सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्छ भद्रम् ॥

## एवं विहितमिष्टिपशुबन्धानां ब्रह्मत्वं ब्रह्मत्वम्॥११॥

इति विंशी कण्डिका॥

इष्टिपशुबन्धानामन्यत्रापि यदुक्तं ब्रह्मत्वम् यथा [क]सव्यावृत्तौ ब्रह्मयजमानाविति, तस्याऽकरणेऽपि न दोषः। एवंविहितमिति वचनात्।

[1]केचिदाहुः—[ख]इष्टिपशुबन्धानान्तु यदधिकमपेक्षितम्, तत्तत्रैव विहितमिति। ब्रह्मत्वं प्रकरण इत्युपदेशः[ग]॥ ११ ॥

### इत्यापस्तम्बश्रौतसूत्रभाष्ये तृतीयप्रश्ने

### षष्ठः पटलः॥ तृतीयः प्रश्नश्च समाप्तः॥

क. आपस्तम्बीयानां ब्रह्मत्वमेतावदेव। एतावति कृते कर्म सगुणं भवति। अतो नाऽधिकस्याऽऽश्वलायनाद्युक्तस्याऽकरणेऽपि दोष इति।

ख. इष्टिपशुबन्धानां दर्शपूर्णमासप्रकृतित्वादेव सिद्धे एवं विहितमिष्टिपशुबन्धानां ब्रह्मत्वमित्यधिकसूत्रकरणमन्यत्राधिक्यस्यापि समुच्चयार्थ इति केचित् इति।

ग. 'ब्रह्मिष्ठो ब्रह्म.' इत्येव वक्तव्ये दर्शपूर्णमासयोरित्यधिकग्रहणं दर्शपूर्णमासप्रकरण आम्नातस्य ब्रह्मपटलस्य हौत्रादिवत् सर्वसाधारणत्वप्राप्तौ इष्टिपशुबन्धानामेवेदमिति द्योतनार्थमित्युपदेशमतमिति।

1. B. Ms. omits the portion beginning from केचिदाहुः and ending with इत्युपदेशः।

श्रीः

# धूर्तस्वामिकृते आपस्तम्बश्रौतसूत्रभाष्ये

## चतुर्थ प्रश्नः

### प्रथमः पटलः

**याजमानं व्याख्यास्यामः ॥ १ ॥**

यजमानस्य कर्म याजमानम् ॥ १ ॥

**यजमानस्य ब्रह्मचर्यं दक्षिणादानं द्रव्यप्रकल्पनं कामानां कामनम् ॥ २ ॥**

[1]पुनर्यजमानग्रहणम[क]यजमानस्य मा भूवन्निमे धर्मा इति [ख]यजमानाद्या वा अवचनात् । [ग]नियमा ब्रह्मचर्यादयो य एतस्मिन् प्रकरण उच्यन्ते ते यजमानस्यैव भवन्ति [2]नाध्वर्योः । लोके फलसंयुक्तस्यैवोपवासादीनि । अन्यस्मिन्नपि वेदे यजमानस्यैव नियमाः । वचनादृत्विजामपि यो[घ]ऽस्याग्निमाधास्यन् स्यादित्यादि ।

क. कृतसङ्कल्पस्यैव यजमानस्येमे वक्ष्यमाणा धर्माः, नाऽऽहिताग्निमात्रस्येति द्योतयितुं पुनर्यजमानग्रहणमिति ।

ख. पत्न्या यावदुक्तधर्मत्वे त ब्रह्मचर्यादीनामविधानात् पुरुषस्यैवेमे धर्मा इति ज्ञापयितुं वा पुनर्यजमानग्रहणमिति ।

ग. तृतीयपक्षोऽयम् ।

घ. क्वचिद्वचनादृत्विजामपि नियमा भवन्ति । यथा–'योऽस्याग्निमाधास्यन् स्यात् स एतां रात्रिं व्रतं चरति न मांसमश्नाति, न स्त्रियमुपैति" (आप. श्रौ. ९.७.१६.) इत्याधाने विहिता धर्मा अध्वर्योर्भवन्ति इति ।

1. B. Ms reads पुनर्यजमानग्रहणादयजमानस्य; An reads पुनर्यजमानग्रहणादयतः; B² & D. M. A.

2. B. Ms in addition आध्वर्यवो वेद इति समाख्यानादध्वर्योः प्राप्ताः

[क]तथा दक्षिणादानादीनि फलसंयुक्तानि वचनादृत्विजामपि भवन्ति, "अनड्वान् होत्रा देय" इति। [1]कामानां कामनं वचनादृत्विजां[ख]यदि कामयेताऽध्वर्युरात्मानं यज्ञयशसेनाऽर्पयेयमिति च ॥ २ ॥

**प्रत्यगाशिषो मन्त्रान् जपत्यकरणानुपतिष्ठतेऽनुमन्त्रयते ॥ ३ ॥**

प्रत्यगाशिष आत्मगामिन [2]अस्मदर्थवाचिन [3]उत्तमपुरुषवाचिनश्च तेषामाशीर्वेतामन्तरेणाऽपि वचनं याजमानत्वम्। [4]यथोद्भष्ट्यादीनामभिमन्त्रणं [ग]गर्गत्रिरात्रे। [घ]जपोपस्थानानुमन्त्रणानुवीक्षणादयो[5] ये दूरस्थाः क्रियायास्तेऽकरणाः। ये सन्निपत्योपकुर्वन्ति ते प्रत्यगाशिषोऽप्याध्वर्यवा एव। यथाग्न्युपसमिन्धनमन्त्राधाने। यत्र सप्तम्या निर्देशः तत्र जपः। यथा होतृप्रवरेऽध्वर्युप्रवरे च प्रव्रियमाणे। यत्र तु द्वितीया तत्रोपस्थापनमनुमन्त्रणं वा। पुनर्वचनं [ङ]नियमार्थम् ॥ ३ ॥

क. "सुवर्गाय वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि" (तै. सं. ६.६.१.१.) इति दक्षिणादानस्य तत्सम्बन्धिहोमादेश्च फलसंयुक्तत्वेऽपि वचनादध्वर्योः। तथा "यस्यैवं विदुषोऽन्वाहार्य आह्रियते साक्षादेव प्रजापतिमृध्नोति" (तै. सं. १.७.१.) इत्याद्यपि वेदितव्यम्।

ख. एवं फलकामनापि यजमानस्यैव। वचनादृत्विजामपि भवति। यथा–यदीत्यादि। अध्वर्युः यज्ञजन्या कीर्तिः आत्मन एव स्यादिति कामयेत तदा।

ग. गर्गत्रिरात्रो नामाऽहीनः क्रतुः। तत्र उद्भृष्टिः, वेहत् वामनश्चेति पशुत्रयं विहितं दिनत्रये। तेषामभिमन्त्रणमुक्तम्–'त्वमग्ने सहस्रमानय' इत्यादिना। तत्र तत्फलस्य यजमानगामित्वात विनाऽपि वचनं तस्य याजमानत्वमिति। (See आप. श्रौ. २२.१९. १०.१६.)

घ. अध्वर्युकाण्डे पठिता अपि ये आत्माशीर्वाचिनो मन्त्राः तत्तत्क्रियाद्यनभिधायकत्वात् करणत्वं न भजन्ते, ते यजमानेन जपोपस्थानादौ प्रयोक्तव्याः समाख्यां बाधित्वापि। ये तु करणत्वादिना क्रियासम्बन्धं प्राप्तुमर्हन्ति तेऽध्वर्युणैव प्रयोज्याः प्रत्यगाशिषोऽपि। यथा–अग्न्यन्वाधानमन्त्रा "ममाग्ने वर्चो विहवेष्वस्तु" इत्यादय इति।

ङ. सत्यप्येवं यत्र पुनर्वचनं, यथा–"आग्नेयाग्नमानीभ्यां गार्हपत्यमुपतिष्ठते" इति तत्रोपस्थानमेव कर्तव्यम, नानुमन्त्रणमिति नियमार्थं वचनमिति।

1. Ad omits कामानां कामनं वचनादृत्विजाम् and B².
2. 'क' reads अस्मद्वाचिनः
3. Ad omits उत्तमपुरुषवाचिनश्च
4. An reads यथा भृष्ट्यादीनाम्।
5. B. ms. reads अनुमन्त्रणादिश्चयः; अभिमन्त्रणेत्यादि पाठः B²

**पर्वणि च केशश्मश्रु वापयते ॥ ४ ॥**

अर्थप्राप्तत्वाद्वपनस्य यदि च [क]विद्यते ततोऽस्मिन् काले नियम्यते । अतः इष्टिबहुत्वे पुनः पुनः न क्रियते । चशब्देनाऽन्यत्राऽपि अप्रतिषेधोऽनुमीयते ॥ ४ ॥

**अप्यल्पशो लोमानि वापयत इति वाजसनेयकम् ॥ ५ ॥**

[ख]अप्यल्पशः अल्पान्यपि लोमान्यसमर्थान्यपि श्मश्रूणि ॥ ५ ॥

**"विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमि" इति यक्ष्यमाणोऽप उपस्पृशति ॥ ६ ॥**

यक्ष्य इत्युक्त्वा कामो वपनम् । स्नात्वाऽपामुपस्पर्शनम्, [ग]यक्ष्यमाण इति वचनात् । [1]अमावास्यायामपि पुनः कालभेदात् ॥ ६ ॥

**तदिदं सर्वयज्ञेषूपस्पर्शनं भवति ॥ ७ ॥**

एवमिष्टिविकारेषु भवति । सर्वयज्ञाः [घ]दर्विहोमैस्सह । उपदेशो यज्ञक्रतुसंयुक्तेष्वेव, ब्राह्मणे तथा वचनात् न त्वेवाग्निहोत्रे । तत्र होमे [ङ]पुनर्विधानात् । यज्ञक्रतुषु यक्ष्यमाणो वेद्या वेति पुरस्तात्प्रणयनस्येष्टिविकारेष्वपामुपस्पर्शनम् । सोमेष्टिषु[च] सोमार्थस्य प्रसङ्गः ॥ ७ ॥

क. वपनं रागतः प्राप्तम् । यदि चाऽस्मिन् काले वर्धिष्ठाः केशा विद्यन्ते इच्छा चोदेति, ततोऽस्मिन् काले नियम्यते वपनमिति । एवञ्च केशभूयस्त्वे इच्छायाञ्च नियम्यमानस्य वपनस्य तदभावेऽविच्छेदेनाऽनुष्ठीयमानास्विष्टिषु अननुष्ठानमेवेति ।

ख. अस्मिन्नपि पक्षे प्रतिपौर्णमासमेव वपनम्, न दर्शे, उभयनिरूपिताधिकारस्यैकत्वात् अधिकारिसंस्कारत्वाच्च वपनस्य ॥

ग. 'यक्ष्यमाणोऽप उपस्पृशति' इति सङ्कल्पसमनन्तरमपामुपस्पर्शनस्य विधानात् अमावास्यायामपि प्रयोगभेदेन सङ्कल्पभेदात् तत्रापि तदनन्तरं अपामुपस्पर्शनं कर्तव्यमिति ।

घ. 'यक्ष्यमाणोऽप उपस्पृशति' इति विधाय तदिदं सर्वयज्ञेष्विति पुनर्विधिबलात् दर्विहोमेष्वपि उपस्पर्शनं प्राप्नोतीति । रुद्रदत्तस्तु यज्ञशब्दग्रहणात् अतद्रूपेषु दर्विहोमेषु न भवतीत्याह । तदुपदेशमतानुसारेण ।

ङ. 'होष्यन्नप उपस्पृश्य' इत्यग्निहोत्रे पुनरुपस्पर्शविधानादारम्भे नास्तीति ।

च. सोमाङ्गभूतास्विष्टिषु सोमार्थेनैवोपस्पर्शनेन प्रसङ्गादुपकारसिद्धिरिति । प्रसङ्गो नामान्यार्थमनुष्ठितेनैवोपकारलाभेन न पुनः स्वार्थमनुष्ठानम् ।

1. B. Ms reads अमायामपि.

"अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने। आदित्यं ज्योतिषां ज्योतिरुत्तमꣳ श्वो यज्ञाय रमतां देवताभ्यः। वसून् रुद्रानादित्यानिन्द्रेण सह देवताः। ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया। इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान् देवान् परिगृह्णामि पूर्वः। अग्निर्हव्यवाडिह तानावहतु पौर्णमासꣳ हविरिदमेषां मय्यामावास्यꣳ हविरिदमेषां मयी"ति यथा लिङ्गमाहवनीयेऽन्वाधीयमाने जपति ॥ ८ ॥

"अन्तराग्नी पशवो देवसꣳसदमागमन्। तान् पूर्वः परिगृह्णामि स्व आयतने मनीषये"त्यन्तराग्नी तिष्ठन् जपति ॥ ९ ॥

"इह प्रजा विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः। ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया। इह पशवो विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः। तान् पूर्वः परिगृह्णामि स्व आयतने मनीषये"ति गार्हपत्यम् ॥ १० ॥

इति प्रथमा कण्डिका ॥

सद्यस्कालायां पौर्णमास्यां "अग्निं गृह्णामि" इत्यृचो [क]लोपः। यदि तु [1]परिपाठः श्वो यज्ञायेत्युच्यते। विकृतौ सद्यस्कालायामूह एव। यस्मिंश्चाऽहनि प्रयुज्यते तस्योपलक्षणम्। यवा—[ख]इमामूर्जमेकाद-

क. श्वो यज्ञाय रमतामिति श्वःशब्दघटितत्वान्मन्त्रस्य श्वः कालसम्बन्धस्य सद्यस्कालायामभावात् प्रकृतौ चोहाभावात् यवप्रयोगे "स्योनं त" इति मन्त्रस्येव लोप एवेति।

ख. पर्वणि सुत्यायामेकदीक्षापक्षे दीक्षणीयैकादश्यां प्राप्नोति। तत्रोह एकादशीमिति।

I. B. Ms. reads परिपाठात्.

शीमिति। नामधेयविकारश्च यासामस्ति तासां तेनैवोपलक्षणम्, यथा–[क]चैत्रं हविरिति। अनामधेयासु सामान्यनामधेयेनैव–ऐष्टꣳ हविरिति। [ख]पञ्चदश्याः परतः प्रथमां द्वितीयामिति। अन्तराग्नी गार्हपत्याहवनीययोः। अन्वाधानाङ्गमन्वाहितजपः। अतः सोमेष्टिषु न भवति। इमामूर्जमिति विकृतिषु [ग]लोपमेके। यासां समुदायनाम तासां समुदायेनैवोपलक्षणम्, यथा [घ]दैवश्यैनिकं 'आपाद्यꣳ हविरिति। [ङ]उपदेशस्तु–"इदमहम्" इत्येवमन्तमन्वाधानयाजमानं न विकृतौ, तस्य समुदायस्याभावात् ॥ ८–१० ॥

" अयं पितृणामग्निरवाड्ढव्या पितृभ्य आ। तं पूर्वः परिगृह्णाम्यविषन्नः पितुङ्कर"दिति दक्षिणाग्निम्। अजस्रं त्वाꣳ सभापाला विजयभागꣳ समिन्धताम्। अग्ने दीदाय मे सभ्य विजित्यै शरदश्शत"मिति सभ्यम्। " अन्ननावसथीयमभिहराणि शरदश्शतम्।

क. चित्रेष्टौ चित्राशब्दस्य नामधेयत्वात् तेनैव प्रयोगश्चैत्रं हविरिति।

ख. पञ्चदश्यां परतोऽनुष्ठीयमानास्विष्टिषु प्रथमां द्वितीयामित्येव तिथीनामभिधानम्, न षोडशीं सप्तदशीमित्यादि।

ग. 'पौर्णमासꣳ हविः' 'आमावास्यꣳ हविः' इति पर्वसम्बन्धेनैव मन्त्रप्रवृत्तेः तस्य समुदायरूपत्वात् विकृतौ च तदभावात् पार्वण होमवल्लोप एव तत्रेति।

घ. काठके द्वितीये ( सायणभाष्यानुसारेण तैत्तिरीय ब्राह्मणे द्वादशप्रपाठके ) द्वितीयेऽनुवाके 'सप्तमग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेत्' इत्यादिना सप्तइष्टयो विहिताः। तासां सप्तानामिष्टीनां दिवः श्येनय इति। दिवः श्येनयोऽनुवित्तयो नाम। ( का. २.३.८ ) इति तत्रैवोक्तत्वात्। यथा आकाशे श्येन उत्पत्य स्वेच्छया सञ्चरति एवमेता अपि यजमानस्य द्युलोके स्वेच्छया संचारं कुर्वन्ति " इति सायणः एवं सप्त माग्नेय मष्टाकपालं निरवत् " ( का. २. ४. २. ) इत्यादिना पञ्चेष्टयो विहिताः। तासां समुदितानां अपाघा इति नाम। अत्रहन्यन्ते स्वर्गप्रतिबन्धास्सर्वेऽपि याभिरित्यपाघा इति सायणः। एवं च दिवः श्येनीशब्दस्याऽपाघशब्दस्य च समुदाय वाचकत्वा तेनैवरूपेणो पलक्षणमिति।

ङ. अग्निंगृह्णामीत्यारभ्य " इदमहं वरुण ज्येष्ठेभ्यः " इत्येतत्पर्यन्तं यद्याजमानसम्बन्धि तत्सर्वं विकृतौ नास्ति। अस्य सर्वस्यापि "श्वोयज्ञाय रमतां, ताः पूर्वं परिगृह्णामि" इत्यादिना व्यहकालसाध्यकर्मप्रयोज्यत्वात् विकृतौ च तदभावात् न प्रयोग इति।

आवसथे श्रियं मन्त्रमहिर्बुध्नियो नियच्छत्वि" त्यावसथ्यम् ॥ १ ॥

" इदमहमग्निज्येष्ठेभ्यो वसुभ्यो यज्ञं प्रब्रवीमि। इदमहमिन्द्रज्येष्ठेभ्यो रुद्रेभ्यो यज्ञं प्रब्रवीमि। इदमहं वरुणज्येष्ठेभ्य आदित्येभ्यो यज्ञं प्रब्रवीमि" इत्यन्वाहितेषु जपति ॥ २ ॥

[1]पयस्वतीरोषधय इति पुरा बर्हिष आहर्तोर्जायापती अश्नीतः। पुरा वत्सानामपाकर्तोरमावास्यायाम् ॥३॥

पुरा पूर्वं [क]परिस्तरणानामाहरणादशनं पौर्णमास्याम्। अपि वा 'पूर्वेद्युरिध्माबर्हिः' इत्यनेन विधानेन। [ख]कृत्वा शाखाच्छेदनमशनम्, ततो वत्सापाकरणम् बह्वर्थत्वाच्छाखायाः। उपदेशोऽशनं शाखाच्छेदनं वत्सापाकरणमिति। छेदनस्यापृथग्ग्रहणात्। [ग]प्रथमग्रासे मन्त्रः, [1]प्राणा-

क. 'पौर्णमास्यान्त्वन्वाधानपरिस्तरणोपवासाः' (आप. श्रौ. १-१४-१७) इति क्रमनियमात् पूर्वेद्युर्बर्हिराहरणाभावात् सूत्रे बर्हिश्शब्दः परिस्तरणपरः। अतस्तत्र परिस्तरणात्पूर्वमशनमिति।

ख. अमावास्यायां शाखाच्छेदनं कृत्वाऽशनं कर्तव्यम्। तदनन्तरं वत्सापाकरणम्, शाखाच्छेदनस्य गोप्रस्थापनाद्यनेककार्यार्थत्वादिति। उपदेशमते तु-अशनं पूर्वं, ततश्शाखाच्छेदनम्, ततो वत्सापाकरणञ्च कर्तव्यम्। अग्न्यन्वाधानं वत्सापाकरणं इध्माबर्हिरिति पदार्थपरिगणनार्थं सूत्रे शाखाच्छेदनस्य पृथग्ग्रहणाभावेन तस्य वत्सापाकरणाङ्गत्वस्यैवावगमादिति।

ग. अयं भावः–' पयस्वतीरोषधय इत्यश्नीतः' इति विधानादस्य करणमन्त्रत्वावगमात् 'मन्त्रान्तैः कर्मादिस्सन्निपात्यः' इति परिभाषाबलात् मन्त्रपाठमनन्तरमेव प्रथमग्रासः कर्तव्यः। तत्र प्राणादीनामपि भोजनाङ्गत्वेन विहितत्वात् प्रथमं पयस्वतीरिति ततः "प्राणाय स्वाहा" इति प्रथममन्त्रः, ततः प्रथमग्रासः। द्वितीयादिषु "अपानाय स्वाहा" इति पञ्च मन्त्राः। अथ वा 'पयस्वतीः' इत्यनेनैव प्रथमग्रासः, "प्राणाय स्वाहा" इति प्रथममन्त्रस्य निवृत्तिः। द्वितीयादिषु "अपानाय स्वाहा" इत्यादिनां प्राप्तिः। अथ वा "प्राणाय स्वाहा" इत्यादीनां षण्णामपि निवृत्तिरनेन मन्त्रेण क्रियते। अतश्च पयस्वतीं मुक्त्वा भोजनम्, न प्राणादिमन्त्रपाठ इति।

1. B. Ms. omits the portion beginning from प्राणादयः and ending with अविशेषवचनात्

१ पयस्वतीरोषधयः पयस्वद्वीरुधां पयः। अपां पयसो यत्पयस्तेन मामिन्द्र सꣳसृज ॥
(तै. सं. १-५-१०-४)

दयश्च । अथवा प्रथममन्त्रस्य निवृत्तिः । द्वितीयादिषु प्राकृता मन्त्राः । अथवा सर्वेषां प्रत्याम्नायोऽयं मन्त्रः । अमावास्यायामसन्नयतः पुरा बर्हिराहरणादशनम्, अविशेषवचनात् ॥ १-३ ॥

**पौर्णमासायोपवत्स्यन्तौ नाऽतिसुहितौ भवतः ॥४॥**

अतिसौहित्यमतितृप्तिः । अशनं [1]क्षुत्प्रतिघातार्थम् । तस्याऽस्मिन्-काले नियमः सत्यामिच्छायां क्षुधि च । अतो नाऽऽवर्तते इष्टिबहुत्वे ॥४॥

**अमाषममांसमाज्येनाऽश्नीयातां तदभावे दध्ना पयसा वा ॥ ५ ॥**

आज्येन व्यञ्जननिवृत्तिः । [क]मधुवन्माषमां[2]सप्रतिषेधोऽभ्यवहार्यस्य; व्यञ्जनार्थस्य [ख]प्रतिषिद्धत्वात् । केचित्तु स्नेहानां तैलादीनां निवृत्तिः, तुल्यत्वात् ॥ ५ ॥

**बर्हिषा पूर्णमासे व्रतमुपैति वत्सेष्वपाकृतेष्वमा-वास्यायाम् ॥ ६ ॥**

बर्हिषा बर्हिष्याह्रियमाणे ॥ ६ ॥

**प्रणीतासु प्रणीयमानास्वासन्नेषु वा हविष्षु व्रतमु-पैतीत्युभयत्र साधारणम् ॥ ७ ॥**

**अशनमग्न्यन्वाधानं व्रतोपायनमित्येके । व्रतोपायन-मशनमग्न्यन्वाधानमित्येके । अग्न्यन्वाधानं व्रतोपायनम-शनमित्येके ॥ ८ ॥**

यदापि पूर्वमशनव्रतोपायने तदाऽप्यग्निं प्रणीयैव ॥ ७, ८ ॥

क. ' न मध्वश्नाति ' इति मधुप्रतिषेधो यथाऽभ्यवहार्यस्य मधुनः, तद्वन्माषमांसप्रतिषेधोऽभ्य-वहार्यस्यैवेति ।

ख. आज्येनैवेति शेषः ।

1. Ad reads क्षुत्परिघातार्थम्
2. An reads मांसप्रतिषेधः

'पयस्वतीरोषधय' इत्यप आचामत्युपस्पृशति वा ॥९॥

अपरेणाऽऽहवनीयं दक्षिणाऽतिक्रामति ॥ १० ॥

एष एवाऽत ऊर्ध्वं यजमानस्य सञ्चरो भवति ॥११॥

इति द्वितीया कण्डिका ॥

आचामति भक्षयति ॥ ९, १० ॥ २ ॥

दक्षिणेनाऽऽहवनीयमवस्थायव्रतमुपैष्यन् समुद्रं मनसा ध्यायति ॥ १ ॥

[क]व्रतं समुद्रस्तदुपैष्यामीति ध्यानम् ॥ १ ॥

अथ जपति—"अग्ने व्रतपते व्रतं चरिष्यामी"ति ब्राह्मणः। "वायो व्रतपते, आदित्य व्रतपते, व्रतानां व्रतपते व्रतं चरिष्यामि" इति राजन्यवैश्यौ ॥ २ ॥

सर्वान्वा ब्राह्मणः ॥३॥

अग्न्यादीन् देवानभिसन्धाय 'अग्ने व्रतपत' इति जपः । अथ शब्दोऽर्थकृत्यप्रतिषेधार्थः ॥ २, ३ ॥

अथाऽऽदित्यमुपतिष्ठते "सम्राडसि व्रतपा असि व्रतपतिरसि तत्ते प्रब्रवीमि तच्छकेयं तेन शकेयं तेन राध्यासमिति ॥४॥

[1]पयस्वत्याद्यादित्योपस्थानान्तं [2]व्रतोपायना[ख]ङ्गम् । तस्य [ग]सोमेष्टिषु

क. ध्यानप्रकारो व्रतं समुद्र इत्यादिः ।

ख. 'बर्हिषा पूर्णमासे व्रतमुपैति' इत्यारम्भात्, आदित्योपस्थाने च 'व्रतपतिरसि' इति व्रतलिङ्गात् तस्य सर्वस्यापि व्रताङ्गत्वावगमादिति ।

ग. सोमेष्टिषु प्रायणीयादिषु, तत्र व्रताभावादिति ।

1. Ad reads पयस्वतीरित्यादि
2. Ibid व्रतोपायनम्

निवृत्तिः । सत्य[क]वाचन इति वाजसनेयिनाम् । " मयि दक्षक्रतू " इति वचनञ्च । पूर्वमपि मैथुनप्रतिषेधः, व्रतचारी त्वेव स्यादिति ॥ ४ ॥

**यद्यस्तमिते व्रतमुपेयादाहवनीयमुपतिष्ठन्नेतद्यजुर्जपेत् ॥ ५ ॥**

आहवनीयमुपतिष्ठन्नादित्यमभिसन्धाय [1]जपेत्, तद्व्रतोपायनम् । तत्राऽनुप्रवेशाद्‌दादित्य[ख]स्य ॥ ५ ॥

**"उभावग्नी उपस्तृणते देवता उपवसन्तु मे । अहं ग्राम्यानुपवसामि मह्यं गोपतये पशूनि"ति सायं परिस्तीर्यमाणेषु जपति ॥ ६ ॥**

गार्हपत्याहवनीययोरेव वा परिस्तरणम् । 'उपस्तीर्यः पूर्वश्चाग्निरपरश्चे'ति । बहुष्वपि परिस्तीर्यमाणेषु याजमानानिवृत्तिः । [ग]तयोरेवाग्न्योस्संस्कारात् ॥ ६ ॥

**आरण्यं सायमाशेऽश्नात्यमाषममांसम् ॥ ७ ॥**

आरण्यस्य [घ]माषमांसस्य प्रतिषेधः ॥ ७ ॥

**अपि वा काममा मार्गादामधुन आ प्राशातिकात् ॥ ८ ॥**

काममिच्छातः । आ मार्गात्परतो मार्गाद्यानि वानप्रस्थानां मांसान्याम्नातानि तानि न भक्षयति । ये च परतो रसाः आ मधुनः, यानि

क. वाजसनेयिनां मते अत ऊर्ध्वं सत्यवादी भवामि इति सङ्कल्पपूर्वकं सत्यवदनम्, "मयि दक्षक्रतू " इति मन्त्रपाठपूर्वकमात्मनि प्राणापानधारणसङ्कल्पश्च व्रतम् ।

ख. "अग्निं वावाऽऽदित्यस्सायं प्रविशति" इत्यग्नावादित्यप्रवेशलिङ्गादिति ।

ग. बहूनामग्नीनां परिस्तरणे क्रियमाणेऽपि मन्त्रस्याऽग्निद्वयप्रकाशकतया तत्संस्कारार्थं प्रयोगसम्भवादिति ।

घ. पूर्वमेव ग्राम्ययोः प्रतिषेधात् । माषमांसयोः व्यञ्जनार्थयोः प्रतिषेध इति रुद्रदत्तः ।

1. B Ms has जपः
2. B2 omits तत्रानुप्रवेशादादित्यस्य

चान्नानि आ प्राशातिकात् । प्राशातिकादन्यानि पराणि प्राशातिकं [क]प्रशातनलभ्यम् । [ख]यस्त्ववीक् तस्येच्छातः प्राशनम् ॥ ८ ॥

अपो वा न वा किञ्चित् ॥ ९ ॥

अपोऽश्नीयात्, न वा किञ्चिदश्नीयात् । [ग]संसृष्टहविष्यपोऽपि नाऽश्नाति न तस्य सायमश्नीयादिति ॥ ९ ॥

न तस्य सायमश्नीयाद्येन प्रातर्यक्ष्यमाणस्स्यात् ॥ १० ॥

आरण्यायोपवत्स्यन्नपोऽश्नाति न वा ॥ ११ ॥

आरण्यायोपवत्स्यन्निति वचनाद्विकृतेरपि [घ]व्यहकालत्वमस्ति ॥ ११ ॥

जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति ॥ १२ ॥

जञ्जभ्यमानः जृम्भमाणः ॥ १२ ॥

अमावास्यायां रात्रिं जागर्ति ॥ १३ ॥

अपि वा सुप्यादुपरि त्वेव न शयीत ॥ १४ ॥

अपि वोपरि शयीत [1]व्रतचारी त्वेव स्यात् ॥ १५ ॥

उभयत्र जागरणमेके समामनन्ति ॥ १६ ॥

आहवनीयागारे गार्हपत्यागारे वा शेते ॥ १७ ॥

इति तृतीया कण्डिका ॥

क. वृक्षादितः पातनेन लब्धं फलादिकम् । प्राशातिकं कोशीधान्यम्, यस्मात् प्रशातनेनोद्धियत इति रुद्रदत्तः ॥

ख. 'आरण्यम्' (आप. श्रौ. ४-३-७) इति सूत्रेण प्रतिषिद्धस्य प्रतिप्रसवोऽयम् । वानप्रस्थानां भक्ष्यकाण्डेषु मृगमांसपर्यन्तानां रसेषु मधुपर्यन्तानां फलेषु प्राशातिकपर्यन्तानां भक्षणे याथाऽकाम्यम् । तदितरेषामभक्षणमेवेति ।

ग. "दधि मधु घृतमापो धाना भवन्ति" इत्यादौ यत्राऽपामपि द्रव्यत्वं तत्संसृष्टहविः । तत्राऽपामशनं न कर्तव्यम्, न तस्य सायमिति निषेधात् प्रातरद्भिर्यक्ष्यमाणत्वात् ।

घ. आरण्यायोपवत्स्यन्निति विकृतिविषयमेव वक्तव्यम्, प्रकृतौ तदभावात् । अतश्चैतद्वचनबलाद्विकृतेरपि व्यहकालता प्रतीयते । तस्याश्च सद्यस्कालतया विकल्पः इति । सा च विकृतिः 'प्राजापत्यं गार्मुतं चरुं निर्वपेत्' इत्येवमादिः ज्ञातव्या । योनाम वानप्रस्थः आरण्येनैव हविषा श्वो यियक्षति तद्विषयं वेदं वचनमिति रुद्रदत्तः ॥

1. All printed books read ब्रह्मचारी

व्रतोपायनादूर्ध्वं मैथुनव्रतप्रतिषेधः । व्रतचारी त्वेव स्यादिति ॥ १३-१७ ॥ ३ ॥

**"देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशा इह मावत । इदꣳ शकेयं यदिदं करोम्यात्मा करोत्वात्मने । इदं करिष्ये भेषजमिदं मे विश्वभेषजा । अश्विना प्रावतं युवम्" इति जपित्वा श्वोभूते ब्रह्माणं वृणीते ॥ १ ॥**

"देवा देवेष्वि"ति रात्रौ परिस्तरणानन्तरमन्येषामुक्तमिति । न चास्य सद्यस्कालायां लोपः [क]लिङ्गविशेषात् "आत्मा करोत्वात्मन" इति । विज्ञानं मन्त्रलिङ्गेन ॥ १ ॥

**"भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे" इत्युक्त्वाऽपरेणाऽऽहवनीयं दक्षिणातिक्रम्योपविशति, पूर्वो ब्रह्माऽपरो यजमानः ॥ २ ॥**

यजमानस्यापि ब्रह्मवरणम् । [ख]अपरो यजमान इति पूर्वप्रविष्टोऽपि पश्चादुपविशति ॥ २ ॥

क. देवा देवेष्वित्ति मन्त्रे "इदꣳ शकेयं यदिदं करोम्यात्मा करोत्वात्मने" इति श्रूयते । अस्यार्थः—इदानीं यत्कर्म कुर्वन्नस्मि, तत्समग्रतया कर्तुं मम सामर्थ्यं भवतु इति । अत्र क्रियमाणकर्मविषयकसामर्थ्यप्रार्थनात् सद्यस्कालायामस्य प्रवृत्तिरेव, न लोप इति । आत्मा जीवात्मा परमात्मने इदं कर्म करोतु । यद्यत्क्रियते जीवेन तस्य सर्वस्यापि परमात्मसमर्पणस्य 'यत्करोषि यदश्नासि' इत्यादिषु दर्शनात् । एवं ज्ञानपूर्वकं कर्म कर्तव्यम् । "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति श्रवणाच्चेति ।

ख. पूर्वं ब्रह्मणः पश्चाद्यजमानस्येति स्थाननियमस्य पूर्वमेवोक्तत्वात् कालविधानपरमेवेदं सूत्रम् । एवञ्च यजमानस्य वरणसमनन्तरमेवाऽतिक्रमणविधानात्, ब्रह्मणस्तु "अहं भूपतिः" इति मन्त्रजपोत्तरकालमेवातिक्रमणविधानात् पूर्वं स्वोपवेशस्थानं प्राप्तोऽपि यजमानो नोपविशेत्, किन्तु ब्रह्मोपवेशनानन्तरमेवोपविशेत् इति । पूर्वापरत्वं देशतः कालतश्चेति रुद्रदत्तः ।

"भूश्च कश्च वाक्चक्वर्च गौश्च वट्च खश्च धूश्च नूश्च पूश्चैकाक्षराः पूर्दशमा विराजो या इदं विश्वं भुवनं व्यानशुस्ता नो देवीस्तरसा संविदानाः स्वस्ति यज्ञं नयत प्रजानतीर्ब्रह्म पूतास्थ। को वो युनक्ति स वो युनक्तु विश्वेभ्यः कामेभ्यो देवयज्यायै। याः पुरस्तात् प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः। ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभ" इति प्रणीताः प्रणीयमाना अनुमन्त्रयते। 'यजमानहविर्निर्वप्स्यामी'त्युच्यमाने 'ओं निर्वपे'त्युच्चैरनुजानाति ॥ ३ ॥

'अग्नि ँ होतारमिहत ँ हुवे' इति हविर्निरुप्यमाणमभिमन्त्रयते ॥ ४ ॥

अग्निं होतारमिति वर्तमानक्रियाविशेषोऽपि सकृत्, क्रियान्तरेणाऽव्यवायात्। केचिदावृत्तिः ॥ ४ ॥

हविर्निर्वपणं वा पात्रमभिमृशत्यभि वा मन्त्रयते ॥२॥

अभिमर्शनमानिर्वपणात् । [क]केचिद्धविर्निर्वपणस्यैवाभिमन्त्रणम्। ॥ ५ ॥

तदुदित्वा वाचं यच्छति ॥ ६ ॥

तदुदित्वेति यजुर्वेदपाठात्।[1] ऋचोऽपि नपुंसकेन [2]व्यवहारः। 'यजमान वाचं यच्छे' त्युक्तस्तत्रैव वाग्यमनं करोति। अग्निं होतारमिति चोक्त्वा ॥ ६ ॥

क. हविर्निरुप्यते यस्मिन् पात्रे तद्धविर्निर्वपणं पात्रम्। अग्निं होतारमिति मन्त्रेण पात्रमेवाभिमृशेत् न हविरिति।

ख. श्रुतिवाक्यस्यैवानुकरणमिदम्। ( See तै. सं. १-२-४ )

1. Ad reads पाठः
2. B. Ms reads निर्देशः and B. 2.

**अथ यज्ञं युनक्ति—कस्त्वा युनक्ति स त्वा युनक्त्विति सर्वं विहारमनुवीक्षते ॥ ७॥**

इति चतुर्थी कण्डिका ॥

यज्ञयोगस्सर्वप्रधानार्थः। पुनरथशब्दप्रयोगाददृष्टप्रधानोपकारकत्वाच्च[1]। अतः [क]साान्नाय्यतन्त्रास्वाज्यतन्त्रास्वपि पशौ च क्रियते पात्राभिमर्शनोत्तरकालम् । न च पुनः पशुपुरोडाश औषधार्थमित्युपदेशः । [ख]सपात्रस्य विहारस्यावेक्षणेन[1] योगः ॥ ७ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिविरचिते
चतुर्थप्रश्ने प्रथमः पटलः ॥

अथ द्वितीयः पटलः

**"चतुश्शिखण्डा युवतिस्सुपेशा घृतप्रतीका भुवनस्य मध्ये। मर्मृज्यमाना महते सौभगाय मह्यं धुक्ष्व यजमानाय कामान्" इति वेदिं सम्मृज्यमानाम् ॥ १ ॥**

**"यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः। यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मी"ति स्तम्बयजुर्ह्रियमाणम् ॥ २ ॥**

स्तम्बयजुषः तूष्णीं हरणेऽपि [ग]याजमानम् ॥ १, २ ॥

क. अदृष्टार्थत्वात्प्रकरणपाठाच्च सर्वार्थत्वमवगम्यते । तेनौषधाज्यसान्नाय्यद्रव्यकेषु सान्नाय्यविकृतौ पशौ च यज्ञयोगः कर्तव्य इति ।

ख. 'विहारमनुवीक्षते' इत्येव सिद्धे सर्वं विहारमिति सर्वशब्दप्रयोगात् पात्रसहितस्य सर्वस्य विहारस्यानुवीक्षणं लभ्यत इति ।

ग. चतुर्थस्य स्तम्बयजुर्हरणस्याध्वर्युणा तूष्णीं करणेऽपि यजमानेन मन्त्रः पठनीय एवेति । चतुर्थस्य तु तूष्णीकत्वान्न भवत्यनुमन्त्रणमिति दीपिका (रुद्रदत्तः)

1. An reads अवेक्षणं योग:

"इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम्। मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषीष्वि"त्युत्करमभिगृह्यमाणम् ॥ ३ ॥

[क]उत्कराभिग्रहणं सकृद्वरुणप्रघासेषु ॥ ३ ॥

यज्ञस्य त्वा प्रमयाऽभिमया प्रतिमयोन्मया परिगृह्णामीति वेदिं परिगृह्यमाणाम् ॥ ४ ॥

यदुद्धन्तो जाहिँसिम पृथिवीमोषधीरपः। अध्वर्यवस्स्फ्यकृतस्स्फ्येनान्तरिक्षं मोरु पातु तस्मात्। यदुद्धन्तो [2]जहिँसिम क्रूरमस्या वेदिं चकृम मनसा देवयन्तः। मातेन हेड उपगाम भूम्याश्शिवा नो विश्वैर्भुवनेभिरस्त्वि"त्युद्धन्यमानाम्। भूमिर्भूत्वा महिमानं पुपोष ततो देवी वर्धयते पयाँसि। यज्ञिया यज्ञं विचयन्ति शञ्चौषधीराप इह शक्वरीश्चे"ति क्रियमाणाम्। "ईडेन्यक्रतूरहमपो देवीरुप ब्रुवे। दिवानक्तञ्च सस्रुषीरपस्वरी"रिति प्रोक्षणीरासाद्यमानाः। "ऊर्णम्रदु प्रथमानँ स्योनं देवेभ्यो जुष्टँसदनाय बर्हिः। सुवर्गे लोके यजमानँहि धेहि मां नाकस्य पृष्ठे परमे व्योम"न्निति बर्हिरासाद्यमानम् ॥ ५ ॥

क्रियमाणां दक्षिणतो वर्षीयसीमित्येवमादि ॥ ४, ५ ॥

"आद्भिराज्यमाज्येनापस्सम्यक् पुनीत सवितुः पवित्रैः। ता देवीश्शक्वरीश्शाक्वरेणेमं यज्ञमवत संविदाना" इत्याज्यं प्रोक्षणीश्चोत्पूयमानाः ॥ ६ ॥

क. सत्यपि वरुणप्रघासेषु विहारभेदे उत्करस्यैकत्वात् अभिमन्त्रणं सकृदेवेति।

1. 2 Some Mss read जिहिँसिम.

आज्यं चोत्पूतम्, प्रोक्षणीश्चोत्पूयमानाः ॥ ६ ॥

**उभावाज्यग्रहाञ्जपतः ॥ ७ ॥**

इति पञ्चमी कण्डिका

[क]अध्वर्योरपि चातुस्स्वर्यमाज्यग्रहणेषु ॥ ७ ॥

**"अशिश्रेम बर्हिरन्तःपृथिव्या ँस ँरोहयन्त ओषधीर्विवृक्णाः । यासां मूलमुदवधीस्स्फ्येन शिवानस्तास्सुहवा भवन्तु । सुमनसो यजमानाय सन्त्वोषधीराप इह शक्वरीश्च । वृष्टिद्यावा पर्जन्य एना विरोहयतु हिरण्यवर्णाश्शतवल्शा अदब्धा" इत्यन्तर्वेदि बर्हिरासन्नम् ॥ १ ॥**

**"चतुश्शिखण्डा युवतिस्सुपेशा घृतप्रतीका वयुनानि वस्ते । सा स्तीर्यमाणा महते सौभगाय सा मे धुक्ष्व यजमानाय कामान् । शिवा च मे शग्मा चैधि स्योना च मे सुषदा चैधि । ऊर्जस्वती च मे पयस्वती चैधि इषमूर्जं मे पिन्वस्व ब्रह्म तेजो मे पिन्वस्व । क्षत्रमोजो मे पिन्वस्व विशं पुष्टिं मे पिन्वस्व । आयुरन्नाद्यं मे पिन्वस्व प्रजां पशून्मे पिन्वस्वे"ति स्तीर्यमाणाम् ॥ २ ॥**

**[1]"ध्रुवोऽसी"त्येतैः प्रतिमन्त्रं परिधीन् परिधीयमानान् । "अस्मिन् यज्ञ उपभूय इन्नु मेऽविक्षोभाय परिधीन् दधामि । धर्ता धरुणो धरीयानग्निर्द्वेषा ँसि निरितो नु दाता" इति च ॥**

क. अध्वर्योरपि चातुस्स्वर्यप्राप्त्यर्थं प्रवृत्तत्वादस्य वचनस्येति ।

१. ध्रुवोऽसि ध्रुवोऽह ँ सजातेषु भूयासं धीरश्चेत्ता वसुवित् ।
उग्रोऽस्युग्रोऽह ँ सजातेषु भूयासमुग्रश्चेत्ता वसुवित् ।
अभिभूरस्यभिभूरह ँ सजातेषु भूयासमभिभूश्चेत्ता वसुवित् ॥ ( तै. सं. १-६-२, )

" अस्मिन् यज्ञ " इति [क]सकृत्, बहुवचनत्वात्। शनैश्चोत्तरपरिधिस्साद्यते। [1]ततः परिधीयमानानित्युपपद्यते। केचित्परिधौ परिधावावर्तयन्ति ॥ १-३ ॥

[१]"युनज्मि त्वा ब्रह्मणा दैव्येने"त्याहवनीयम्। "तेजिष्ठा ते तपना या च रोचना प्रत्योषन्तीस्तन्वो यास्ते अग्ने। ताभिर्वर्माण्यभितो व्ययस्व मा त्वा दभन् यज्ञहनः पिशाचा" इति च ॥ ४ ॥

युनज्मि त्वेत्याहवनीययोगः उपस्थ [ख]इत्येवमन्तः। व्याहृतीनामग्निहोत्रोपसदनादिषु विनियोगः ॥ ४ ॥

"विच्छिनद्मि विधृतीभ्याꣳसपत्नाञ्जातान्भ्रातृव्यान् ये च जनिष्यमाणाः। विशो यन्त्राभ्यां विधमाम्येनानहꣳ स्वानामुत्तमोऽसानि देवाः॥ विशो यन्त्रे नुदमाने अरातिं विश्वं पाप्मानममतिं दुर्मरायुम्। सीदन्ती देवी सुकृतस्य लोके धृतीस्थो विधृती स्वधृती। प्राणान्मयि धारयतं, प्रजां मयि धारयतं पशून्मयि धारयतम्" इति विधृती आसाद्यमाने ॥ ५ ॥

इति षष्ठी कण्डिका ॥

क. सर्वपरिधिपरिधानावस्थायामेव मन्त्रस्य सकृदेव पाठः। मन्त्रे ' परिधीन् दधामि ' इति बहुवचनग्रहणात्। यथा परिधीयमानावस्थायामेव मन्त्रः प्रयुज्येत तथा शनैरुत्तरपरिधिस्सादनीयः। तदानीमेव सूत्रे परिधीयमानानिति वर्तमाननिर्देश उपपद्येतेति।

ख. मन्त्रद्वयेन योग इत्यर्थः। द्वितीयस्य मन्त्रस्य 'यन्मे अग्न' इत्यस्याऽन्यत्र क्वचिदविनियोगात् तदुत्तरव्याहृतीनामग्निहोत्रोपसादने 'अग्निहोत्रमेताभिर्व्याहृतीभिरुपसादयेत' इति विनियुक्तत्वादिति।

1. An & B. Ms read अतः

१. युनज्मित्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः। इन्धानास्त्वा सुप्रजसस्सुवीरा ज्योग्जीवेम बलिहृतो वयं ते। यन्मे अग्ने अस्य यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो। तेन हन्मि सपत्नं दुर्मरायुमेनं दधामि निर्ऋत्या उपस्थे ॥ ( तै. सं. १-६-२-१ )

"अयं प्रस्तर उभयस्य धर्त्ता धर्त्ता प्रयाजानामुतानूयाजानाम्। स दाधार समिधो विश्वरूपास्तस्मिन् स्रुचो अध्यासादयामी"ति प्रस्तरमासाद्यमानम् ॥ १ ॥

जुहूसादनपक्षे "अयं प्रस्तर" इति नास्ति, [क]'उतानूयाजानाम्' इति लिङ्गविरोधात्। बहुवचनत्वाच्च सर्वस्रुगासादन एव प्रस्तरमन्त्रः। [ख]प्रस्तरजात्येकत्वात् कालान्तरे वर्तमानस्य संस्तव इत्यनिवृत्तिर्वा साद्यमानमिति पुनर्वचनाच्च ॥ १ ॥

"आरोह पथो जुहु देवयानान् यत्रर्षयः प्रथमजा ये पुराणाः। हिरण्यपक्षाजिरा सम्भृताङ्गा वहासि मा सुकृतां यत्र लोकाः॥ जुहूरसि घृताची गायत्रियाग्नी कविभिर्जुषाणा। अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युप देवानाग्नेयेन शर्मणा दैव्येने"ति जुहूम्। अवाहं बाध उपभृता सपत्नाञ्जातान् भ्रातृव्यान् ये च जनिष्यमाणाः। दोहै यज्ञं सुदुघामिव धेनुमहमुत्तरो भूयासमधरे मत्सपत्नाः॥ सुभृदस्युपभृद्घृताची त्रैष्टुभेन च्छन्दसा विश्ववेदाः। अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञ नयास्युपदेवानैन्द्रेण शर्मणा दैव्येने"त्युपभृतम्। "यो मा वाचा मनसा दुर्मरायुर्हृदारातीयादभिदासदग्ने। इदमस्य

क. जुहूमात्रसादनपक्षे जुहूस्थस्याज्यस्य प्रयाजार्थत्वेनाऽनूयाजसम्बन्धाभावात् 'उतानूयाजानां धर्ता' इति लिङ्गबाधादिति। 'तास्मिंस्स्रुचो अध्यासादयामि' इति 'स्रुचः' इति बहुवचनश्रवणात्सर्वस्रुगासादन एवायं मन्त्र इति।

ख मन्त्रस्यास्य प्रस्तराभिधानमात्रपरत्वात् प्रयाजानूयाजार्थद्रव्यधारणाभावेऽपि लक्षणयाऽऽज्यमात्रधारणार्थस्य स्तुत्यर्थत्वात् 'विधृती आसाद्यमाने' इति पूर्वमासादनस्य प्रकृतत्वात् 'प्रस्तरं' इत्येतावतैव सिद्धे पुनरासाद्यमानमिति वचनात् प्रस्तरासादनमेव प्रधानतयाऽभिमतम्। अतो जुह्वादीनां सादनाभावेऽपि मन्त्रः प्रवर्तत एवेति।

चित्तमधरं ध्रुवाया अहमुत्तरो भूयासमधरे मत्सपत्नाः। ध्रुवासि धरणी धनस्य पूर्णा जागतेन छन्दसा विश्ववेदाः। अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युपदेवान् वैश्वदेवेन शर्मणा दैव्येने"ति ध्रुवाम्। "स्योने मे सीद सुषदः पृथिव्यां प्रथयि प्रजया पशुभिस्सुवर्गे लोके। दिवि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्नाः। अहꣳ स्रुवो अभिजिहर्ति होमाच्छतक्षरश्छन्दसाऽनुष्टुभेन। सर्वा यज्ञस्य समनक्ति विष्ठा बार्हस्पत्येन शर्मणा दैव्येने"ति स्रुवम्। इयꣳ स्थाली घृतस्य पूर्णाऽच्छिन्नपयाश्शतधार उत्सः। मारुतेन शर्मणा दैव्येने"त्याज्यस्थालीम् ॥ २ ॥

इति सप्तमी कण्डिका ॥

जुह्वादीनां साद्यमानानाम् [1]उपस्थानमनुमन्त्रणं वाऽधिकारात् ॥ २ ॥

"तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन। तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मौजसा वीर्येण। तृप्तिरसि जागतं छन्दस्तर्पय मा प्रजया पशुभि"रिति पुरोडाशानज्यमानान् ॥ १ ॥

"यज्ञोऽसि सर्वतश्श्रितस्सर्वतो मां भूतं भविष्यच्छ्रयताम्। शतं मे सन्त्वाशिषस्सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीः। प्रजापतिरसि सर्वतः श्रितस्सर्वतो मां भूतं भविष्यच्छ्रयताम्। शतं मे सन्त्वाशिषस्सहस्रं मे सन्तु सूनृता इरावतीः पशुमती"रित्याग्नेयं पुरोडाशमासन्नमभिमृशति, सर्वाणि वा हवींषि ॥ २ ॥

1. B² reads अभिमन्त्रणं वाऽधिकारात्

"इदमिन्द्रियममृतं वीर्यमनेनेन्द्राय पशवो चिकित्सन्। तेन देवा अवतोपमामिहेषमूर्जं यशस्सह ओजस्सनेयं श्रृतं मयि श्रयता"मिति प्रातर्दोहम् । यत्पृथिवीमचरत्तत् प्रविष्टं येनासिञ्चद्बलमिन्द्रे प्रजापतिः । इदं तच्छुक्रं मधु वाजिनीवद्येनोपरिष्टादधिनोन्महेन्द्रं दधि मां धिनोत्वि"ति दधि ॥ ३ ॥

"अयं यज्ञस्समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः । तेन लोकान् सूर्यवतो जयेमेन्द्रस्य सख्यममृतत्वमश्या"मिति सर्वाणि हवींषि ॥ ४ ॥

[क]तृप्तिरसि यज्ञोऽसीत्येवं वि[1]धानामेकवचनत्वादसन्निपातिनामप्यावृत्तिः, प्रधानानुरोधेन वचनानुग्रह[2]श्च । असम्भवतामभिमर्शने मन्त्रावृत्तिः । उपदेशस्त्वयं यज्ञ इति [ख]तन्त्रेण । आज्यानाञ्च सहाज्यस्थालीकानामभिमर्शनम् । ( ध्रौ[3]वाज्यमात्रेण सहेति केचित् । [ग]तस्यापि[4]नेति केचित् ॥ )

"यो नः कनीय इह कामयाता अस्मिन् यज्ञे यजमनाय मह्यम् । अप तमिन्द्राग्नी भुवनान्नुदेतामहं प्रजां वीरवतीं विदेये"त्यैन्द्राग्नम् ॥ ५ ॥

क. 'तृप्तिरसि, यज्ञोऽसि, इदमिन्द्रियम्, यत्पृथिवीम्, अयं यज्ञः' अमीषां मन्त्राणां क्रियासमवेतार्थानभिधायिनामपि 'तृप्तिरसि, अयं यज्ञः' इत्याद्येकवचनानुग्रहाय प्रतिप्रधानं गुणावृत्तिन्यायेन चावृत्तिरेव वाऽनेकप्रधानस्थल इति ।

ख. अयं यज्ञो हविष्मान् इति हविर्युक्तस्य यज्ञस्यैव मन्त्रेणाभिधानात् यज्ञस्यचैकत्वात् सकृदेव मन्त्रप्रयोग इति ।

ग. उत्तरार्धात्सर्वेभ्यो हविर्भ्य इडां समवद्यतीति निर्देशे आज्यव्यतिरिक्तानामेव निर्देशादिति ।

1. B[2] reads एवं विधानादेकवचनत्वात्
2. An reads ग्रहाच्च
3. B. Ms. omits the portion beginning from ध्रौवाज्यमात्रेण and ending with नेति केचित्
4. कुण्डलान्तर्भागो व्याख्यातं न परिगणितो M पुस्तके.

ऐन्द्राग्नविकाराणामूहे[क]नाभिमर्शनम्। समुच्चयेनाऽभिमर्शनं [ख]सर्वेषामुक्तत्वात् ॥ ५ ॥

"[1]ममाग्ने वर्चो विहवेष्वस्त्विति अनुवाकेन सर्वाणि हवींष्यासन्नान्यभिमृशेदृष्टाभिर्वा ॥ ६ ॥

[2]चतुर्होत्रा पौर्णमास्यां हवींष्यासन्नान्यभिमृशेत् प्रजाकामः[3]पञ्चहोत्राऽमावास्यायां स्वर्गकामो नित्यवदेके समामनन्ति ॥ ७ ॥

इत्यष्टमी कण्डिका

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

चतुर्थप्रश्ने द्वितीयः पटलः ॥

अथ तृतीयः पटलः ॥

[4]दशहोतारं वदेत् पुरस्तात्सामिधेनीनाम् ॥ १ ॥

दशहोत्रादयः पुरस्तादुपरिष्टादिति यत्र [1]चोद्यन्ते तानि तस्याङ्गम् ॥ १ ॥

क. अस्य च यागसमवेतदेवताभिधायित्वात् देवतान्तरवत्यामेतद्विकृतौ तत्समवेतदेवताप्रकाशनार्थं तद्देवतावाचकं पदमूहितव्यमिति ।

ख. सर्वेषाममीषां मन्त्राणामत्र पाठात तदनुग्रहायाऽभिमर्शने सर्वेषां समुच्चय एव न विकल्प इति ।

१. ममाग्ने वर्चः इत्यनुवाकः ( तै. सं. ४. ८. १४. ) द्रष्टव्यः ।

२. पृथिवी होता। द्यौरध्वर्युः। मित्रोऽग्नीत्। बृहस्पतिरुपवक्ता ( तै. आ. ३. २ ) इति चतुर्होता।

३. अग्निर्होता। अश्विनाध्वर्यू। त्वष्टाऽग्नीत्। मित्र उपवक्ता। ( तै. आ. ३. ३ ) इति पञ्चहोता।

४. See page for दशहोता। मन्विद्ध मन्द्रजिह्वामर्त्यस्य ते होतर्मूर्धन्नाजिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय।

1. O. M. omits from यत्र चोद्यन्ते to आरम्भ in next Sutra.

"अङ्गिरसो मास्य यज्ञस्य प्रातरनुवाकैरवन्त्वि"ति सामिधेनीनां प्रतिपदि जपति ॥ २ ॥

प्रतिपत् आरम्भः । तत्र सकृत् ॥ २ ॥

अनूच्यमानासु दशहोतारं व्याख्यायो[1]उच्छुष्मो अग्न इति समिध्यमानम् । समिद्धो अग्निराहुतः स्वाहाकृतः पिपर्तुनः स्वगा देवेभ्य इदं नम इति समिद्धम् ॥ ३ ॥

समिध्यमानं समिद्धमिति चाऽग्न्यभिमन्त्रणम् ॥

[2]"मनोऽसि प्राजापत्यम्" इति स्रौवमाघार्यमाणम् ॥

स्रुच्यमन्वारभ्य[3]"वागस्यैन्द्री"त्यनुमन्त्रयते ॥ ५ ॥

"देवाः पितरः पितरो देवा योऽहमस्मि स सन् यजे । यस्यास्मि न तमन्तरेमि । स्वम्म इष्टꣳ स्वं दत्तम् स्वं पूर्तꣳ स्वꣳश्रान्तं स्वꣳ हुतम् । तस्य मेऽग्निरुपद्रष्टा वायुरुप श्रोता आदित्योऽनुख्याता । द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुः । य एवास्मि स सन् यज" इति होतृप्रवरेऽध्वर्युप्रवरे च प्रव्रियमाणे ॥ ६ ॥

देवाः पितर इति प्रवराङ्गम्, तन्निवृत्तौ निवृत्तिः ।[क]" सीद होतः " इत्यत्राऽप्यनिवृत्तिः । केचित्तु [ख]निवृत्तिः, " यस्यास्मि न तमन्तरेमि " इति लैङ्ग्यात् ॥ ६ ॥

क. 'सीद होतः' इत्यस्य प्रवरकार्यकरत्वात् प्रवराङ्गभूतस्याऽस्य जपस्य प्रवृत्तिर्भवेदेवेति ।

ख. प्रवरस्थानीयत्वेऽपि 'सीद होतः' इत्यस्य गोत्रर्षिसम्बन्धकीर्तनाभावात् 'यस्यास्मि न तमन्तरेमि' इति गोत्रर्षिसम्बन्ध स्थल एवाऽस्य प्रयोक्तव्यत्वावगतेः तदभावस्थले लिङ्गाननुगुणत्वान्नाऽस्य प्रवृत्तिरिति ।

१. उच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते । अग्ने देवेद्ध

२. मनोऽसि प्राजापत्यं मनसा मा भूतेनाऽऽविश ॥

३. वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविश । ( तै. सं. १, ६, २, १ )

चतुर्होतारं व्याख्याय वसन्तमृतूनां प्रीणामीत्येतैः प्रतिमन्त्रं प्रयाजान् हुतं हुतम् ॥ ७ ॥

[क]चतुर्होत्रा प्रयाजाङ्गम् । प्रयाजानूयाजाज्यभागस्विष्टकृदनुमन्त्रणानि तन्त्रेण वरुणप्रघासेषु ॥ ७ ॥

"[ख]एको ममैका तस्य योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मो द्वौ मम द्वे तस्य, त्रयो मम तिस्रस्तस्य, चत्वारो मम चतस्रस्तस्य, पञ्च मम न तस्य किञ्चन योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः" इत्येतैर्वा प्रतिमन्त्रम् ॥ ८ ॥

[ग]वेत्युक्तेर्विकल्पो होत्रायाजमानयोरपि । समुच्चय [घ]उपदेशः ॥ ८ ॥

अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासमित्याज्यभागौ ॥ ९ ॥

विहृतानुमन्त्रणौ वा "अग्निना यज्ञश्चक्षुष्मान् अग्नेरहं देवयज्यया चक्षुष्मान् भूयासम् । सोमेन यज्ञश्चक्षुष्मान् सोमस्याहं देवयज्यया चक्षुष्मान् भूयास"मिति विहृतौ ॥

क. चतुर्होतृमन्त्रः पूर्वमुक्तः । वरुणप्रघासेषु प्रतिप्रस्थाताऽध्वर्योरनन्तरं प्रयाजाननुतिष्ठति । तदुत्तरकाल एव तन्त्रेणानुमन्त्रणं कर्तव्यम् । सूत्रे भूतकालनिर्देशेन होमोत्तरकालमेवानुमन्त्रणविधानादिति ।

ख. मन्त्रोऽयं वाजसनेयिकः See मा. शा. १-४-९ from ९ to १६ कण्डिकाः

ग. अयं भावः—यद्यपि परिभाषायां 'होत्रायाजमानयोस्समुच्चयः' ( परि. २-९ ) इति एकत्र पठितानामनेकेषामपि मन्त्राणां समुच्चय उक्तः, तथाप्यत्र सूत्रे 'इत्येतैर्वा प्रतिमन्त्रम्' इति विकल्पबोधकवाशब्दग्रहणात् पूर्वसूत्रविहितैः "वसन्तमृतूनाम्" इति मन्त्रैस्सह एतत्सूत्रोक्तानां "एको मम" इत्यादीनां विकल्प एव, न समुच्चय इति ।

परिभाषासूत्रस्याऽयमर्थः—होत्रा पठनीयाः "उच्छ्रयस्व वनस्पते" इत्यादयो मन्त्रा होत्राः यजमानकाण्डोक्ता मन्त्रा याजमानाः । होत्राश्च याजमानाश्च होत्रायाजमानाः तेषां समुच्चयः अर्थात् यत्र हौत्रमन्त्रा बहवः पठिता अकर्मकरणाः, तेषां समुच्चयः । एवं याजमानानामपि परस्परमिति ।

घ. परिभाषासूत्रेऽविशेषेण समुच्चयविधानादत्रापि समुच्चय एव । अतश्चात्रत्यो वाशब्दस्समुच्चयार्थ इति उपदेशमतमिति ।

[1]विहृतानुमन्त्रणौ विभक्तानुमन्त्रणौ ॥ ९, १० ॥

पञ्चहोतारं वदेत्पुरस्ताद्धविरवदानस्य ॥ ११ ॥

हविरङ्गं पञ्चहोता । [क]तन्त्रेण वा मध्यवर्तित्वादुपसत्सु सुब्रह्मण्यावत् ॥ ११ ॥

'अग्नेरहं देवयज्ययाऽन्नादो भूयास'मित्याग्नेयं हुतमनुमन्त्रयते। "[१]दब्धिरसी"त्युपांशुयाजम्, अग्नीषोमयोरित्यग्नीषोमीयम्, '[२]इन्द्राग्नियो'रित्यैन्द्राग्नम्, '[३]इन्द्रस्ये'त्यैन्द्रं सान्नाय्यम्, '[४]महेन्द्रस्ये'ति माहेन्द्रम्, 'अग्नेः स्विष्टकृत' इति सौविष्टकृतम् ॥ १२ ॥

दब्धिरसीत्युपांशुयाजमग्नीषोमीयमपि[ख] ॥

पुरस्तात्स्विष्टकृतोऽन्यदेवतान्येके समामनन्ति ॥ १३ ॥

इति नवमी कण्डिका

[५]अग्नेः स्विष्टकृतोऽहं देवयज्ययेत्यस्य पुरस्तादन्यदेवतानां पाठः । शाखान्तरे तानि हविर्विशेषणमनपेक्ष्य भवन्ति ॥ १३ ॥

"इन्द्रस्य वैमृधस्याऽहं देवयज्ययाऽसपत्नो वीर्यवान् भूयासम्" 'इन्द्रस्य त्रातुरहं देवयज्यया त्रातो भूयासं'

क. अतो यावद्धविरावर्तत इति । अथवा मध्यपाठादगृह्यमाणविशेषत्वात् उपसत्कालीन सुब्रह्मण्याह्वानस्याऽहर्गणे यथा तन्त्रेणानुष्ठानम "इत्यहे सुत्यामागच्छ" इति तद्वदत्रापि तन्त्रमिति । See also पू. मी. ११-३-१०

ख. अग्नीषोमदेवताकमुपांशुयाजमपि दब्धिरसीत्यनेनैवानुमन्त्रयेदिति ।

1. An omits विहृतानुमन्त्रणौ विभक्तानुमन्त्रणौ, Ad reads only विहृतानुमन्त्रणौ
2. B. Ms reads दब्धिरसी अग्नीषोमीयमुपांशुयाजम्

१. दब्धिरस्यदब्धो भूयासं अमुं दभेयम् ।
२. इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम् ।
३. इन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासम् ।
४. महेन्द्रस्याऽहं देवयज्यया जेमानं महिमानं गमेयम् ।
५. अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयम् ।

'द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासम्'। भूमानं प्रतिष्ठां गमेयमित्येके। 'पूष्णोऽहं देवयज्यया प्रजानिषीय प्रजया पशुभिः'। 'सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयम्'। 'विश्वेषां देवानामहं देवयज्यया प्राणैस्सायुज्यं गमेयम्'। 'अर्यम्णोऽहं देवयज्यया स्वर्गं लोकं गमेयम्'। 'अदित्या अहं देवयज्यया प्र प्रजया च पशुभिश्च जनीषीय' 'इन्द्रस्येन्द्रियावतोऽहं देवयज्ययेन्द्रियाव्यन्नादो भूयास'-मिति यथालिङ्गं वैकृतीः ॥ १ ॥

[क]ऐन्द्राग्नविकारत्वादिन्द्रियावतः सिद्धे पाठो मन्त्रार्थः। ऊहश्चेद् मन्त्रः स्यात्। विकृतौ भवा वैकृत्यः। वैमृधोऽपि विकृतिः। अतः [1]प्रियेगत्यासाद्यते ॥ १ ॥

[1]'अग्निर्मा दुरिष्टात्पातु' इति प्राशित्रमवदीयमानम् ॥ २ ॥

[2]'सुरूपवर्षवर्ण एहि' इतीडाम् ॥ ३ ॥

सुरूपवर्षवर्ण एहीतीडामवदीयमानाम्। तामाह्रियमाणामित्युत्पत्तिरेवाहरणमिडायाः। केचिद्भक्षायाऽऽह्रियमाणायां विकल्पमिच्छन्ति। दैव्याइडाया अभिधानादिडाद्वित्वेऽप्यनूहो वरुणप्रघासेषु ॥ २, ३ ॥

"भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि दधिष एहि इड एहि सूनृत एहि" इतीडाया उपांशूपहवे सप्तदेव-

क. 'इन्द्रस्येन्द्रियावतः' इत्यस्यैन्द्राग्नविकारत्वादेव 'इन्द्रियाव्यन्नाद' इति प्राप्तेः सिद्धौ पुनरत्र पाठः मन्त्रत्वसिध्यर्थः। ऊहश्चेन्मन्त्रत्वं न स्यात्। ऊहप्रवरनामधेयानां मन्त्रत्वाभावस्य पूर्वमीमांसायां द्वितीये साधितत्वादिति।

1. B. Ms. reads आसादनम्

१. अग्निर्मा दुरिष्टात्पातु सविताऽघशंसाद्योमेऽन्ति दूरेऽरातीयति तमेतेन गेषम् ॥

२. सुरूपवर्षवर्ण एहीमान् भद्रान्दुर्यां अभ्येहि मामनुव्रता न्यु शीर्षाणि मृड्ढ्वमिड एह्यदित एहि सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टिं तेऽशीय ॥ (तै. सं. १-६-३-१)

गवीर्जपति । "चिदसि मनासि धीरसि रन्तीरमतिस्सूनु-स्सूनरी"त्युच्चैरुपहवे सप्त मनुष्यगवीः । "देवीर्देवैरभि मा निवर्तध्वꣳस्योनास्स्योनेन घृतेन मा समुक्षत नम इदमु-पदंभिषगृषिर्ब्रह्मा यद्ददे समुद्रादुदचन्निव स्रुचा वागग्रे विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिश"न्निति च ॥ ४ ॥

उपहूयमानायां वायविडाते मातेति होतारमीक्ष-माणो वायुम्मनसा ध्यायेत् ॥ ५ ॥

वायविडा ते [1]मातेत्यस्यैव ध्यानम् । उपदेशोऽधिकः[क] [2]"वायुष्टे वत्स" इति ॥ ५ ॥

'सा मे सत्याशी' रित्याशीष्षु । आशीर्म ऊर्जमिति च ॥

'इडाया अहं देवयज्यया पशुमान् भूयासम्' इत्यु-पहूताम् । 'इडा धेनुस्सहवत्सा न आगादूर्जं दुहाना पय-सा प्रपीना । सा नो अन्नेन हविषोत गोभिरिडाभ्यस्माꣳ आगा'दिति भक्षायाऽऽह्रियमाणाम् ॥ ७ ॥

उक्त इडाभक्षो मार्जनी च ॥ ८ ॥

क. वायविडा ते माता व युष्टे वत्स इति ध्यानं कर्तव्यम् । ब्राह्मणे 'वायुर्वत्स" इत्युपक्रम्य 'वायुं मनसा ध्यायेन्मात्रे वत्समुपावसृजतीति श्रवणादिति । अयञ्च ध्यानप्रकारविधिः न मन्त्रः । ब्राह्मणवाक्यतस्तथैवावगमात् ।

1. B ms. reads only मातेति ध्यानम्
2. Ibid वायुर्वत्स इति

१. सा मे सत्याशीरस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयम् यज्ञो दिवꣳरोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाꣳ अप्येत्वस्मास्विन्द्र इन्द्रियं दधात्वस्मान्राय उतयज्ञास्सचन्तामस्मासु सन्त्वाशिषस्सा नः प्रिया सुप्रतूर्तिर्मघोनी जुष्टिरसि जुषस्व नो जुष्टानोऽसि जुष्टिं ते गमेयम् ॥ ( तै. सं. १, ६, ३ )

आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणꣳसवर्चसम् । सञ्जयन् क्षेत्राणि सहसाऽहमिन्द्र कृण्वानो अन्याꣳअधरान्सपत्नान् ॥ ( तै. सं. ३, २, ८, ५ )

उक्तस्य याजमानस्य कस्यचित्पुनरनुक्रमणाद्यन्नानुक्रान्तं तत्प्रवसद्यजमाने न वक्तव्यमिति [क]केचित्। न त्वेवमिडाभक्षः शेषसंस्कारोऽपि। अतो भक्षाभावान्निवर्तते तत्र प्रवसतो भक्षमन्त्रः। मार्जनश्च दृष्टसंस्कारः[1]। अतो निवर्तते मार्जनम्। प्रैषाः प्रत्यगाशिषो न भवन्ति। अन्वाहार्यदानश्च। अत एवंविधानामपि प्रयोगः प्रवसद्यजमाने कथं स्यादिति पुनरनुक्रमणम् ॥ ८ ॥

"ब्रध्न पिन्वस्व। ददतो मे मा क्षायि। कुर्वतो मे मोपसदत्। दिशां कॢप्तिरसि। दिशो मे कल्पन्ताम्। कल्पन्तां मे दिशः। दैवीश्च मानुषीश्च। अहो रात्रे मे कल्पेताम्। अर्धमासा मे कल्पन्ताम्। मासा मे कल्पन्ताम्। ऋतवो मे कल्पन्ताम्। संवत्सरो मे कल्पताम्। कॢप्तिरसि कल्पतां म" इति बर्हिषि पुरोडाशमासन्नमभिमृशति ॥ ९ ॥

इति दशमी कण्डिका

अथैन प्रतिदिशं व्यूह "त्याशानां त्वाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः। इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम्। ब्रध्न पाहि भजतां भागी भागं मा भागो भक्तनिरभागं भजामः। अपस्पिन्वौषधीर्जिन्व द्विपात्पाहि

क. आध्वर्यव उक्तस्यैव भक्षणमन्त्रस्य मार्जनमन्त्रस्य च पुनरत्र विधानात् अवगम्यते—यदत्र नानुक्रान्तं तत्प्रवासयुक्तयजमानवति कर्मणि न प्रयोक्तव्यमिति केचिद्वदन्ति। तन्न युक्तम्; प्रवसद्यजमानकर्मणि इडाभक्षणस्य शेषसंस्कारत्वेन ऋत्विग्भिरेव कर्तव्यत्वात् यजमानस्य तन्मन्त्रलोपः प्राप्नोति। एवं मार्जनस्यापि इष्टसंस्कारत्वात् 'अन्तर्वेदि प्रस्तरे मार्जयित्वा' (आप. श्रौ. ३-३-२) इत्यनेन विहितं मार्जनमत्रऽभिसंहितम्। अन्तर्वेदि स्थिते प्रस्तरे जलमासिच्य तस्याधस्तात् हस्तेन जलं गृहीत्वा शिरस्यानयति तन्मार्जनमित्युच्यते। तदभावे तन्मन्त्रनिवृत्तिः। एवं प्रत्यगाशिष आत्मीयाः प्रार्थनाश्चान्वाहार्यदानश्च न भवेयुः। सर्वमिदं प्रवसद्यजमाने यथा भवेत् तदर्थमिदं पुनस्सूत्रकरणमिति।

1. B ms. reads only संस्कारो निवर्तते.

चतुष्पादत्र दिवो वृष्टिमेरय । ब्राह्मणानामिद्ँहविस्सोम्यानाँ सोमपीथिनाम् । निर्भक्तोऽब्राह्मणो नेहाऽब्राह्मणस्यास्तीति ॥ १ ॥

"उपहूतो द्यौः पिता । उपमान्द्यौः पिता ह्वयताम् । अग्निराग्नीध्रात् आयुषे वर्चसे । जीवात्वै पुण्याय । उपहूता पृथिवी माता । उप मां माता पृथिवी ह्वयताम् । अग्निराग्नीध्रात् आयुषे वर्चसे । जीवात्वै पुण्याये"त्याग्नीध्रभागस्य वैशेषिकम् ॥ २ ॥

[क]कृते व्यूहने व्यादेशोऽभिमृशता । तमभिमृशेदिति ॥ २ ॥

'ब्रध्न पिन्वस्वे'त्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति । "इयँ स्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षीयमाणः । स दाधार पृथिवीमन्तरिक्षं दिवञ्च तेनौदनेनातितराणि मृत्यु"मिति च ॥ ३ ॥

[ख]बहून्यपि द्रव्याणि एको भागः तस्माद्दक्षिणा तु ब्रध्नेत्यस्याऽनूहः । [ग]उदकस्य पयश्शब्देनाभिधानादक्षीरेऽप्यन्वाहार्ये पयस्वानित्यस्य मन्त्रस्यानिवृत्तिः । दक्षिणान्तरे चाऽनूहः । पाञ्चभौतिकत्वात् ॥ ३ ॥

उक्तस्सम्प्रैषोऽन्वाहार्यस्य च दानम् ॥ ४ ॥

क. व्यूहनं विभज्य स्थापनम् । 'आशानां त्वा' इत्यादिना 'नेहाब्राह्मणस्यास्ति' इत्यन्तेन मन्त्रेण प्रतिदिशं व्यूहने कृतेऽभिमृशता व्यादेशः कर्तव्यः 'इदं ब्रह्मण' इत्यादि । तत्र ब्राह्मणे तमभिमृशेदित्यभिमर्शनविधानादिति ।

ख. क्वचिद्दक्षिणायामनेकद्रव्यसाध्यत्वेऽपि 'ब्रध्न पिन्वस्व' इत्येकवचनस्याऽनूह एव । भागस्यैकत्वादेकस्मै दीयमानस्येति ।

ग. "प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान्" ( तै. सं. १-६-३-३ ) इत्यन्वाहार्याभिमन्त्रणार्थे मन्त्रे पयस्वानित्यत्र पयश्शब्देनोदकस्याभिधानात् जलपक्वेऽन्वाहार्ये मन्त्रस्यानिवृत्तिरिति ।

1. An & Q. M. read तमभिमृशता

[क]उक्तस्सम्प्रैष इत्युभौ सम्प्रैषावुत्तरतः परीतेत्यपि। प्रथम इत्युपदेशः ॥ ४ ॥

[१]"'एषा ते अग्ने समित्' इत्यानूयाजिकीं समिधमाधीयमानाम्। यन्ते अग्न आवृश्चाम्यहं वा क्षिपितश्चरन्। प्रजाञ्च तस्य मूलञ्च नीचैर्देवा निवृश्चत॥ अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः। इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किञ्चन। यो मां द्वेष्टि जातवेदो यञ्चाहं द्वेष्मि यश्च माम्। सर्वांस्तानग्ने सन्दह यांश्चाहं द्वेष्मि ये च माम्" इत्याहितायामग्निम् ॥ ५ ॥

[ख]'एषा ते अग्ने' इत्यावृत्तिर्वरुणप्रघासेषु ॥ ५ ॥

"वेदिर्बर्हिः शृत ँ हविरिध्मः परिधयस्स्रुचः। आज्यं यज्ञ ऋचो यजुर्याज्याश्च वषट्काराः। सम्मे सन्नतयो नमन्तामिध्मसन्नहने हुत" इति सम्मार्गान् हुतान् ॥ ६ ॥

[२]सप्तहोतारं वदेत्पुरस्तादनूयाजानामुपरिष्टाद्वा ॥ ७ ॥

इत्येकादशी कण्डिका

क. उक्तस्सम्प्रैष इत्यनेन पूर्वोक्तौ "दक्षिणत एत" इति ( आप. श्रौ. ३-४-२ ) 'उत्तरतः परीत' (आप. श्रौ. ३-४-४) इत्युभावपि सम्प्रैषौ गृह्येते इति। प्रथमस्यैव याजमानत्वम्। तत्रैव 'यजमान आह' इत्युक्तत्वात् द्वितीयस्य त्वाध्वर्यवत्वमेवेति।

ख. आधीयमानसमिदभिमन्त्रणरूपत्वात् प्रतिप्रस्थात्रा पश्चात्समिदाधानाद्भिन्नकालत्वादावृत्तिरिति।

१. एषा ते अग्ने समित्तया वर्धस्व चाच प्यायस्व वर्धिता च ते यज्ञपतिराच प्यायतां वर्धिषीमहि च वयमाच प्यासिषिमहि॥

२. महाहविर्होता। सत्यहविरध्वर्युः। अच्युतपाजा अग्नीत्। अच्युतमना उपवक्ता। अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याऽभिगरौ॥ अयास्य उद्गाता॥ (तै. आ. ३-५. ) इति सप्तहोतुर्मन्त्रः।

[क]सप्तहोतानूयाजाङ्गम् । [ख]न तु व्यूहनम् । तस्मादननूयाजेऽपि कार्यम् ॥ ७ ॥

[1]बर्हिषोऽहं देवयज्यया प्रजावान् भूयासमित्येतैः प्रतिमन्त्रमनूयाजान् हुतं हुतम् ॥ १ ॥

[2]उभौ वाजवत्यौ जपतः ॥ २ ॥

[ग]अध्वर्योरपि जपो वाजवत्यादीनाम् ॥ १, २ ॥

"वसून् देवान् यज्ञेनापिप्रें रुद्रान् देवान् यज्ञेनापि प्रेमादित्यान् देवान् यज्ञेनापिप्रेमि"ति प्रतिमन्त्रं परिधीनज्यमानान् । समक्तं बर्हिर्हविषा घृतेन समादित्यैर्वसुभिस्संमरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरक्तां दिव्यं नभो गच्छतु यत्स्वाहे"ति प्रस्तरमज्यमानम् ॥ ३ ॥

'अग्नेरहमुज्जितिमनूज्जेष'मिति यथालिङ्गं सूक्तवाकदेवताः ॥ ४ ॥

नोपांशुदेवताया उज्जितिः, अपरिपाठात् । उपांशुदेवताया एवोज्जितिर्नाज्यपानामित्युपदेशः[घ] ॥ ४ ॥

क. पुरस्तादुपरिष्टाद्वाऽनूयाजानामित्यनूयाजसम्बन्धश्रवणादिति । अतोऽननूयाजेषु कर्मसु न भवत्युदयनीयादिषु ।

ख. अनूयाजाङ्गमिति शेषः ।

ग. उभौ वाजवत्यौ जपत इति वचनादिति ।

घ. अपठितत्वेऽपि 'दर्शपूर्णमासयोरेव देवतानां यजमान उज्जितिमनूज्जयति' (तै. सं. १-७ ४-२) इति सर्वदेवतानामविशेषनिर्देशात् यथालिङ्गं सूक्तवाकदेवता इति सूत्रितत्वात् सूक्तवाके उपांशुदेवतायास्सम्बन्धश्चोपांशुदेवताया अप्युज्जितिः । आज्यपानान्त्वप्रधानत्वादपठितत्वाच्च नोज्जितिरित्युपदेशमतमिति ।

१. बर्हिषोऽहं देवयज्यया प्रजावान् भूयासम् । नराशंसस्याहं देवयज्यया पशुमान् भूयासम् अग्नेस्स्विष्टकृतोऽहं देवयज्यया युष्मान् यज्ञेन प्रतिष्ठां गमेयम् । ( तै. सं १, ६, ४, १ )

२. वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः । उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् ॥ (तै. स. १,१,१३. १,)

यदा चास्य होता नाम गृह्णीयादथ [1]ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति ॥ ५ ॥

"सा मे सत्याशीर्देवान् गम्याज्जुष्टाज्जुष्टतरा पण्यात्पण्यतराऽरेडता मनसा देवान् गम्याद्यज्ञो देवान् गच्छतु यज्ञोम आगच्छत्विति सूक्तवाकस्याशीःषु यत्कामयते तस्य नाम गृह्णाति ॥ ६ ॥

"[2]रोहितेन त्वाऽग्निर्देवतां गमयत्वि"त्येतैः प्रतिमन्त्रमग्नीधा प्रस्तरं प्रह्रियमाणम् ॥ ७ ॥

[क]रोहितेनेत्यावृत्तिर्वरुणप्रघासेषु ॥ ७ ॥

"दिवः खीलोऽवततः पृथिव्या अध्युत्थितः । तेनासहस्रकाण्डेन द्विषन्तꣳशोचयामसि । द्विषन्मे बहुशोचत्वोषधे मो अहꣳशुच"मिति प्रस्तरतृणे प्रह्रियमाणे ॥ ८ ॥

[3]वि ते मुञ्चामीति परिधिषु विमुच्यमानेषु ॥ ९ ॥

वि ते मुञ्चामीत्यग्निविमोकः । अतः परिधिद्वित्वेऽपि [ख]नोह्यते पित्र्यायाम् ॥ ९ ॥

क. प्रहरणकालभेदात् समिदाधानमन्त्रवदस्याप्यावृत्तिरिति ।

ख. सूत्र परिधिग्रहणेऽपि 'एष वा अग्नेर्विमोकः' इति श्रवणादग्निविमोक एवात्र प्राधान्येन प्रतिपाद्यते । न परिधयः । अतो यत्र परिधीनां न्यूनता यथा पित्र्येष्टौ तत्र नोह इति ।

१. एमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषम् ॥ (तै. सं. १, ६, ५२)

२. रोहितेन त्वाग्निर्देवतां गमयतु । हरिभ्यां त्वेन्द्रो देवतां गमयतु । एतशेन त्वा सूर्यो देवतां गमयतु । (तै. सं. १, ६, ४, ३)

३. विते मुञ्चामि रशना विरश्मीन वियोक्त्रा यानि परिचर्तनानि धत्तादस्मासु द्रविणं यच्च भद्रं प्रणो ब्रूतात् भागधां देवतासु ॥
अदो मे इति मुद्रितकोशेषु यज्ञो म इत्येव साम्प्रदायिकः पाठः ।

विष्णोरशंयो[1]रिति शंयुवाके। "यज्ञ नमस्ते यज्ञ नमो नमश्च ते यज्ञ। शिवेन मे सन्तिष्ठस्व। स्योनेन मे सन्तिष्ठस्व। सुभूतेन मे सन्तिष्ठस्व। ब्रह्मवर्चसेन मे सन्तिष्ठस्व। यज्ञस्यर्धिमनु सन्तिष्ठस्व। उपते यज्ञ नमः। उप ते नमः उप ते नम इति च। इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा वसुभिराशीर्दा अथर्वभिः। तस्य मेष्टस्य वीतस्य द्रविणेहागमे"रिति संस्रावं हुतम् ॥ १० ॥

इति द्वादशी कण्डिका ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

चतुर्थप्रश्ने तृतीयः पटलः

अथ चतुर्थः पटलः ॥

"सोमस्याहं देवयज्यया सुरेता रेतो धिषीये"ति यथालिङ्गं पत्नीसंयाजान् हुतं हुतम् ॥ १ ॥

[क] विहृतेज्यायामपि देवपत्नीनां गृहपतेश्च समानमनुमन्त्रणम् ॥ १ ॥

"राकाया अहं देवयज्यया प्रजावान् भूयासम्। सिनीवाल्या अहं देवयज्यया पशुमान् भूयासम् कुह्वा

क. 'पुंस्त्वे देवपत्नीभ्य एतामेके समानमन्त्रमुपरिष्टाद्वा' (आप. श्रौ. ३-९-६) इत्यनेन राकादिमन्त्राणां याजमानानां देवपत्नीयागानन्तरभावित्वं विहितम्। तत्पक्षे गृहपतियागस्य तदुत्तरभावित्वं प्राप्नोति। तदा तस्य राकादियागान्तरव्यवधानेऽपि। गृहपतियागानन्तरमेव देवपत्नीनां गृहपतेश्च तन्त्रेणानुमन्त्रणम्। मन्त्रस्य तथैव प्रवृत्तत्वात् 'देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासम्' (तै. सं. १-६-४-४) इति प्रकृतौ मन्त्रविकारानुपपत्तेश्चेति।

१. विष्णोरशंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयम् ॥

अहं देवयज्यया पुष्टिमान् पशुमान् भूयासमिति काम्याः ॥ २ ॥

"राकाया अहं देवयज्यया प्रजावती भूयासम् । सिनीवाल्या अहं देवयज्यया पशुमती भूयासम् । कुह्वा अहं देवयज्यया पुष्टिमती पशुमती भूयास"मिति पत्न्यनुमन्त्रयते ॥ ३ ॥

काम्या इत्यकाम्या अप्येता एवोपलक्ष्यन्ते ॥ २, ३ ॥

इडाऽस्मान् अनुवस्तान् घृतेन यस्याः पदे पुनते देवयन्तः । वैश्वानरी शक्वरी वावृधानोपयज्ञमस्थित वैश्वदेवीत्याह्वयेडाम् ॥ ४ ॥

इडाह्वयस्यानूहेनोपहवो वरुणप्रघासेषु [1]देवताभिधाना[क]त् । तन्त्रेण च याजमानम् ॥ ४ ॥

अन्तर्वेदि वेदन्निधायाभिमृशति[२]"वेदोऽसी"ति । पुरा त्रिदेयेति यद्यद्भ्रातृव्यस्याभिध्यायेत्तस्य नाम गृह्णीयात् । तदेवास्य सर्वं वृङ्क्त इति विज्ञायते ॥ ६ ॥

यद्यद्भ्रातृव्यस्याभिध्यायेदिति काम्यम् । पुराविदेयशब्दान्नामग्रहणं शत्रुद्रव्यस्य । असत्यपि कामे न मन्त्रलोपः । अभिमर्शनावृत्तिर्वरुणप्रघासेषु स्वस्यां निधाय वेद्याम् ॥ ६ ॥

क. इडानिगदे 'वृष्टिर्वा इडा' इत्यादिना देवताया अभिधानात् वरुणप्रघासेषु इडाद्वयेऽपि देवताया एकत्वात् द्विवचनान्तत्वेनोहमकृत्वा यथाप्रकृत्येव पाठः ।

1. B. ms. reads देवतानामभिधानात्.

१. त्वष्टुरहं देवयज्यया पशूनाꣳरूपं पुषेयम् ।

२. वेदोऽसि वित्तिरसि पाप्मनो व्यावृत्तिं विदेय कर्मासि करुणमसि क्रियासꣳसनिरसि सनितासि सनेयं घृतवन्तङ्कुलायिनꣳ रायस्पोषꣳसहस्रिणं वेदो ददातु वाजिनम् ॥ (तै. १ ,६, ४, ४)

या सरस्वती विशोभगीना तस्यां मे रास्व तस्यास्ते भक्षिवाणो भूयास्मेति फलीकरणहोमे हुते मुखं विमृष्टे ॥ ७ ॥

मुखविमार्गः [1]फलीकरणहोमाङ्गम्, तेनोपलक्षणात्। तस्मात्सान्नाय्यतन्त्रासु निवर्तते। अनुकर्षपक्षे पुनः पुनः क्रियते सवनीयानामिति ॥७॥

वसुर्यज्ञो वसुमान् यज्ञस्तस्य मा यज्ञस्य वसोर्वसुमतो वस्वागच्छत्वद्गो म आगच्छतित्विति समिष्टयजुर्हुतमनुमन्त्रयते। यत्कामयते तस्य नाम गृह्णाति ॥ ८ ॥

सं यज्ञपतिराशिषेति यजमानभागं प्राश्नाति ॥

इति त्रयोदशी कण्डिका

दधिक्राव्णो अकारिषमिति सायन्दोहम। इदꣳ हविरिति प्रातर्दोहम् ॥ १ ॥

[क]इदं हविरिति सौत्रामणिकः स्वाहाकारान्तः। इदंहविरित्येतावानुपदेशः ॥१॥

नाब्राह्मणस्सान्नाय्यं प्राश्नीयात् ॥ २ ॥

सान्नाय्येडायाः सान्नाय्ययजमानभागस्य च [2] क्षत्रियवैश्ययोः [क]प्रतिषेधः ॥२॥

क. सौत्रामण्यां यजमानभागप्राशनार्थं "इदꣳ हविः स्वाहा" इति मन्त्रः पठितः। स एवात्रापि यजमानेन प्रातर्दोहशेषभक्षणे पठनीय इति। उपदेशमतन्तु "इदं हविः" इत्येतावानेव मन्त्रः सूत्रे तथैव पाठात् प्रकरणान्तरपठितस्य स्वाहाकारान्तस्य मन्त्रस्यात्राऽनुपकारकत्वादिति। स्वाहान्तो मन्त्र इत्येव रुद्रदत्तः।

क. सान्नाय्यस्य "सोमः खलु वै सान्नाय्यम्" इति सोमसस्तत्रात् क्षत्रियवैश्ययोः "न सोमम" इति सोमपानप्रतिषेधादत्रापि प्रतिषेधः।

1. B. ms reads only फलीकरणाङ्गम्
2. B. ms reads क्षत्रियस्य च वैश्यस्य च.

अन्तर्वेदि प्रणीता आसाद्य तास्वध्वर्युस्सन्ततामुदकधारां स्रावयति [1]"सदसि सन्मे भूया" इत्यानीयमानायां जपति ॥ ३ ॥

"[2]प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ता"मित्येतैर्यथालिङ्गं व्युत्सिच्य "समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छत। अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पय" इत्यन्तर्वेदि शेषं निनीय यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु। तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वति। या सरस्वती वैशम्भल्या तस्यां मे रास्व तस्यास्ते भक्षीय तस्यास्ते भूयिष्ठभाजो भूयास्मेति मुखं विमृष्टे ॥ ४ ॥

उभो[3]कपालविमोचनं जपतः ॥ ५ ॥

सहाध्वर्युणा कपालविमोचनजपः ॥५॥

विष्णोः क्रमोऽसीति दक्षिणे वेद्यन्ते दक्षिणेन पदा चतुरो विष्णुक्रमान् प्राचः क्रामत्युत्तरमुत्तरं ज्यायांसमनतिहरन् सव्यम् ॥ ६ ॥

[क]विष्णुक्रमेषु सव्यं पादं न पुरस्तान्नयति ॥६॥

क. विष्णुक्रमा नाम "विष्णोः क्रमोऽसि" इति मन्त्रकरणकाः पदविक्षेपाः।

१. सदसि सन्मे भूयास्सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः।

२. प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम्। दक्षिणायां दिशि मासाः पितरो मार्जयन्ताम्। प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम्। उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम्। ऊर्ध्वायां दिशि यज्ञस्संवत्सरो यज्ञपतिर्मार्जयन्ताम्। (तै. सं. १, ६, ५, १, २).

३. यानि घर्मे कपालान्युपचिन्वन्ति वेधसः। पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम्॥ (तै. सं. १, १, ७, २)

नाऽऽहवनीयमतिक्रामति ॥ ७ ॥

न चाहवनीयमतिक्रामति । यत्रापि परतो वेदिः [क]वरुणप्रघास-साकमेधपितृयज्ञेषु ॥७॥

अवस्थाय चतुर्थं जपति ॥ ८ ॥

तूष्णीमवस्थाय [1]चतुर्थजपः, न मन्त्रान्ते ॥८॥

[१]विष्णुक्रमान्विष्णवतिक्रमानतिमोक्षानिति व्यतिषक्तानेके समामनन्ति । विनिरूढानेके ॥ ९ ॥

[ख]व्यतिषक्तेषु विष्णुक्रमेणावस्थाय विष्णवतिक्रमातिमोक्षजपः । उत्तरे विहारे विष्णुक्रमादि । अवेदित्वं कारत्वाद्वरुणप्रघासेषु ॥

क. तद्दर्शनेनायं प्रतिषेधः । प्रकृते वेदेः आहवनीयसीमाभ्यन्तर एव परिसमाप्तेः प्रतिषेध-प्रयोजनाभावादिति ।

ख. व्यतिषङ्गः संसर्गः परस्परं मेलनम् । अत्र "विष्णोः क्रमोऽसि" (तै. सं. १-६-५-२) इति चत्वारो मन्त्राः विष्णुक्रमा उच्यन्ते । "अग्निना देवेन पृतनाः" (तै. सं. ३-५-३) "इन्द्रेण देवेन" "विश्वेभिर्देवेभिः" इति त्रयो मन्त्राः विष्णवतिक्रमाः" । "ये देवा यज्ञहनः" (तै. सं. ३-५-४) इत्यादयो मन्त्रास्त्रयोऽप्यतिमोक्षाः । तद्यथा प्रथमं "विष्णोः क्रमोऽसि" इति प्रथमो मन्त्रः । ततः "अग्निना देवेन" इति प्रथमः ततो ये देवा यज्ञहनो यज्ञमुषः इति प्रथमः । ततो विष्णुक्रमणे द्वितीयः, ततो विष्णवतिक्रमणे द्वितीयः । ततोऽतिमोक्षे द्वितीयः । अत्र विष्णवतिक्रमणे तृतीयचतुर्थौ, ततो विष्णवतिक्रमे तृतीयः ततोऽतिमोक्षे तृतीय इति । विनिरूढपक्षे तु प्रथमं विष्णुक्रमचतुष्टयं समाप्य ततो विष्णवतिक्रमाः, ततोऽतिमोक्षा इति । तत्र व्यतिषङ्गपक्षे यत्र तिष्ठता यजमानेन विष्णवतिक्रमो जप्तः, तत्रैव स्थित्वातिक्रमातिमोक्षावपि जप्याविति ।

1. Ad reads चतुर्थं जपेत्

१. विष्णोः क्रमोऽस्यभिमातिहा गायत्रं छन्द आरोह पृथिवीमनु विक्रमस्व निर्भक्तस्स यं द्विष्मः । विष्णोः क्रमोऽस्यभिमातिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनु विक्रमस्व निर्भक्तस्स यं द्विष्मः ॥ विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आरोह दिवमनु विक्रमस्व निर्भक्तस्स यं द्विष्मः । विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभं छन्द आरोह दिशोऽनु विक्रमस्व निर्भक्तस्स यं द्विष्मः ।
( इति विष्णुक्रमाः )

२. अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण पूर्वजान् भ्रातृव्यानधरान् पादयाम्यवैनान् बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान् द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि इति प्रथमो विष्णवतिक्रमः । ( तै. सं. ३, ५, ३, १ ) एवं इन्द्रेण देवेन, विश्वेभिर्देवेभिः, इति द्वितीयतृतीयौ ।

'अग्निना देवेन पृतना जयामी'ति विष्ण्वतिक्रमाः। '[1]ये देवा यज्ञहन' इत्यतिमोक्षाः ॥ १० ॥

अगन्म सुवस्सुवरगन्मेत्यादित्यमुपतिष्ठते ॥ ११ ॥

इति चतुर्दशी कण्डिका

''उद्यन्नद्य मित्रमहस्सपत्नान्मे अनीनशः। दिवैनान् विद्युता जहि निम्रोचन्नधरान् कृधि। उद्यन्नद्य वि नो भज पिता पुत्रेभ्यो यथा। दीर्घायुत्वस्य हेशिषे तस्य नो देहि सूर्य। उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम्। हृद्रोगं मम सूर्य हरिमाणञ्च नाशय। शुकेषु मे हरिमाणꣳरोपणाकासु दध्मसि। अथो हारिद्रवेषु मे हरिमाणं निदध्मसि। उदगादयमादित्यो विश्वेन सहसा सह। द्विषन्तं मम रन्धयन्मो अहं द्विषतो रधम्। यो नश्शपादशपतो यश्च नश्चपतश्शपात्। उषाश्च तस्मै निम्रुक्च सर्वं पापꣳसमूहतामिति च ॥ १ ॥

आत्मसंस्कारा एवादित्योपस्थानं पुत्रनामग्रहणञ्च तेषामकर्माङ्गत्वात् ॥ १ ॥

"ऐन्द्रीमावृतमन्वावर्त" इति प्रदक्षिणमावर्तते ॥ २ ॥

यद्यभिचरेदिदमहममुष्याऽऽमुष्यायणस्य प्राणं निवेष्टयामीति दक्षिणस्य पदः पार्ष्ण्या निमृद्नीयात् ॥ ३ ॥

आमुष्यायणग्रहणे गोत्रतद्धितेनैवाभिधानम्—इदमहं देवदत्तस्य गार्ग्यस्येति। यत्र त्वन्यदामुष्यायणं तत्र तेनैव। यथा वात्सस्य प्राण-

१. ये देवा यज्ञहनः पृथिव्यामध्यासते। अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। ये देवा यज्ञमुषः + वयम्॥ आगन्ममित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति। नाकं गृह्णानास्सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिवः॥ इति प्रथमोतिमोक्षः। एवंद्वितीयतृतीयौ।

मिति। आचार्यामुष्यायणमनुप्रब्रवीताचार्यप्रवरं प्रवृणीतेति प्रवरमामुष्यायणात् पृथग्भूतं दर्शयति। आमुष्यायणग्रहणे पितुर्नामेति हिरण्यकेशिनः--देवदत्तस्य याज्ञदत्तेः प्राणं निवेष्टयामीति। जीवति तु वंश्ये युवप्रत्ययः यथा--अयं गार्ग्यायणस्येति ॥

"पुण्या भवन्तु या लक्ष्मीः परा भवन्तु याः पापी"-रित्युक्त्वा समहं प्रजया सम्मया प्रजेति पुनरुपावर्तते ॥ ४ ॥

"समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यास"मित्याहवनीयमुपसमिन्धे। वसुमान् यज्ञो वसीयान् भूयासमित्युपतिष्ठते ॥ ५ ॥

इति पञ्चदशी कण्डिका

वरुणप्रघासेषु [1]समिन्धनस्यावृत्तिः। तन्त्रेणोपस्थानम् ॥ ५ ॥

यो नस्सपत्नो योऽरणो मर्तोऽभिदासति देवाः। इध्मस्येव प्रक्षायतो मातस्योच्छेषि किञ्चनेति च ॥ १ ॥

[१]अग्न आयूꣳषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते। [२]अग्ने गृहपत इति च ॥ २ ॥

पुत्रस्य नाम गृह्णाति 'तामाशिषमाशासे तन्तव' इत्यजातस्य। अमुष्मा इति जातस्य ॥ ३ ॥

1. B. Ms reads समिन्धनावृत्तिः

१. अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्। अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम्। दधत्पोषꣳ रयिं मयि ॥

२. अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाश्शतꣳ हिमाः। तामाशिषमाशासे तन्तवे ज्योतिष्मतीम् ॥

[क]अजातो मृतोऽसि[1]। नामाशिषमाशास्ते तन्तव इति। [ख]पुत्रभेद आवृत्तिः ॥३॥

ज्योतिषे तन्तवे त्वाऽसावनु मा तन्वीच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि दिव्याद्धाम्नो मा छित्सि मा मानुषादिति प्रियस्य पुत्रस्य नाम गृह्णाति ॥ ४ ॥

देवदत्तानु मा तन्वच्छिन्न इत्यामन्त्रणेन नामधेयग्रहणम्। प्रियपुत्राभावे ज्योतिषे, तन्तवे त्वेति सर्वस्य मन्त्रस्य लोपो मानुषान्तस्य ॥४॥

"अग्ने वह्ने स्वादितं नस्तनये पितुं पच। शं तोकाय तनुवे स्योन" इति दक्षिणाग्निम् ॥ ५ ॥

ज्योतिषे तन्तवे त्वेत्यन्तर्वेद्युपविशति। पूर्ववन्नामग्रहणम् ॥ ६ ॥

पूर्ववन्नामग्रहणम्, स एव मन्त्रः। [2]अकृतनाम्नो नक्षत्रनाम ॥६॥

ज्योतिरसि तन्तव इत्युपविश्य जपति ॥ ७ ॥

ज्योतिरसि तन्तव इत्यत्रापि लोपः प्रियपुत्राभावे, [ग]असिसम्बन्धात् ॥७॥

वेदमुपस्थ आधायाऽन्तर्वेद्यासीनोऽतिमोक्षान् जपति ॥

स्तीर्णेऽपि वेदे उपस्थ आधानं न निवर्तते। वेदतृणान्युपस्थ आधायेति हिरण्यकेशिमतात् ॥८॥

क. अजातशब्देन मृतोऽपि गृह्यत इत्यर्थः।
ख. जीवतां पुत्राणामनेकत्वे प्रतिपुत्रम् वृत्तिरिति।
ग. असिमध्यमपुरुषप्रयोगस्य साङ्गत्यापत्तेरिति।

1. O. Ms reads अजातपुत्रो मृतपुत्रोऽपि
2. O. Ms reads only अकृतनाम्ना नक्षत्रनाम

अत्र वेदस्तरणं यजमानभागस्य च प्राशनमेके समामनन्ति ॥ ९ ॥

वेदस्तरणयजमानभागप्राशने अन्योऽन्यसम्बन्धे ॥९॥

"कस्त्वा युनक्ति स त्वा विमुञ्चत्वि"ति यज्ञं विमुञ्चति॥

यज्ञविमोको मन्त्रेणैव। [ख]केचित्तु– अवेक्षन्ते विहारम्। योगे तथा दृष्टत्वात् ॥१०॥

'अग्ने व्रतपते व्रतमचारिष'मिति व्रतं विसृजते ॥

[ग]यथोदेतं तथा व्रतविसर्गः। य एवमामन्त्रितश्चरिष्यामीति तस्यैव युक्तं चरितं मयेत्येवमाख्यातुमिति। केचित्सर्वमन्त्रानिह, विभागाकरणात्। विसर्गस्यापि निवृत्तिर्व्रतोपायनाभावे। सोमे प्रायणीयादिषु व्रतानां विद्यमानत्वात्। केचित्प्रथमेनैव व्रतविसर्गः सर्वेषामेकस्यैव पाठात् ॥ ११ ॥

'[1]यज्ञो बभूवे'ति यज्ञस्य पुनरालम्भं जपति ॥१२॥

यज्ञो बभूवेति [1]पुनरारम्भार्थत्वात् यत्र विरमणं दर्शपूर्णमासयोस्तत्रान्ते लोपः। यस्याश्च विकृतेरनिष्टः पुनः प्रयोगः, यथा [2]प्रायश्चित्तार्थायाः न तत्र च पुनरारम्भः ॥ १२ ॥

क. सन्नियोगशिष्ट इति यावत्। एवञ्च गोमतीजपानन्तरं वा यजमानभागप्राशनमत्र वेति कालविकल्पः। अतश्च तत्रा करणेऽत्र वा तयोस्सहैवानुष्ठानं नाऽन्यतरस्याऽन्यतरत्रेति।

ख. मन्त्रेणावेक्षणमिच्छन्ति। कुतः? 'कस्त्वा युनक्ति स त्वा युनक्त्विति विहारमनुवीक्षते' (आ. श्रौ. ४-४-९) इति यज्ञयोगे वीक्षणविधानादिति।

ग. अयं भावः–अग्ने व्रतपते इत्यादयः चत्वारो मन्त्राः व्रतग्रहणार्थाः सूत्रे पठिताः (आप. श्रौ. ४-३-२) तत्र प्रथममन्त्रेण ब्राह्मणः, अवशिष्टै राजन्यवैश्याविति तत्रोक्तम्। अथवा सर्वैरपि ब्राह्मणः इति पक्षान्तरमुक्तम्। तत्र यैर्मन्त्रैर्व्रतग्रहणं कृतं तैरेव 'अचारिषम्' इति पदघटितैर्विमोकः कर्तव्यः। विभागानभिधानात्सर्वेषामेव पाठ इति केचित्। केचित्तु सर्वेषामपि वर्णानामेक एव मन्त्रः–'अग्ने व्रतपत' इति। संहितायामस्मिन् प्रकरण एकस्यैव पाठात्, तस्योपलक्षणत्वे प्रमाणाभावादिति।

1. B. Ms. reads पुनरारम्भत्वात् An reads पुनरालम्भार्थत्वात्
2. An reads प्रायश्चित्तार्थायाः

१. यज्ञो बभूव स आबभूव स प्रजज्ञे स वावृधे। स देवानामधिपतिर्बभूव सो अस्माँ अधिपतीन् करोतु वयं स्याम पतयो रयीणाम्। (तै. सं. ३, २, ७, २) also तै. सं. १, ६, ६, ४)

[1]गोमानिति प्राङुदेत्य गोमतीं जपति ॥ १२ ॥

प्राङुदेत्य पुरो गत्वा [1]गोमतीजपः ॥ १३ ॥

अत्र वा यजमानभागं प्राश्नीयात् ॥ १४ ॥

"यज्ञ शं च म उप च म आयुश्च मे बलञ्च मे यज्ञ शिवो मे सन्तिष्ठस्व यज्ञ स्विष्टो मे सन्तिष्ठस्व यज्ञारिष्टो मे सन्तिष्ठस्वे"ति दर्शपूर्णमासाभ्यां सोमेन पशुना वेष्ट्वा जपति ॥ १५ ॥

पुनर्दर्शपूर्णमासग्रहणान्न विकृतिषु यज्ञ शं च म इति। सोमे वृष्टिरसीत्यस्य पुरस्तात्। पशौ तु पुनर्वचनं [क]क्रमार्थम्। सर्वत्र कुर्वन्तीत्युपदे[2]शः। तदेह पशौ विधानमन्यस्य प्राकृतस्य याजमानस्य निवृत्त्यर्थम्। अतः प्राकृतमपि विकल्पेन याजमानं क्रियते ॥१५॥

"वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागा"मितीष्ट्वाऽप उपस्पृशति। तदिदं सर्वयज्ञेषूपस्पर्शनं भवति ॥१६॥

वृष्टेरेष काल इष्टिप्रकृतीनाम्। न परतो ब्राह्मणभोजनात्। [ख]इष्ट्वेति वचनात् पौर्णमासे दर्शे चाऽऽवृत्तिः, इतरथा दर्शान्ते स्यात्, यक्ष्यमाणो वेष्ट्वा वेति तत्र समाप्तेः। सोमेष्टीनां सोमार्थविमुग्वृष्ट्योः प्रसङ्गः[ग] सर्वयज्ञेषु[घ] अदर्विहोमेष्वित्युपदेशः ॥१६॥

क. अत्र सोमेन पशुनेष्ट्वेत्युक्तत्वात् अनेनैव पशावपि जपसिद्धेः उपस्थाय यज्ञ शंचम इति जपति (आप. श्रौ. ७-२९-३) इति पशौ पुनर्वचनं यूपोपस्थानानन्तरमेव यज्ञ शंचम इति क्रमविधानार्थमिति।

ख. अनेन प्रयोगपरिसमाप्त्यनेन वृष्टिरसीति द्योतितम। तत्फलमाह—पौर्णमास इति।

ग. अन्यार्थं कृतेन ऽन्यत्रोपकारसिद्धिः प्रसङ्गः। सोमान्तर्गता या इष्टयः प्रायणीयोदयनीयादयः तासां सोमार्थं कृताभ्यामेव विमुग्वृष्टिभ्यामुपकारसिद्धेर्न तासु पृथक्करणमिति।

घ. सूत्रे यज्ञशब्दग्रहणात् दर्विहोमानामयज्ञत्वात् तद्भिन्नेषु सर्वेष्वपि यज्ञेषु उपस्पर्शनं कर्तव्यमित्युपदेशमतमिति।

1. B Ms. reads गोमज्जपः
2. B. Ms. reads कुर्वन्त्युपदेशमतेन.

१. गोमाँ अग्नेऽविमाँ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः। इडावाँ एषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नस्सभावान्॥ ( तै. सं. १, ६, ६, ४ )

## ब्राह्मणा ँ स्तर्पयितवा इति सम्प्रेष्यति ॥

यज्ञतृप्त्यर्थं ब्राह्मणभोजनम् [क]वाजसनेयिश्रुतेः ॥

## प्रवसन् काले विहारमभिमुखो याजमानं जपति ॥१८॥

प्रवसद्याजमानं पूर्वेद्युः पूर्वेद्युःकालम्, उत्तरेद्युरुत्तरेद्युःकालम्। अन्यत्र सूत्रे यथाकालवचनात्। पुरुषनियमश्च प्रवसतोऽपि। [1]भोजनञ्च मन्त्रेण। प्रवसतोऽपि तत्पुरुषाश्रयार्थमिति। परार्थानाम् 'ॐ निर्वप' इत्येवमादीनामकरणं [2]पुरोडाशाभिमर्शनादीनाञ्च। आदित्योपस्थानादीनाञ्च सम्भवतामपि जप एव वचनात्। यथेतरेषामभिधेयाभावे प्रयोगः। एवम् "आरोह पथो जुहु देवयानान्" इति। एवमभिमर्शनादीनाम्। संस्पर्शकर्माणि तु भरद्वाजेनाध्वर्योर्बद्धानि॥ १८॥

## प्राचो विष्णुक्रमान् क्रामति ॥ १९ ॥

गोमतीविष्णुक्रमाणान्तु क्रिया, [ख]वचनात्। केचित्त्वनाशिषामकरणानाञ्चाऽप्रयोगः। अवचनाद्वीप्सायाः प्रतिपद्येव याजमानमित्युपदेशः[ग] ॥ १९॥

## प्राङुदेत्य गोमतीं जपति ॥ २० ॥

इति षोडशी कण्डिका ॥

प्राक्त्वविधानं विहाराभिमुखस्य[3] क्रिया मा भूदिति ॥ २० ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते
चतुर्थप्रश्ने चतुर्थः पटलः
चतुर्थः प्रश्नश्च समाप्तः
दर्शपूर्णमासौ समाप्तौ ॥

क. "ब्राह्मणा ँ स्तर्पयितवै ब्रूयात्, यज्ञमेवैतत् तर्पयति" (मा. श. ब्रा. १-७) इत्युक्तत्वात् यज्ञतृप्त्यर्थं ब्राह्मणभोजनं कर्तव्यम्। यज्ञतृप्तिरत्र यज्ञसाद्गुण्यम्।

ख. 'प्राचो विष्णुक्रमान् क्रामति, प्राङुदेत्य गोमतीं जपति' इति तेषां कर्तव्यत्वेनात्र पुनर्विधानादिति।

ग. पूर्वसूत्रे प्रवसन् काले काले इति वीप्साया अकथनात् 'काले' इति सकृदेव पाठात् प्रतिपद्येव मुख्यानुष्ठानकाले प्रवसद्याजमानम्, न पूर्वेद्युरित्युपदेशमतमिति।

1. B. Ms. reads भोजनमन्त्रेण
2. Ibid. अभिमन्त्रणादीनाञ्च.
3. An reads विहाराभिमुखक्रिया.

## इष्टिहौत्रकल्पः

पुरस्तात्सामिधेनीनां होता हृदयदेश ऊर्ध्वं प्रादेशं धारयमाणो जपति "मयि गृह्णाम्यग्रे अग्निं, यो नो अग्निः पितर" इति ॥ १ ॥

[क]समिन्ध[1]नार्था ऋचस्सामिधेन्यः । तासां पुरस्ताद्धृदयदेशं [2]संस्पृशन्नूर्ध्वं प्रादेशं, प्रदेशिन्या युक्तोऽङ्गुष्ठः प्रादेशः, तं धारयमाण एवमादि सामिधेन्यर्थम् । अतो[ख] गृहमेधीये निवर्तते ॥ १ ॥

अन्तराहवनीयमुत्करञ्च प्रतीचीनं गच्छन् जपति- "कं प्रपद्ये तं प्रपद्ये । यत्ते प्रजापते शरणं छन्दस्तत्प्रपद्ये । यावत्ते विष्णो वेद तावत्ते करिष्यामि । नमो अग्नय उपद्रष्ट्रे नमो वायव उपश्रोत्रे नम आदित्यायानुख्यात्रे । जुष्टामद्य देवेभ्यो वाचमुद्यासं स्वधावतीं पितृभ्यः शुश्रूषेण्यां मनुष्येभ्यः । प्रशास्त आत्मना प्रजया पशुभिः प्रजापतिं प्रपद्ये । अभयं मे अस्तु । प्राजापत्यमनुवक्ष्यामि वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु । वाचं प्रपद्ये भूर्भुवस्सुवः" इति । "सत्यं प्रपद्य" इति वा ॥ २ ॥

सत्यं प्रपद्य इति व्याहृत्यन्तः पूर्वेण सादृश्यादन्येषां च पाठाद्विकल्पः । संहितोपदिष्टा व्याहृतयः । दशहोतारमुक्त्वा सामिधेनीरनु-

क. अयं इष्टिहौत्रकल्पः आपस्तम्बाचार्यैः श्रौतसूत्रान्ते चतुर्विंशप्रश्ने परिभाषानतरं एकादशादिषु चतुर्दशान्तासु कण्डिकासूपदिष्टः सर्वार्थो भविष्यतीति । परं भाष्यकारेण प्रकृतावुपदिष्टस्सर्वविकृत्यर्थो भविष्यतीत्यभिसन्धाय तत आकृष्य दर्शपूर्णमासनिरूपणान्ते संयोज्य व्याख्यात इत्यवगन्तव्यम् ।

ख. चातुर्मास्यान्तर्गतगृहमेधीयेष्टिरपूर्वा । न तत्र प्रकृतितोऽङ्गानामतिदेशः । तत्समीपपिपठितैरेवाङ्गैस्तस्या आकांक्षाशान्तिरिति पूर्वमीमांसायां दशमसप्तमे निरूपितम् । तत्र च सामिधेन्यो नपठिताः । अतस्तत्र सामिधेन्यनुष्ठानाभावात् तदर्थानि प्रादेशधारणादीनि न तत्राऽनुष्ठेयानीति ।

1. O. Ms. reads समिदाधानार्था
2. B. Ms. reads स्पृशन्.

वक्ष्यन्नेता व्याहृतीरिति। केचित् अव्याहृतिकं व्याहृतीनामुत्तरत्रोपदेशात् ॥ २ ॥

"विष्णोःस्थाने तिष्ठामि" इत्यवतिष्ठते ॥ ३ ॥

अन्तर्वेदि दक्षिणः पादो भवति। बहिर्वेदि सव्यः ॥४॥

अवस्थानमुभयत्रापि ॥ ३, ४ ॥

अथोर्ध्वस्तिष्ठन् "ब्रह्मन् सामिधेनीरनुवक्ष्यामी"ति ब्रह्माणमामन्त्र्य दशहोतारं व्याख्याय व्याहृतीश्च जपित्वा त्रिर्हिङ्कृत्योत्तमेन हिङ्कारेणार्धर्चमुपसन्दधाति ॥ ५ ॥

अध्वर्युणा प्रेषितो ब्रह्माणमामन्त्रयते। हिङ्कृत्यतिवचनाद्धिङ्कार एव कर्तव्यो न तु हुङ्कारः। स च तेन समानार्थः। तेन समानग्रहणात् हिङ्कारायुचैः, तेन [1]सम्बन्धात्। वाक्यश आख्यानं, दशहोतुः। हिङ्कारेणार्धर्चमुपसन्धाय ऋगन्तेन प्रणवेन विरामः ॥ ५ ॥

त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ॥ ६ ॥

हिङ्कारवर्जमेव द्विस्त्रिरुत्तमाम् ॥ ६ ॥

यं कामयेत सर्वमायुरियादिति तस्य त्रिरनवानं प्रथमोत्तमे अनुब्रूयात् ॥ ७ ॥

उत्तमाया अप्येवमायुष्कामस्य। "हव्यदातय" इत्युच्छ्वासः। अर्धर्चविरामस्तु प्रणवेनैव।

एकैकामेव सन्तन्वन्ननवानमनुब्रूयादित्येके ॥ ८ ॥

एकैकसन्तान एव, नार्धर्चविरामः। प्रणवेनावसानं सर्वत्र कामे। तृतीयायाः अर्धर्चसन्तानो भवति, द्वितीय आयुष्कामस्य पक्षः। स एव नित्य इति केचित् ॥ ८ ॥

तृतीयां सामिधेनीं त्रिर्विगृह्णाति ॥ ९ ॥

1. O. Ms. reads वाक्यशः

तृतीयायां "तं त्वा समिद्भिरङ्गिर" इति पादे विरम्यार्धर्चे एवोच्छ्वसेत्। अपरमर्धर्चं सप्रणवमुक्त्वोत्तरस्यार्धर्चे विरमेत्। एवं त्रेधा विच्छेदो विग्रहः ॥ ९ ॥

सन्ततमन्वा हेति सामिधेनीनामविशेषात्।

विज्ञायते च—ऋषेर्ऋषेर्वा एता निर्मिता यत्सामिधेन्यः। ता यदसंयुक्ताः स्युः प्रजया पशुभिर्यजमानस्य वितिष्ठेरन्। अर्धर्चौ सन्दधाति संयुनक्त्येवैना इति ॥

ते मन्यामहे पूर्वस्याश्चोत्तरमुत्तरस्याश्च पूर्वं तौ सन्दध्यात् ॥ ११ ॥

सन्ततवचनं सर्वत्र सामिधेनीनां न प्रथमोत्तमवादः। "एता निर्मिता" इति बहुवचनादर्धर्चसन्तानश्रुतेश्च ॥ १०,११ ॥

सन्ततमन्वाहेति सामिधेनीनामनुच्छ्वासवादः।

विज्ञायते च—नान्तर्चौ व्यन्यात्। यद्यन्तरर्चौ व्यन्यादपाने प्राणं दध्यात् ॥ १२ ॥

अतिहाय पूर्वस्या अर्धर्चमुत्तरस्या अर्धर्चे व्यनिति ॥ १३ ॥

सन्ततवचनमनुच्छ्वासवादः। परित्यज्य पूर्वस्या अर्धर्चं उत्तरस्या अर्धर्चे उच्छ्वासवादश्रुतेः ॥ १२,१३ ॥

त्रिरनुवचने नार्धर्चसन्तानो विद्यत एकार्षेयत्वात् ॥

एकस्य यस्मादृषेः प्रथमोत्तमे अतो नार्धर्चसन्तानः। अर्धर्चे प्रणवेनावसाय। तृतीयेऽनुवचनेऽर्धर्चसन्तानो [1]नानार्षेयत्वात् आजुहोतेति ॥ १४ ॥

1. B. Ms. reads नार्षत्वात.

'त्वं वरुण' इति वसिष्ठराजन्यानां परिधानीया। 'आजुहोते'तीतरेषां गोत्राणाम् ॥ १५॥

अन्त्या इति सिद्धे परिधानीयेति [1]पुनर्वचनादागन्तूनां पुरस्तादस्या निवेशः। वासिष्ठाः शाण्डिल्येभ्य ऊर्ध्वम्, पूर्वमगस्तिनः, आर्षेयवरप्रतिषेधेन हेतुरार्षेयप्रतिषेध इति केचित् ॥ १५ ॥

नराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम्। तनूनपादितरेषां गोत्राणाम् ॥ १६ ॥

वेदान्तरोपदेशात् "नराशंसो अग्न आज्यस्य वेतु" इति। [2]वसिष्ठानां शुनकानाञ्च द्वितीयः प्रयाजः ॥ १६ ॥

सामिधेनीरनूच्य प्रवरमुक्त्वा निविदोऽन्वाह ॥ १७॥

तासां सप्तपदान्युक्त्वाऽपानिति ॥ १८ ॥

इति आपस्तम्बश्रौते चतुर्विंशप्रश्ने एकादशी कण्डिका ॥

अथ चत्वार्यथ चत्वारि ॥ १ ॥

ता अनूच्य देवता आवाहयति या यक्ष्यमाणो भवति ॥ २ ॥

स वै खलु वाजिनो नाऽऽवाहयेद्देविका देवसुवो यच्च किञ्चैतादृक्के मन्यामहे ॥ ३ ॥

परप्रधानानां परतन्त्रव्यवेतानाञ्च प्रतिषेधः स्यात्तल्लिङ्गत्वाच्छब्दस्य ॥ ४ ॥

प्रवरनिविद आवाहनार्था आवाहनीयसंस्कार आवाहनमित्यर्थः। तस्मादनिष्टानां लुप्यते। देवेद्ध इति लिङ्गादाहवनीय एव आवाहन-

1. Ibid, पुनर्विधानात्.
2. Ibid, वसिष्ठशुनकानाञ्च.

कर्ता। तस्मादप्सु तद्विकारत्वादूहः। 'आवह देवान् यजमानाय' इति निवित्समाप्तिः। आज्यपाः प्रयाजानूयाजदेवताः। 'अग्निं होत्रायेति' स्विष्टकृतः। 'स्वं महिमानमावहे'ति चैके स्विष्टकृद्देवताम्। गार्हपत्यो हव्यवाट्सावाहवनीय आवाहयिता। केचिदाहवनीय एवोभयकर्तेति। एतादृकछन्दस्य ने अर्थं मन्यामहे वयम्। अन्वाहेति परप्रधानो नि-ष्कासेन वारुणः। परतन्त्रव्यवेताः सौत्रामणिपशुपुरोडाशाः। एवं विधानमेतादृक्छन्देन प्रतिषेधः, तल्लिङ्गत्वात्तत्सूचकत्वात्तदभिधायक-त्वादेतादृक्छन्दस्य ॥

एकदेवतानां नानादेवताव्यवेतानां तन्त्रमावाहनं विभवात् ॥ ५ ॥

एकदेवतानां हविषां [1]नानादेवताभिरमिश्राणां सकृदावाहनम्, यथाऽश्वप्रतिग्रहे वरुणस्य। विभवतिहि सकृदावाहनं होतुस्तन्त्रत्वात्। यत्र तु देवतान्तरेण व्यवायः, यथा भ्राजस्वतः [क]सूर्येण, तथा पुनरावाहनं लोकवत्। प्रातस्त्वया भोक्तव्यम्, भुक्तवत्सु च ब्राह्मणेषु पुनरिति ॥ ५ ॥

अथोर्ध्वज्ञुः प्रादेशेन भूमिमभिनिधाय जपति—"इद-महं त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेणाऽस्यै पृथिव्या अस्यै प्रतिष्ठाया अस्मादायतनाद्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तं हन्मि। यदद्य होतृवूर्ये जिह्मं चक्षुः परापतत्। अग्निष्टत्पुनराभरज्जातवेदा विचर्षणिः॥ वसूनां रातौ स्याम रुद्राणामूर्म्यायां स्वादित्या अदितयेऽनेहसः। चारुमद्य देवेभ्यो वाचमुद्यासं चारुं ब्रह्मभ्यश्चारुं मनुष्ये-भ्यश्चारुं नराशंसायाऽनुमतां पितृभिः॥ ये ते शतं वरुण ये

क. काम्येष्टिकाण्डे—यश्चक्षुःकामस्स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालं सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालम्, इति चक्षुष्कामेष्टिर्विहिता। तत्र प्रथमोत्तमहविषोः भ्राजस्वदग्निरूपैकदेवत्यत्वेऽपि मध्ये सौर्येण व्यवधानात् प्रथमोत्तमयोः पृथगेवाऽऽवाहनमिति।

1. B. Ms. reads अन्यदेवताभिः

सहस्रं यज्ञियाः पाशा वितताः पुरुत्रा। तेभ्यो न इन्द्रः सवितोत विष्णुर्विश्वे देवा मुञ्चन्तु मरुतः स्वस्त्या" इति ॥ ६ ॥

प्रादेशेन भूम्याः पीडनम् । वेद्या एवेति केचित् । भूमिमभिनिधाय जपो होतृसंस्कारः सर्वार्थः ।

अथ यदेनमाह 'असौ मानुष' इति तदुपोत्थाय दक्षिणेन पाणिना दक्षिणमध्वर्योरंसमन्वारभ्य जपति । सव्येनाऽऽग्नीध्रस्य दक्षिणम् ॥ " षष्टिश्चाध्वर्यो नवतिश्च पाशा होतारमग्निमन्तरा विचृत्ताः । सिनन्ति पाकमति धीर एत्यृतस्य पन्थामन्वेति होता ॥ अग्निमन्वारभामहे होतृवूर्ये पुरोहितम् । येनाऽयन्नुत्तमं स्वर्देवा अङ्गिरसो दिवम्" इति ॥ ७ ॥

'षष्टिश्चाध्वर्यो' इति प्रवरनिमित्तमात्मसंस्कारः ॥ ६ ॥

"मयि प्राणापानौ" इति पाणी प्रत्याहृत्योरोदेशं स्पृशते ॥ ८ ॥

मयि प्राणापानावित्युरोदेशस्पर्शनार्थः । प्रत्याहरणं तूष्णीं हस्तद्वयेनाऽभिमर्शनम् । उपदेशः—पाणी प्रत्याहृत्य स्पृशतीति ॥ ७, ८ ॥

आपृणोषि सम्पृण प्रजया मा पशुभिरापृणेतीध्मसंनहनानि मुखं प्रति विधूनुते ॥ ९ ॥

यथा मुखं संस्पृशतामिति, नोष्ठम् तथा कम्पनमिध्मसंनहनानाम् ॥ ९ ॥

अथाऽप उपस्पृश्य "अग्ने नय सुपथा राये अस्मान्। एह्यग्न इह होता निषीदाऽदब्धः सु पुर एता भवानः।

अवतां मा रोदसी विश्वमिन्वे यजामहे सौमनसाय देवान्” इत्येते ऋचौ जपन् होतृषदनाय प्रव्रजति ॥ १० ॥

जघनेन होतृषदनं प्राङ्मुख उपविश्याऽथ होतृषदनमभिमृशति “अहे दैधिषव्ये”ति ॥ ११ ॥

अथाऽस्मात्तृणं निरस्यति ॥ १२ ॥

इति द्वादशी कण्डिका ॥

अथाप उपस्पृश्येत्यधिकं ब्राह्मणाभिमर्शने प्रथमं होतृषदनार्थं व्रजति जघनेन होतृषदनमस्य पश्चात् ॥ १२ ॥

शुष्कं प्रच्छिन्नाग्रं वा “निरस्तः पराग्वसुः सह पाप्मनेति ॥ १ ॥

अथ होतृषदन उपविशति “पातं मा द्यावापृथिवी उपस्थ” इति दक्षिणपूर्विणं सव्योत्तरिणं वोपस्थं कृत्वा ॥ २ ॥

उपस्थ [illegible]ः । दक्षिणः पादः पूर्वो यस्योपस्थस्य स दक्षिणपूर्वी: [illegible] भवति । सव्यस्य पादस्य दक्षिणः । सव्य उत्तरो यस्य सव्योत्तरी । [illegible] दक्षिणस्य ॥ [illegible] ॥

अथ जपति—सीद होतर्निहोता होतृषदन इति द्वे । “पिप्रीहि देवाँ उशतो यविष्ठ” इत्येषा ॥ वेषि होत्रमुत पोत्रं जनानां मन्धातासि द्रविणोदा ऋतावा। स्वाहा वयं कृणवामा हवींषि देवो देवान् यजत्वग्निरर्हन् ॥ आ देवानाम् । त्वमग्ने व्रतपा असि । यद्वो वयं प्रमिनाम । यत्पाकत्रा मनसा । विश्वेषां ह्यध्वराणामनीकं चित्रं केतुं जनिता त्वा जजान। स आ यजस्व नृवतीरनु क्षाः स्पार्हा

इषः क्षुमतीर्विश्वजन्याः॥ यं त्वा द्यावापृथिवी यं त्वापस्त्वष्टा यं त्वा सुजनिमा जजान । पन्थामनु प्रविद्वान् पितृयाणं द्युमदग्ने समिधानो विभाहि इत्येतस्य सूक्तस्य षट्, सर्वं वा । विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य। प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि । यमिच्छामि मनसा सोऽयमागाद्यज्ञस्य विद्वान् परुषश्चिकित्वान्। स नो यक्षद्देवताता यजीयान्हि षत्सदन्तरः पूर्वो अस्मन्निषद्य । तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम। ऊर्जाद उत यज्ञियासः पञ्च जना मम होत्रं जुषध्वम्॥ नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः । यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवा इति॥ ३॥

अथशब्दोऽर्थकृत्यस्य प्रतिषेधार्थः ॥

एतज्जपित्वा स्रुचावादापयाति ॥ ४॥

अग्निर्होतेति स्रुगादापनं प्रयाजाङ्गम् । अतः स्वाहाकृत्यर्थं पुनर्न देवतोपलक्षणमस्माकम् ॥ ४ ॥

सर्वत्र पुरस्ताद्याज्याया येयजामहमुक्त्वा व्याहृतीर्दधाति॥ ५॥

नानूयाजेषु येयजामहं करोति ॥ ६॥

अन्यत्र स्विष्टकृतः, अपरिपाठात् यदि क्रियेत [1]येयजामह इत्युक्त्वा देवतोपलक्षणं ततो व्याहृतयः भरद्वाजमतात् । तथानूयाजेषु व्याहृतयः। उपदेशो येयजामहानन्तरं व्याहृतयो नानूयाजेष्विति ॥

1. B. Ms. reads येयजामहमुक्त्वा.

अनवानमनूयाजान् यजति । अमत्सतेति वापानिति ॥ ७ ॥

अनवानमनुच्छ्वसन् अपानिति उच्छ्वसिति ॥ ७ ॥

पुरस्ताल्लक्ष्मा पुरोनुवाक्या । उपरिष्टाल्लक्ष्मा याज्या । एतद्वा विपरीतम् ॥ ८ ॥

उभयतोलक्ष्मा पुरोनुवाक्या तथा याज्येत्येके ॥ ९ ॥

तिष्ठन् पुरोनुवाक्यामन्वाह । आसीनो याज्याम् । उभे तिष्ठन्नासीनो वा ॥ १० ॥

याज्यानुवाक्यानामनूहः, तद्देवत्यानामागमः । पूर्वस्मिन्नर्धर्चे यस्या देवता सा पुरस्ताल्लक्ष्मा । उत्तरस्मिन्नर्धर्चे यस्या देवता सा उपरिष्टाल्लक्ष्मा । लक्ष्मवचनाल्लिङ्गेन विनियोगः याज्यानुवाक्यानाम् ॥ ८-१० ॥

सा ह त्वै समृद्धा पुरोनुवाक्या यामभिव्याहरन् देवतामेवाग्रेऽभिव्याहरति । सा ह त्वै समृद्धा याज्या यस्यै देवताया अधि वषट्करोति ॥ ११ ॥

देवतामुक्त्वा यस्यां वषट्कारः न प्रयाजेषु देवतोपलक्षणं प्रथमवर्जेषु । पाठक्रमेण याज्यानुवाक्याः । "वि न इन्द्र मृधो जहि" "मृगो न भीम" इति वैमृधस्य, "विष्णोर्नुकं" "तदस्य प्रियं" इत्युपांशुयाजस्य वैष्णवस्य । ते एवाग्नीषोमीयस्य । वैकल्पिकानामपि देवतानामूहो याज्यानुवाक्यावर्जम् ॥ ११ ॥

ऋचि प्रणवं दधाति याज्यावर्जम् ॥ १२ ॥

ऋचि प्रणवं सामिधेनीपुरोनुवाक्यानुवचनानुशंसनेषु न जपेषु; बहृचवचनात् ॥ १२ ॥

ओमित्यृचोऽधि प्रणौति ॥ १३ ॥

इति त्रयोदशी कण्डिका ॥

ऋचोऽधि प्रणौतीति द्वितीयाश्रुतिः प्रथमाया अर्थः ॥ १३ ॥

उत्तमस्याऽक्षरस्य विकारमेक आहुः ॥ १ ॥

उत्तमस्य स्वरस्य व्यञ्जनस्यापि विकारः प्रणवः, यथा-अग्ने दीयतं बृहोमिति । [1]यदा ऋचीत्यस्याक्षरस्थाने ऋचि प्रणवं दधातीत्युत्तमस्याक्षरस्य विकार उक्तः ॥ १ ॥

अधिकः स्यादित्यपरम् ॥ २ ॥

विज्ञायते च-ऋचमुक्त्वा प्रणौत्यपरामुक्त्वा प्रणौत्यधिके पुनरेतदुपपद्यते सन्ततमृचा वषट्करोतीति च तद्व्याज्याया अधि वषट्करोति ॥ ३ ॥

एकैराचार्यैः ऋचोऽधि प्रणौतीत्यनया श्रुत्याऽधिकं परिकल्पितम् । यदा त्वधिकं तदा अग्ने दीयतं बृहदोमिति अपां रेतांसि जिन्वत्योमिति । उपांश्विज्यास्वधिको नियमः धर्मभेदात् । ऋचमुक्त्वेत्यधिकमुपपद्यते । सन्ततमृचा वषट्करोतीत्यनुच्छ्वासवाद एषः । ऋचो वषट्कारस्य च मध्ये न श्वसिति ॥ ३ ॥

अपगूर्य वषट्करोतीत्युच्चैर्वादः शब्दस्य ॥ ४ ॥

उच्चैर्वादो वषट्कारस्य याज्यातः श्रुतिद्वयेनापि विधीयते यदा त्वधिकं तदा ॥ ४ ॥

यं कामयेत प्रामयुकस्स्यादिति तस्योच्चैरपगूर्य निखिदन्निव वषट्कुर्यात् । यं कामयेत पापीयान् स्यादिति नीचै-

1. B. Ms. reads यथा ऋचित्वन्तं तस्य स्थाने.

स्तरां तस्य याज्याया वषट्कुर्यात् । यं कामयेत वसीयान् स्यादित्युच्चैस्तरां तस्य याज्याया वषट्कुर्यात् । न वसीयान्न पापीयानिति समं तस्य याज्याया वषट्कुर्यात् ॥ उच्चैः क्रौञ्चमिव वषट्कुर्यात्स्वर्गकामस्येति विज्ञायते ॥ ५ ॥

बलीय ऋचो वषट्करोतीति तद्वत् ॥ ६ ॥

उच्चैर्याज्यामुक्त्वा निखिदन्निव वषट्करोति यजमानस्य मरणकामः । प्रतिषेधार्थान्येवंप्रकाराणीति न्यायः । पापीयान् दरिद्रः पापिष्ठो वा । अतिशयेन नीचैः नीचैस्तरां क्रौञ्चमतिक्रुष्टम् । बलीय ऋचो वषट्करोतीत्युच्चैर्वाद एव ॥ ६ ॥

यां देवतां यजेत्तां मनसा ध्यायेत्पुरा वषट्कारात्स्वर्गकामस्येति विज्ञायते ॥ ७ ॥

वषट्कृत्य प्राण्याऽपान्य निमिषेत् ॥ ८ ॥

अपानेनैव प्राणं धारयेन्निमिषेण चक्षुरिति विज्ञायते ॥ ९ ॥

यं द्विष्यात्तस्यौषडिति वषट्कुर्यात्। ओषत्येवेति विज्ञायते ॥ १० ॥

वाषाडित्येके समामनन्ति । वौषडित्येके । वौषाडित्येके । वाक्षडित्येके । वौक्षडित्येके । वौक्षाडित्येके ॥ ११ ॥

देवताध्यानं शब्देन । निरुक्तस्मृतेः । औषट्द्वेष्यस्येति प्रतिषेधार्थम् । सर्वस्याद्यस्य स्तुतिः । वषट्कारसमानार्थं । पित्र्यायां स्तुतिवचनाद्बृचानाम् ।

केचिद्वौषट्शब्दस्यैव न पर्यायशब्दस्येति 'स्वं रूपं शब्दस्य' इति परिभाषितत्वात्। त्रिमात्रा प्लुतिः यथा[1] वौषडिति वषट्कारस्यः। एवमन्यत्राप्याद्यस्य स्वरस्य। उपदेशः—होत्रायाजमानेषु न विकल्पः, समुच्चयः। संख्यायुक्तेषु तु विकल्प एव यथा षट् सर्वं वेति ॥ ११ ॥

वषट्कारमामेऽवाङ्क्षो, अहं त्वा बृहता मन उपह्वये। न मां न मे वाचं हिनसात्। हव्यं देवेभ्योऽभिवहाम्योजस्सहः सह ओजः। वाग्वषट्कार नमस्ते अस्तु मा मा हिंसीरित्येतद्वषट्कृते जपति। वषट्कार नमस्ते अस्तु मा मा हिंसीरिति वा ॥ १२ ॥

अङ्गुलीमक्तां 'इषे प्राणाये' ति मुखदेशमूर्ध्वमुत्क्रष्य'ऊर्जेऽपानाये'त्यवाचीनं नियच्छति ॥ १३ ॥

अक्तामुक्षितामुपस्पर्शनेनोत्कर्षणम्।

अत्रान्तरेडामवत्तामङ्गुलीभिर्निगृह्य न मुष्टिं करोति ॥१४॥

अवत्तां गृहीता मुष्टिं सहाङ्गुष्ठेन ॥ १४ ॥

मुखमिव प्रत्युपह्वयते ॥ १५ ॥

मुखतुल्यं धारयति ॥ १५ ॥

यं काम्येतापशुः स्यादिति पराचीं तस्येत्युक्तम् ॥

इडा पराची प्रतीची व्याख्यास्येते।

पदाभ्यासप्रतिषेधस्तु ॥ १७ ॥

1. B. Ms. reads यथा वौषट् वषट्कारस्य.

विज्ञायते चेडोपहूतेति तत्पराची। उपहूतेति तत्प्रतीची ॥ १८ ॥

पदाभ्यासश्च प्रतिषेधश्च पदाभ्यासप्रतिषेधः। स आभ्यां श्रुतिभ्यां क्रियते। पराचीमिति प्रतिषेधः समानस्य पदस्य। प्रतीचीमित्यभ्यासविधिरसमानस्य पदस्य। कथम्?। असन्दिग्धात् श्रुत्यन्तरादस्मादिडोपहूतोपहूतेडा इति। इडा पराच्यस्माकं परिपठिता। प्रतिषिद्धा विकृत्यर्था मा भूदनर्थकः पाठ इति। इडोपहूतोपहूतेडेति प्रकृत्यर्थविधानात्। अथवा पदाभ्यासस्य तुल्यस्य प्रतिषेधः। स पराच्यां क्रियते। अतः प्रतीच्योपहवः कर्तव्यतया श्रुत्यन्तरेण व्याख्यात उत्तरेण। अथवा अर्थः। अस्मदीया न प्रतिषिद्धा। अन्यैव सा यत्र तुल्यः पदाभ्यास इति सङ्कर्षे पक्षः ॥ १८ ॥

आध्वर्यव एवातोऽन्यानि कर्माणि होतुराम्नातानि भवन्ति। उपदेशादितराणीतराणि ॥ १९ ॥

आध्वर्यव उक्तं हौत्रम्, कात्स्न्यार्द्दर्शपूर्णमासयोः। उपदेशो बह्वृचाम्नायः। तस्मादागमयितव्यानीतराणि वैकृतानि। बह्वृचशेषत्वादस्मदीयस्य हौत्रस्य। यत्किञ्चिदाम्नायते विकृतौ तत्र स्वकीयं वा बह्वृचाम्नायो वा विकल्पः। यत्र तु पदाभ्यास इति न ह्यकृत्स्नं पठेत् सूत्रकारः। यत्र तु मन्त्राम्नाय एव तत्र नियत आगमः॥

इति धूर्तस्वामिभाष्ये

इष्टिहौत्रकल्पः ॥

श्रीः

# आपस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

## अग्न्याधेयनिरूपणाख्यः

## पञ्चमः प्रश्नः

अग्न्याधेयं व्याख्यास्यामः ॥ १ ॥

संशोध्याऽऽत्मानं तपोहोमजपैस्सभार्यो मैत्रं कृत्वा सर्वभूतैः, यस्मिन्नक्षत्रे पर्वणि वाऽग्निमाधातुकामः तस्य पुरस्तात्संवत्सरे द्वादशाहादौ वा सङ्कल्पं करोति—अग्नीनाधास्ये सर्वक्रत्वर्थं, यैरस्म्यधिकृतो यांश्च [1]शक्ष्ये प्रयोक्तुम् । वसन्ते कृत्तिकासु रोहिण्यामन्यस्मिन् वा पर्वणीति । ततोऽरण्योराहरणादि समिदाधानान्तम् । न विद्युदसि, अयज्ञत्वात् । इष्टिषु तु पुनर्दर्शपूर्णमासविकारत्वात् विद्युद्वृष्टिश्च । [क]उपदेशो विद्युदसि । सङ्कल्पः, अरण्योराहरणादि । [ख]पुनश्चेष्टिषु विद्युद्वृष्टी ॥ १ ॥

" यो अश्वत्थश्शमीगर्भ आरुरोह त्वे सचा । तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिस्सह" इति शमीगर्भस्याऽश्वत्थस्याऽरणी आहरति ॥ २ ॥

अप्यशमीगर्भस्येति वाजसनेयकम् ॥ ३ ॥

क. ' तदिदं सर्वयज्ञेषूपस्पर्शनं भवति ' इति सूत्रे सर्वयज्ञशब्दस्योपलक्षणत्वमङ्गीकृत्य होमादावपि तत्प्रवृत्तिस्वीकारात् आधानचतुर्होतृहोमजपादावपि ते कर्तव्ये एवेत्युपदेशमतम् ।

ख. अनन्तरं क्रियमाणास्विष्टिषु प्रयोगभेदात् विद्युद्वृष्टी भवत एवेति ।

1. B. Ms. reads शक्ष्यामि

आहरणमरण्योः [क]पूर्वच्छिन्नयोरपि [1]युगपदेकेन मन्त्रेणौपासनसमीपमध्वर्युणा [2]प्रातःकाले । उत्तरारणिरपि पर्याप्ता [ख]यावज्जीवस्याह्रियते । 'यो अश्वत्थ' इत्यवयवे कृत्स्नोपचारः । [ग]अभिमन्त्रणञ्च युगपत् । [घ]अशमीगर्भस्याप्यनिवृत्तिर्मन्त्रस्य हिरण्यकेशिमतात्, [ङ]पृथिवी शमीति ॥ २, ३ ॥

" अश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञिया ँ सम्भरामि । शान्तयोनि ँ शमीगर्भमग्नये प्रजनयितवे "आयुर्मयि धेह्यायुर्युजमाने" इत्यरणी अभिमन्त्र्य सप्त पार्थिवान् सम्भारानाहरति । एवं वानस्पत्यान् । पञ्च पञ्च वा ॥ ४ ॥

भूयसो वा पार्थिवान् ॥ ५ ॥

भूयसः [3]पार्थिवान् [च]अष्टौ, वानस्पत्यास्सप्तैव । असम्भारपक्षे अरणी अभिमन्त्र्य तूष्णीं निधानम्, [छ]लिङ्गविरोधात् ॥ ५ ॥

क. अपिशब्द एवकारार्थकः । पूर्वच्छिन्नयोः शुष्कयोरेवाऽरण्योराहरणं, तयोस्तदानीमेवाग्निजननसामर्थ्यादिति ।

ख. अन्त्येष्टौ मृतयजमानशरीरे " उरसि ध्रुवामरणी च " ( आप. प. सू. २० ) इति द्वयोरप्यरण्योश्चयनविधानात् तावत्पर्यन्तमुत्तरारणेरपि धार्यत्वावगमादिति ।

ग. मन्त्रे ' योऽश्वत्थ ' इत्येकवचनश्रवणेऽपि द्वयोरप्यरण्योस्तेन युगपदेवाभिमन्त्रणम् ।

घ. ' अप्यशमीगर्भस्येति वाजसनेयकम् ' इति वचनात् यदाशमीगर्भोऽश्वत्थ उपादीयते तदानीमपि ' योऽश्वत्थश्शमीगर्भः ' इति मन्त्रस्य प्रवृत्तिरस्त्येवेति । ' अपिवाश्वत्थादेवोद्धरेत् ' इति हिरण्यकेशी ।

ङ. " इयं वै ( पृथिवी ) शमी, तस्या एष गर्भो यदश्वत्थः " इति पृथिव्या एव शमीत्वेन संस्तवादिति ।

च. (१) सिकताः, (२) ऊषरमृत्, (३) मूषिकोत्खाता मृत्, (४) वल्मीकमृत्, (५) अशोष्यस्य जलाशयस्य मृत्, (६) वराहोत्खाता मृत्, (७) शर्कराः (क्षुद्रपाषाणाः) (८) सुवर्णञ्चेत्यष्टौ पार्थिवास्सम्भाराः वक्ष्यन्ते । अश्वत्थोदुम्बरपलाशशमीविकङ्कताशनिहतवृक्षाणां शकलानि पद्मपत्रञ्चेति सप्त वानस्पत्याः । पार्थिवसम्भाराणां सप्तत्व पक्षे शर्कराणां लोपः । Bodhayava adds पुष्करपर्ण instead of सुवर्ण.

छ. मन्त्रे "यं त्वा समभरञ्जातवेदः 'स सम्भृतस्साद शिवः प्रजाभ्यः" इति सम्भरणलिङ्गात् सम्भरणाभावे तद्विरोधादिति ।

1. B. Ms. reads युगपदेव मन्त्रेण
2. Ibid. प्रातकाले
3. B. Ms. reads अष्टौ पार्थिवाः

न सम्भारान् सम्भरेदिति वाजसनेयकम् ॥ ६ ॥

सम्भाराणां पूर्वगृहीतानामप्याहरणमौपासनसमीपे ॥

"वैश्वानरस्य रूपं पृथिव्यां परिस्रसा । स्योनमाविशन्तु नः" इति सिकताः ।

"यदिदं दिवो यददः पृथिव्यास्संजज्ञाने रोदसी सम्बभूवतुः । ऊषान् कृष्णमवतु कृष्णमूषा इहोभयोर्यज्ञियमागमिष्ठा" इत्यूषान् ।

ऊतीः कुर्वाणो यत्पृथिवीमचरो गुहाकारमाखुरूपं प्रतीत्य । तत्ते न्यक्तमिह सम्भरन्तश्शतं जीवेम शरदस्सवीरा" इत्याखुकरीषम् ।

"ऊर्जं पृथिव्या रसमाभन्तश्शतं जीवेम शरदः पुरीचीः । वम्रीभिरनुवित्तं गुहासु श्रोत्रन्त उर्व्य बधिरा भवाम" इति वल्मीकवपाम् ।

प्रजापतिसृष्टानां प्रजानां क्षुधोऽपहत्यै सुवितं नो अस्तु । उप प्रभिन्नामिषमूर्जं प्रजाभ्यस्सूदं गृहेभ्यो रसमाभरामि" इति सूदम् ।

यस्य रूपं बिभ्रदिमामविन्दद्गुहा प्रविष्टाँ सरिरस्य मध्ये । तस्येदं विहतमाभरन्तोऽछम्बट्कारमस्यां विधेम" इति वराहविहतम् ॥ ७ ॥

इति प्रथमा कण्डिका ॥

"याभिरदृꣳहज्जगतः प्रतिष्ठामुर्वीमिमां विश्वजनस्य भर्त्रीम्। ता नश्शिवाश्शर्करास्सन्तु सर्वा" इति शर्कराः। "अग्ने रेतश्चन्द्रꣳ हिरण्यमद्भ्यस्सम्भूतममृतं प्रजासु। तत्सम्भरन्नुत्तरतो निधायातिप्रयच्छन् दुरितिं तरेयम्" इति हिरण्यम् ॥ १ ॥

इति पार्थिवाः ॥ २ ॥

सिकता वालुकाः। ऊषरे भवा ऊषाः। आखुकरीषमाखूत्करः। चुछुन्दोत्करो वा। वल्मीकवपा वल्मीकमृत्तिका। सूदः जलस्थमृत्तिका। वराहेणोद्धृतो वराहविहतः। पञ्च सौवर्णानि शकलानि पञ्च राजतानि। त्रीणि त्रीणि वाऽग्नित्रित्वे, 'अतिप्रयच्छन्नि'ति लिङ्गात् ॥ १,२ ॥

यदि पञ्चौदुम्बराणि लोहशकलानि पञ्चमो भवति ॥

ताम्राणि [क]तूष्णीं हिरण्यस्थाने पञ्चमः ॥ ३ ॥

"अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठस्संवत्सरं देवेभ्यो निलाय। तत्ते न्यक्तमिह सम्भरन्तश्शतं जीवेम शरदस्सवीरा" इत्यश्वत्थम्।

"ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो विरोह। त्वया वयमिषमूर्जं मदन्तो रायस्पोषेण समिषा मदेम" इत्युदुम्बरम्।

"गायत्रिया ह्रियमाणस्य यत्ते पर्णमपतत्तृतीयस्यै दिवोऽधि। सोऽयं पर्णस्सोमपर्णाद्धि जातस्ततो हरामि

क. "अग्ने रेतश्चन्द्रꣳ हिरण्यम" इति हिरण्यशब्दश्रवणात्ताम्रे हिरण्यत्वाभावेन लिङ्गविरोधात्तूष्णीं सम्भरणमिति।

सोमपीथस्यावरुध्यै। देवानां ब्रह्मवादं वदतां यदुपाशृणो-स्सुश्रवा वै श्रुतोऽसि। ततो मामाविशतु ब्रह्मवर्चसं तत्सम्भरꣳस्तदवरुन्धीय साक्षादि"त्येताभ्यां पर्णम्।

"यया ते सृष्टस्याग्नेर्हेतिमशमयत् प्रजापतिः। तामिमामप्रदाहाय शमीꣳशान्त्यै हराम्यहम्" इति शमीम्।

"यत्ते सृष्टस्य यतो विकङ्कतं भा आर्च्छज्जातवेदः। तया भासा सम्मित उरुन्नो लोकमनुप्रभाहि" इति विकङ्कतम्।

"यत्ते तान्तस्य हृदयमाच्छिन्दज्जातवेदो मरुतोऽद्भिस्तमयित्वा। एतत्ते तदशनेस्सम्भरामि सात्मा अग्ने सहृदयो भवेह" इत्यशनिहतस्य[क] वृक्षस्य।

"यत्पर्यपश्यत्सरिरस्य मध्य उर्वीमपश्यज्जगतः प्रतिष्ठाम्। तत्पुष्करस्यायतनाद्धि जातं पर्णं पृथिव्याः प्रथनꣳहरामि" इति [ख]पुष्करपर्णम्। इति वानस्पत्याः ॥४॥

इति द्वितीया कण्डिका

[ग]एकं पुष्करपर्णम् ॥ ४ ॥

"यं त्वा सम्भरन् जातवेदो यथा शरीरं भूतेषु न्यक्तम्। स सम्भृतस्सीद शिवः प्रजाभ्य उरुन्नो लोकमनुनेषि विद्वान्" इति सम्भृत्य निदधाति ॥ १ ॥

क. यस्य वृक्षस्योपरि अशनिपातेन शुष्को वृक्षस्समजनि, सोऽशनिहतो वृक्षः। अशनिहताभावे वातहतं शीतहतं वेति बौधायनः।

ख. बौधायनः पुष्करपर्णमत्र परित्यजति तत् पार्थिवेषु योजयन्।

ग. ब्राह्मणे "तत्पुष्करपर्णेऽप्रथयत्" इत्येकस्मिन्नेव पुष्करपर्णे पृथिव्याः प्रथनश्रवणात् पर्णं पृथिव्याः प्रथनꣳहरामि इति पृथिवीप्रथनाधारभूतस्यैवात्रोपादानादिति।

तूष्णीमेकस्थानं कृत्वा "यं त्वा" इति निदधाति । नारण्योस्सम्भृत्य निधानम् । अतो लोपोऽसम्भारपक्षे । निधाय नान्दीश्राद्धम्, स्मृतेः । प्रदक्षिणमुपचारः । यवास्तिलार्थाः । [1]बदरीफलमिश्रं दध्योदनं प्रदाय नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य स्वधास्त्विति स्वधाकारः । युग्मानां सङ्कल्पः । नान्दीमुखाः पितरः प्रीयन्तामिति वाचनम् । नान्दीमुखेभ्यः पितृभ्यो नान्दीमुखेभ्यः पितामहेभ्यो नान्दीमुखेभ्यः प्रपितामहेभ्य इति पिण्डाः प्राञ्चो दध्योदनेन । नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः स्वधास्त्विति स्वधाकारः । केचित्स्वधाकारं न कुर्वन्ति । नित्यस्य श्राद्धस्यागामिनो विकार इति । [क]न विकार इत्युपदेशः । सर्वत्र विधिरयं श्रौतानां स्मार्तानां चादौ । [ख]न नित्यम्, आपस्तम्बेनानिबन्धनात् । [ग]अत्र भोजनं जायापत्योरित्युपदेशः ॥ १ ॥

**अथ नक्षत्राणि–कृत्तिकासु ब्राह्मण आदधीत मुख्यो ब्रह्मवर्चसी भवति ॥ २ ॥**

**गृहांस्त्वस्याऽग्निर्दाहुको भवति ॥ ३ ॥**

मुख्यः [2]स्वाचरणो भवति । ब्राह्मणः[3] ख्यातिश्च लभते ॥ २, ३ ॥

**रोहिण्यामाधाय सर्वान् रोहान् रोहति ॥ ४ ॥**

**मृगशीर्षे ब्रह्मवर्चसकामो यज्ञकामो वा ॥ ५ ॥**

रोहः [घ]पुत्रादिभिः ॥ ४, ५ ॥

**यः पुरा भद्रस्सन् पापीयान् स्यात्स पुनर्वस्वोः ॥**

क. मासिश्राद्धस्य सन्निध्यभावान्न तद्विकृतित्वम् । अतः स्वतन्त्रप्रकृतिविधिरेवायमिति ।

ख. नान्दीश्राद्धमिदं नाऽऽपस्तम्बीयानां नित्यम्, आपस्तम्बेनात्राऽविधानादिति । बौधायनेन विधानात्तु नियमेनापस्तम्बीया अप्यनुतिष्ठन्ति नान्दीश्राद्धम् ।

ग. 'कालयोर्भोजनम्' इति विहितस्य भोजनस्यानिषेधात्कालान्तराविधानाच्च ब्राह्मौदनिकाधानादि ब्राह्मौदनिकहोमपर्यन्तस्यैककर्मत्वात् तन्मध्ये भोजनस्यायुक्तत्वादत्रैव भोजनं युक्तमिति ।

घ. पुत्रादिभिः क्रियमाणं गजाद्यारोहणं स्वस्यैव गौरवावहमिति ।

1. O. Ms reads बदरमिश्रं दध्योदनम् ।
2. मुख्यः सुचारण इति 'घ' 'ङ'
3. ब्राह्मणख्याति इति 'घ'

[क]पापीयान् दरिद्रः पापिष्ठो वा। वसीयान् वसुमान् श्रेष्ठो वा ॥ ६ ॥

पूर्वयोः फल्गुन्योः "यः कामयेत दानकामा मे प्रजास्स्युः" इति ॥ ७ ॥

पूर्वयोराधाय पापीयान् [ख]भवत्यसति कामे। दानकामाः दातुमिच्छन्त्योऽस्य प्रजा भवन्ति ॥ ७ ॥

उत्तरयोर्यः कामयेत भग्यन्नादस्स्यामिति ॥ ८ ॥

एतदेवैके विपरीतम् ॥ ९ ॥

भगी सुभगः। अन्नादो भोक्तृशक्तिः ॥ ८, ९ ॥

अथापरं पूर्वयोराधाय पापीयान् भवत्युत्तरयोर्वसीयान् ॥ १० ॥

हस्ते यः कामयेत प्र मे दीयेतेति ॥ ११ ॥

प्रदीयेत मे इति ॥ १०, ११ ॥

चित्रायां राजन्यो भ्रातृव्यवान्वा ॥ १२ ॥

चित्राऽकाम्या राजन्यस्य।

विशाखयोः प्रजाकामोऽनूराधेष्वृद्धिकामः श्रवणे पुष्टिकाम उत्तरेषु प्रोष्ठपदेषु प्रतिष्ठाकामः ॥ १३ ॥

सर्वाण्येतानि नित्यान्येव कामविहितान्यपि।

सर्वाणि नित्यवदेके समामनन्ति ॥ १४ ॥

केचिदविहितान्यपि नित्यैस्तुल्यानि नित्यवत् ॥ १४ ॥

फल्गुनीपूर्णमास आदधीतेत्युक्त्वाऽऽह 'यत्फल्गुनी पूर्णमास आदध्यात् संवत्सरस्यैनमासन् दध्यात् व्यहे पुरैकाहे वा ॥ १५ ॥

क. पापीयान् दरिद्रः, वसीयान् वसुमान् इत्येव रुद्रदत्तः (See रुद्र. पृ. २३८. L. 2. A.S.B. ed)

ख. एतादृशकामनाभावे पूर्वफल्गुन्योराधानकरणे दरिद्रो भवतीति

आसन् आस्ये । त्र्यहे पूर्वं फल्गुनीपूर्णमासात् त्रयोदश्याम् । एकाहे चतुर्दश्याम् ॥ १५ ॥

अमावास्यायां पौर्णमास्यां वाऽऽधेयः ॥ १६ ॥

पर्वणोर्नक्षत्रस्य च विकल्पः, समुच्चयासम्भवात् । ऋतौ तु समुच्चयः ॥ १६ ॥

वसन्तो ब्राह्मणस्य, ग्रीष्मो राजन्यस्य हेमन्तो वा, शरद्वैश्यस्य, वर्षा रथकारस्य ॥ १७ ॥

[क]ये त्रयाणां वा वर्णानामेतत्कर्म कुर्युस्तेषामेष-कालः ॥ १८ ॥

शिशिरस्सार्ववर्णिकः ॥ १९ ॥

त्रयाणामन्तर्भूता ये कुर्वन्ति [1]रथकरणम् ॥ १९ ॥

सोमेन यक्ष्यमाणो नर्तुं सूर्क्षेन्न नक्षत्रम् ॥ २० ॥

सोमेन यक्ष्यमाणस्सर्वकर्मभ्यः पूर्वं न [2]कुर्यादादरम् । सोमस्यापि च य ऋतुः तस्यापि न सूर्क्षेदिति ॥ २० ॥

उदवसाय शालीन आदधीताऽनुदवसाय यायावरः ॥ २१ ॥

एकाहं वा प्रयायात् ॥ २२ ॥

इति तृतीया कण्डिका

क. इदं तु मीमांसकमतविरुद्धम्. See रथकाराधिकरण of पू. मी. ६-१-१३ also का. श्रौ. १-१-८ रथकारस्याधाने ।

1. रथकरणमिति नास्ति 'घ'
2. B. Ms omits आदरम्

उद्वसानं देशान्तरगमनं महौपासनेन । शालीन एकस्थाननिवासी तस्योद्वसानं नित्यम् । नित्यं याता [क]यायावरः[1] ॥

**"उद्धन्यमानमस्या अमेध्यमप पाप्मानं यजमानस्य हन्तु । शिवा नस्सन्तु प्रदिशश्चतस्रश्शन्नो माता पृथिवी तोकसाता" इति प्राचीनप्रवणं देवयजनमुद्धत्य "शन्नो देवीरभीष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः" इत्यद्भिरवोक्ष्य तस्मिन्नुदीचीनवंशं शरणं करोति ॥ १ ॥**

असम्भारपक्षेऽरण्योराहरणम् उद्वसायोद्धननमेव । उदीचीनवंश [ख]उदीचीनपृष्ठ्यः । स एव मध्यमः ॥ १ ॥

**तस्याऽग्रेण मध्यमं वंशं गार्हपत्यायतनं भवति ॥**

तस्य पुरस्तात् गार्हपत्यायतनम् ॥ २ ॥

**तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याऽऽहवनीयायतनम् । एकादशसु राजन्यस्य, द्वादशसु वैश्यस्य ॥ ३ ॥**

[ग]द्वादशसु विक्रामेषु सर्वार्थोऽस्माकम् ॥ ३ ॥

क. नित्यं गमनशीलः यात्वा यात्वा यत्र क्वचन वसति । न स्थिरतया क्वचिद्वसतीति रुद्रदत्तादयः । बौधायनसूत्र त्वन्यथा लक्षणमुक्तम्—शालाश्रयत्वाच्छालीनत्वम् । वृत्त्या वरया यातीति यायावरत्वम् (बौ. ध. ३-१-३) इति । विस्तीर्णाभिश्शालाभिर्युक्ताश्शालीनाः । वृत्त्या वरया उत्कृष्टया यापयत्यात्मानमिति (यायावरः) इति विवरणम् ( See P. 216 बौ. ध. chow. edn.)

ख. शालाया मध्यमो वंशः (यस्मिन् इतरे वंशाः प्रोता वर्तन्ते ) पृष्ठ्य इत्युच्यते । स उदीचीनाग्रः तद्गृहमुदीचीनवंशं शरणमिति ।

ग. "द्वादशसु विक्रामेष्वग्निमादधीत" ( तै. ब्रा. १-१-४-१ ) इति जातिविशेषमनुपादाय सामान्यत एव द्वादशविक्रमविधानात् अस्माकमापस्तम्बीयानां मते सर्वार्थ एवायं पक्ष इति । विक्रामः प्रक्रमः । प्रक्रमो द्विपदः, पदं पञ्चदशाङ्गुलमिति बौधायनः, द्वादशाङ्गुलमिति कात्यायनः । See कात्या. शु. ९-९, द्वादशाङ्गुलं पदमिति च इति ।

1. नित्यं यातीति यायावरः इति 'ङ'

चतुर्विंशत्यामपरिमिते यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते ॥ ४ ॥

यावन्मन्यते इयत्यष्टौ विक्रामा इति इयति द्वादशेति चक्षुर्मानं चतुर्विंशत्यादि च सर्वेषां वर्णानाम्, यस्मादविशेषेण श्रूयते पुरुषविशेषमनपेक्ष्य । अपरिमितमसंख्यातम् । अर्वाक् परतश्च प्राप्तम्, तस्मान्नातिदूरमाधेय इति । तस्माद्विहितादनतिदूरम्[1] । असत्यपि परिमाणेऽतिदूरप्रतिषेधादर्वागपि लभ्यते विहितात् । केचित्-परतोऽपि लभ्यते, तेषां लोकप्रसिद्धमतिदूरम् ॥ ४ ॥

दक्षिणतः पुरस्ताद्वितृतीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनम् ॥ ५ ॥

[क]ईषद्विगततृतीयदेशे गार्हपत्यस्य समीपे आहवनीयागारे [2]गार्हपत्यागारे वा दक्षिणाग्निः ॥ ५ ॥

अन्यदाहवनीयागारमन्यद्गार्हपत्यस्य ॥ ६ ॥

अग्रेणाऽऽहवनीयं सभायां सभ्यः ॥ ७ ॥

तं पूर्वेणाऽऽवसथ आवसथ्यः ॥ ८ ॥

[क]ब्राह्मणस्यापि चत्वार्यगाराणि ॥ ६-८ ॥

केशश्मश्रु वपते । नखानि निकृन्तते । स्नाति । एवं पत्नी केशवर्जम् ॥ ९ ॥

वपते वापयते ॥ ९ ॥

क. गार्हपत्याहवनीययोर्मध्यदेशे पाश्चात्यतृतीयभागस्यैकदेशं पुरतः परित्यज्य तत्र दक्षिणभागे दक्षिणाग्नेरायतनं कर्तव्यमिति ।

1. नातिदूरं 'घ' 'ङ'
2. गार्हपत्यागारे आहवनीयागारे वा 'घ' 'ङ'

**क्षौमे वसानौ जायापती अग्निमादधीयाताम् ॥**

**ते दक्षिणाकालेऽध्वर्यवे दत्तः ॥ ११ ॥**

क्षौमे आतसे, [1]अहते वाससी वसानावग्निमादधीयातां गार्हपत्या-दिकम् । न हि जायापती स्वयमग्निमादधीयाताम् । ब्राह्मौदनिकनिधा-नाद्यध्वर्युरेव [2]करोति । गार्हपत्यादिषु सर्वेष्वाधीयमानेषु कर्माधिकारे जायापती क्षौमे वसानौ सन्निहितौ भवतः । अथवाऽध्वर्युमन्वार-भेयाताम् ॥ १०, ११ ॥

**अपराह्णेऽधिवृक्षसूर्ये वौपासनादग्निमाहृत्याऽपरेणगा-र्हपत्यायतनं ब्राह्मौदनिकमादधाति ॥ १२ ॥**

**औपासनं वा सर्वम् ॥ १३ ॥**

[क]असर्वाधाने[3] औपासनस्य कर्मानिवृत्तिः । सर्वाधाने तद्वर्तिनां

क. अस्ति पक्षद्वयम्—असर्वाधानपक्षः सर्वाधानपक्ष इति । तत्र क्षौमपरिधानानन्तरमौपास-नाग्निं प्रज्वाल्य ततोऽर्धं गृहीत्वा गृहीतेऽर्धाग्नावेव ब्रह्मौदनपाकादिकं सर्वं कृत्वा तमग्निं संवत्सराद्युपर्युक्तकालपर्यन्तमवस्थाप्य 'तस्मिन्नुपव्युषमरणी निष्टपेत्' (आप. श्रौ. ५-८-५) इति विध्यनुसारेण तस्मिन्नग्नावरणी प्रतप्य तमग्निमुद्वाप्य पुनर्मथित्वा मथिता-ग्निना गार्हपत्याधानं कुर्यात् । अवशिष्टमर्धौपासनं गृह्योक्तकर्मानुष्ठानार्थं निदध्यात् । सोऽयमसर्वाधानपक्षः । सर्वमप्यौपासनाग्निं ब्रह्मौदनपाकार्थं गृहीत्वा तस्मिन् पाकादि निष्टपनान्तं कृत्वा तं सर्वमुद्वास्य ततो मथित्वा गार्हपत्यादेराधानम् । सोऽयं सर्वाधानपक्षः । अयं पक्षः कलौ निषिद्धः । यथोक्तम् लौगाक्षिणा—
'अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः ।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रया'॥ इति ।
एवञ्चार्धाधानपक्षे औपासनाग्नावेव गार्ह्यकर्मानुष्ठानम् । सर्वाधानपक्षे तु तेषां निवृत्तिरेव । अग्नेः प्रतिनिध्यभावस्य 'न देवताग्निशब्दक्रियमन्यार्थत्वात्' (जै. सू. ६-३-१८) इत्यत्रोक्तत्वादिति ।

1. अहते इति नास्ति 'घ' 'ङ'; B. Ms. omits अहते वाससी.
2. B. Ms. omits करोति
3. B. Ms. reads असर्वाधानपक्षे

निवृत्तिः । प्रतिनिध्यभावादग्नेः, [क]उत्सृष्टाग्निवत् । ब्रह्मौदनिके च कर्मानुप्रवेशात् तस्य च समारूढत्वात् । [1]श्राद्धे तु होमादुत्तरं कर्तव्यम् । ब्राह्मणस्त्वाहवनीयार्थ इति । तस्यापि प्रधानत्वात् । उपदेशोऽसर्वाधानेऽप्यौपासनस्य पार्वणस्य च [2]निवृत्तिः । अग्निहोत्रं दर्शपूर्णमासौ [3]पिण्डपितृयज्ञश्च तदर्थका इति[4] । ध्रियते त्वौपासनः । तस्मिन् सर्वाणि कर्माणि । सर्वाधानेऽपि लौकिके औपासनपार्वणवर्जानि ॥ १३ ॥

निर्मन्थ्यं वा ॥ १४ ॥

[ख]यस्य तु सर्व आहितः तस्य तु निर्मन्थ्य एव पुनराधेयः ॥ १४ ॥

यदि सर्वमौपासनमाहरेत् अपूपं यवमयं व्रीहिमयञ्चौदुम्बरपर्णाभ्यां सङ्गृह्याऽऽयतन उपास्येद्यवमयं पश्चात् व्रीहिमयं पुरस्तात्तस्मिन्नादध्यात् ॥ १५ ॥

सर्वमप्यौपासनमाहरन्नापूपावुपास्येदित्यपरम् ॥ १६ ॥

इति चतुर्थी कण्डिका

क. यथोत्सृष्टाग्नेरग्निहोत्रादिकं नास्ति तथा सर्वाधानिन औपासनहोमादिर्नास्तीति । ब्रह्मौदनिक एव च नित्यनैमित्तिकानि क्रियेरन् कर्माणि । श्राद्धे तु होमानन्तरभावीनि भोजनादीन्येव क्रियेरन् । श्रुतौ ब्राह्मणस्यैवाऽऽहवनीयस्थानापन्नत्वश्रवणात् । भोजनस्यापि साक्षात्पितृतृप्तिजनकत्वेन प्रधानत्वात् । उपदेशमतं तु—असर्वाधानेऽपि औपासनपार्वणश्राद्धस्थालीपाकानां निवृत्तिः । तत्स्थानेऽग्निहोत्रदर्शपूर्णमासपिण्डपितृयज्ञाः कर्तव्याः । औपासनाग्निस्तु धार्य एव । तस्मिन्नेव नित्यनैमित्तिकानि सर्वगार्ह्यकर्माणि । सर्वाधानपक्षेऽपि औपासनपार्वणवर्जं, इतरेषां पाकयज्ञानां लौकिकाग्नावेवानुष्ठानम्, तेषामवश्यकर्तव्यताश्रवणादिति ।

ख. सर्वाधानपक्षे पुनरौपासनशेषाभावात् मथिताग्नावेव ब्रह्मौदनपाकादिकं पुनराधाने कुर्यादिति ।

1. श्राद्धन्तु 'ङ'
2. B. Ms. reads अनिवृत्तिः
3. Ibid पिण्डपितृयज्ञः
4. तदर्था इति 'घ' 'ङ'

अपूपः पूपलिका[1] । [क]औदुम्बराणि च तानि पर्णानि । ताभ्यां ग्रहणम् । उपास्यनं क्षेपः, आधानं स्थापनम्[ख] । तत्कृत्वा जायापत्यो[2]र्भोजनं वाजसनेयिमतात् ॥ १५ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

पञ्चमप्रश्ने प्रथमः पटलः ॥

## द्वितीयः पटलः

**अपरेण ब्राह्मौदनिकं लौहिते चर्मण्यानडुहे प्राचीनग्रीव उत्तरलोम्नि पाजके वा निशायां ब्रह्मौदनं चतुश्शरावं निर्वपति ॥ १ ॥**

शकटवाहिनश्चर्म । पाजकः [ग]पटलकः । ब्राह्मणेभ्य ओदनः ब्रह्मौदनः । ब्रह्मभ्यो वा प्राणभ्य ओदनं ब्रह्मौदनम् । "ब्रह्मणे प्राणाय जुष्टम्" इति लिङ्गात् । कर्मनाम [घ]ब्रह्मौदनशब्दः । अतो यत्र परिसंख्या नास्ति तत्र

क. एकैकस्यापूपस्य द्वे द्वे पर्णे आहत्य चत्वारि पर्णानि । अत एवाभिप्रायेण भाष्ये बहुवचनम् ।

ख. औपासनस्येति शेषः ।

ग. विदलनिर्मितं महानसोपकरणमिति रुद्रदत्तः । मानिकरशरावः ( मडक्कु ) इति आण्डपिल्लै ।

घ. ब्रह्मौदनशब्दोऽग्निहोत्रादिशब्दवत् कर्मनामधेयम् । तेनान्यत्रापि यत्रैतच्छब्दश्रवणम्, तत्र नामातिदेशविधया धर्माणामतिदेशो निषेधाभावे । यथा अश्वमेधे-" द्वादश ब्रह्मौदनान् संस्थिते निर्वपेत् " (आप. श्री. २०-२३-८) इति विहिते ब्रह्मौदननिर्वापेऽत्रोक्ता धर्मास्सर्वेऽप्यतिदिश्यन्ते । एवमत्रैवाधानप्रकरणे उपरिष्टाद्वक्ष्यमाणे 'श्व आधास्यमानः पुनर्ब्रह्मौदनं पचति ' ( आप. श्री. ५-७-१५ ) इत्यत्रापि धर्माणामतिदेशः । ' अथादधाति ' ( आप. श्री. ५-६-२ ) इति विहितं समिदाधानं तु न भवति, तस्याधानाङ्गत्वात्, ' आधेयास्त्वेवाऽग्निमादधानेन ' इति सूत्रकारवचनेन तथैवावगमात् । अतश्च ' अथ ब्रह्मौदनशेषं सङ्क्ष्य ' ( आप. श्री. ५-५-१० ) इत्यादि वत्सतरीदानान्तं ( ५-७-१ ) निवर्तते, अन्यत्सर्वं भवतीति ।

1. अपूपः वर्तुलिका ' घ '.
2. यजमानपत्न्योः ' ग ' ' ङ ' ' ब '.

सर्वो विधिस्समिद्वर्जम् । यथा—“द्वादशब्रह्मौदनान् सꣳस्थिते निर्वपेत्” इति । “श्व आधास्यमान” इति च ।

[ केचिदाहुः—न कर्मनामधेयम्, गुणोऽत्र विधीयते—ब्राह्मणेभ्योऽयमोदन इति । तस्य दाने प्राप्ते भोजननियमः । तदा यावदुक्ता ब्रह्मौदनाः । ये त्विह ते धर्मवन्तः, प्रकरणैकत्वात् । शरावो मल्लकः । तेन निर्वपति क्षिपति व्रीहीन् यवान्वा ॥ १ ॥

देवस्य त्वेत्यनुद्रुत्य “ब्रह्मणे प्राणाय जुष्टं निर्वपामि” इति प्रथम‘मपानाये’ति द्वितीयं ‘व्यानाये’ति तृतीयं ‘ब्रह्मणे जुष्ट’मिति चतुर्थम् ॥ २ ॥

तूष्णीं वा सर्वाणि ॥ ३ ॥

चतुर्षूदपात्रेषु पचति ॥ ४ ॥

न प्रक्षालयति न प्रस्रावयति ॥ ५ ॥

न प्रस्रावयति न गालयति ॥ २-५ ॥

क्षीरे भवतीत्येके ॥ ६ ॥

[क]जीवतण्डुलमिव श्रपयतीति विज्ञायते ॥ ७ ॥

दर्व्या ब्रह्मौदनादुध्दृत्य “प्रवेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्त्वव देवान् यजेहेड्यान्” इति जुहोत्यभि वा मन्त्रयते यजमानः ॥ ८ ॥

क. ईषदनवक्लिन्नतण्डुलं जीवतण्डुलम् । जीवन्ति स्वस्वरुपं न परित्यजन्ति तण्डुला यस्मिन् कर्मणि तज्जीवतण्डुलम् । ( See मै. सं. १-६-१२ ).

उद्वास्य दर्व्या ब्रह्मौदनादुद्धृत्वा जुहोति। [क]अभिमन्त्रणं स्थालीगतस्य ॥ ८ ॥

**चतुर्धा ब्रह्मौदनं व्युद्धृत्य प्रभूतेन सर्पिषोपसिच्य कर्षन्ननुच्छिन्दन् चतुर्भ्य आर्षेयेभ्य ऋत्विग्भ्य उपोहति ॥९॥**

[ख]चतुर्धाव्युद्धरणादि याजमानम्। कर्षन् सारयन् प्रक्षिपति। अनुच्छिन्दन् अविमुञ्चन् यावदृत्विजा गृहीतम्। ये स्वानृषीन् विदुः ते आर्षेयाः। नाऽऽचार्यप्रवराः, श्रुतवन्तो वा, "एष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवान्[1]" इति लिङ्गात्। उपोहति प्रयच्छति—अध्वर्योर्होतुर्ब्रह्मण आग्नीध्रस्य च, तेषां कर्मदर्शनात्। केचिदुद्गातुश्चात्र प्राश्यम् [ग]तेषान्तूद्गातुरुक्त[2] इति ॥ ९ ॥

**अपात्ताः प्रथमे पिण्डा भवन्त्यप्रतिहताः पाणयः अथ ब्रह्मौदनशेषं सङ्कृष्य तस्मिन्नाज्यशेषमानीय तस्मिंश्चित्रियस्याश्वत्थस्य तिस्रस्समिध आर्द्रास्सपलाशाः प्रादेशमात्र्यस्तिभिगवत्यो विवर्तयाति ॥ १० ॥**

इति पञ्चमी कण्डिका

गृहीता आद्याः पिण्डा आक्षिप्ताश्च मुखे हस्ताः अपात्तपिण्डोऽध्वर्युस्सङ्कर्षणादि करोति। [1]उपसेचनमाज्यशेषस्य तस्य सङ्कर्षणमेकीकरणम्, चित्रियं येन ग्रामस्य तीर्थस्य वा नामधेयम्। यथा—अश्वत्थ-

क. नोपस्तरणाभिघारणे भवत इति रामाण्डारः। अभिमन्त्रणपक्षे नोद्धरणम्, उद्धरणस्य होमार्थत्वादिति।

ख. व्युद्धरणं पृथक्पात्रेषु निक्षेपः।

ग. छन्दोगसूत्रे महर्त्विजां चतुर्णां प्राशनमित्युक्तत्वात्, उद्गातुरेव महर्त्विक्त्वादिति

1. B 2 omits प्रक्षिपति
2. यः शुश्रुवानिति नास्ति 'घ'
3. तेषां होतुरुक्त इति 'क' 'घ'
4. B. Ms. reads उपसेचनमाज्यस्य। सङ्कर्षणमेकीकरणम्। चित्रियः

ग्राम इति । केचित्—[क]स्थण्डिलवन्नम् । सपलाशास्सपत्राः । स्तिभिगवत्यः फलवत्यः । विवर्तयन्ति आलोडयन्ति ॥ १० ॥

"चित्रियादश्वत्थात्सम्भृता बृहत्यश्शरीरमभिसꣳस्कृतास्थ । प्रजापतिना यज्ञमुखेन सम्मितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्राजात्या" इति ॥ १ ॥

अथाऽऽदधाति घृतवतीभिराग्नेयीभिर्गायत्रीभिर्ब्राह्मणस्य त्रिष्टुग्भी राजन्यस्य जगतीभिर्वैश्यस्य ॥ २ ॥

अथाध्वर्युरादधाति गायत्रीभिर्ब्राह्मणस्यादध्यादिति । अथशब्दोऽर्थकृत्यप्रतिषेधार्थः ॥ १,२. ॥

[1]सीमधाग्निं दुवस्यतेत्येषा । "उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम ॥ त त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य" इति ब्राह्मणस्य ।

"समिध्यमानः प्रथमो नु धर्मस्समक्तुभिरज्यते विश्ववारः । शोचिष्केशो घृतनिर्णिक् पावकस्सुयज्ञो अग्निर्यजथाय देवान् ॥ घृतप्रतीको घृतयोनिरग्निर्घृतैस्समिद्धो घृतमस्यान्नम् । घृतप्रुषस्त्वा सरितो वहन्ति घृतं पिबन्त्सुयजा यक्षि देवान् ॥ [2]आयुर्दा अग्न" इति राजन्यस्य ।

क. यस्य वृक्षस्य दार्ढ्यार्थमधः स्थण्डिलं निर्मितं स चित्रियः ।

१. समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतन ॥ तै. सं.

२. आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि ।
घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रमभिरक्षतादिमम् ॥ तै. सं.

त्वामग्ने समिधानं यविष्ठ देवा दूतं चक्रिरे हव्यवाहम्। उरुज्रयसं घृतयोनिमाहुतं त्वेषं चक्षुर्दधिरे चोदयन्वति ॥ त्वामग्ने प्रदिव आहुतं घृतेन सुम्नायवस्सुषमिधा समीधिरे। स वावृधान ओषधीभिरुक्षित उरु ज्रयाꣳसि पार्थिवा वितिष्ठसे। घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋञ्जते। इन्धानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदुनो यꣳसते धियम्" इति वैश्यस्य ॥ ३ ॥

इति षष्ठी कण्डिका ॥

समित्सु तिस्रो वत्सतरीर्ददाति ॥ १ ॥

वत्सतर्यो वत्सभावं व्यतिक्रान्ताः स्तन्यपानोपरताः[1]। अध्वर्योस्ताः समिधः ॥ १ ॥

प्राश्नन्ति ब्राह्मणा ओदनम् ॥ २ ॥

प्राशितवद्भ्यस्समानं वरं ददाति ॥ ३ ॥

प्रथम एव समानो वरः। सर्वत्रोपदेशः प्रथम एव समानो वरः। न चात्राऽऽदाने प्रतिग्रहमन्त्रः। आदधातिचोदितत्वात् यज्ञतन्त्रे साङ्गे प्रतिग्रहमन्त्राः "देवा वै वरुणमयाजयन्" इतियाजननिमित्ताविशेषात्[2] ॥ ३ ॥

यस्मिन्नक्षत्रेऽग्निमाधास्यन् स्यात् तस्मिन् संवत्सरे पुरस्तादेतास्समिध आदध्यात् द्वादशाहे त्र्यहे त्र्यह एकाहे वा ॥ ४ ॥

1. स्तनपानोपरताः 'घ' 'ङ'; B. Ms. reads only पानोपरताः
2. B. Ms. reads यजननिमित्ताविशेषात्

यस्मिन्नक्षत्रे पर्वणि वाऽग्निमादधाति तस्मिन्नरण्योराहरणादिवरदानान्तं ब्रह्मौदनं कृत्वा समिध आदधाति। एकीकरणादिवरदानान्तम्, ब्रह्मौदनाङ्गत्वात् ॥ ४ ॥

आधेयास्त्वेवाग्निमादधानेन ॥ ५ ॥

समिधश्शोषनाशे विस्मृताश्चाऽऽधेयाः। उपदेशः-अनुगमनप्रयाणानुपगमनादिषु पुनस्समिदाधानादिविधानादेवानङ्गत्वे सद्यस्कालार्थं वचनमिति,। केचित्त्वाहुः-प्रायश्चित्ताधानमापदि [1]सद्यस्कालीनमपि लभ्यते। आधेयास्त्वेवाऽग्निमादधानेनेति। एकाहे चतुर्दश्याम्। यदा तु प्रतिपदि पूर्वाह्णे पर्वकालः तदाऽमावास्यायामाधानमिति ॥ ५ ॥

अथ व्रतं चरति—न मांसमश्नाति, न स्त्रियमुपैति नास्याग्निं गृहाद्धरन्ति नाऽन्यत आहरन्ति ॥ ६ ॥

ब्राह्मौदनिकेन संवत्सरमासीत ॥ ७ ॥

औपासनश्चेदाहित एतस्मिन्नस्याऽग्निकर्माणि क्रियन्ते॥

न प्रयायात् ॥ ९ ॥

[3]असंवत्सरपक्षे च व्रतानि ॥ ६–९ ॥

नानुगच्छेत् ॥ १० ॥

नानुगच्छेद्ब्राह्मौदनिक इति योनित उत्पादनम् ॥ १० ॥

यदि प्रयायादनु वा गच्छेत् ब्रह्मौदनं पक्त्वैतयैवावृता समिध आदध्यात् ॥ ११ ॥

1. B. Ms. & Ad. read सद्यस्कालमपि.
2. B. Ms. omits आधानमिति.
3. B. Ms. reads संवत्सरपक्षे.

आवृत् क्रिया ॥ ११ ॥

**यद्येनं संवत्सरेऽग्न्याधेयं नोपनमेत् ब्रह्मौदनं पक्त्वा समिध आधाय यदैनमुपनमेद्थाऽऽदधीत ॥ १२ ॥**

यदैनमुपनमेदिति न नक्षत्रिकालः । अनुपनमे सर्वत्र संवत्सरः प्रदर्शनार्थः ॥ १२ ॥

**तस्य याथाकामी भरणकल्पानाम् ॥ १३ ॥**

भरणकल्पाः व्रतानि च । तानि करोति वा न वा संवत्सरादिभ्य ऊर्ध्वम् ॥ १३ ॥

**द्वादशाहं चरेदेकाहं वा ॥ १४ ॥**

कृते प्रायश्चित्ते अमुष्मिन्नाधास्यामीति सङ्कल्प्य ततः पूर्वं चरेद्द्वादशाहमेकाहं वा ॥ १४ ॥

**श्व आधास्यमानः पुनर्ब्रह्मौदनं पचति ॥ १५ ॥**

पुनर्ब्रह्मौदनपाक [1]एकाहेऽपि । ब्रह्मौदनं कृत्वा सर्वत्र श्व आधास्यमान [2]इत्यविशेषश्रवणात् । केचित्तु–अनुपनमपक्ष एव[3] ॥

**योऽस्याग्निमाधास्यन् स्यात्स एतां रात्रिं व्रतं चरति न मांसमश्नाति न स्त्रियमुपैति ॥ १६ ॥**

[क]योऽस्याग्निमिति सर्वेषामृत्विजां व्रतम् ॥ १६ ॥

क. "योऽस्याग्निम्" इति यच्छब्दस्य "स एताम्" इति तच्छब्दस्य चावृत्तिं कृत्वा यो य आधास्यति स स व्रतं चरतीत्यर्थवर्णनेन सर्वेषामृत्विजां व्रतचरणमिति ।

1. B. Ms. reads एकाहे विरतंकृत्वा
2. Ibid इत्यविशेषवचनात्
3. B2. Ms. reads पुनः प्रयोग इति after एव.

"प्रजा अग्ने संवासयाशाश्च पशुभिस्सह । राष्ट्राण्यस्मा आधेहि यान्यासन् सवितुस्सवे" इत्युत्तरेण गार्हपत्यायतनं कल्माषमजं बध्नाति ॥ १७ ॥

इति सप्तमी कण्डिका

अथ यजमानो व्रतमुपैति वाचं यच्छति "अनृतात्सत्यमुपैमि । मानुषाद्दैव्यमुपैमि । दैवीं वाचं यच्छामि" इति ॥ १ ॥

[क]अनृतवदनप्रतिषेधोऽवागा[1]धानात् "अनृतात्सत्यमुपैमि" इति लिङ्गात् । [ख]दैवाभिधानात् वैदिकी दैवी वाक् । तां गृह्णामीत्युत्तरकालं प्रयुङ्क्ते । अतोऽवाग्यमेऽपि समस्तस्य मन्त्रस्य प्रयोगः ॥

[ग]वीणातूणवेनैनमेतां रात्रिं जागरयन्ति ॥ २ ॥

तूणवो वंशः ॥ २ ॥

अपि वा न जागर्ति न वाचं यच्छति ॥ ३ ॥

क. अत्र मन्त्रे "अनृतात्सत्यमुपैमि" इत्यनृतनिवृत्तिपूर्वकसत्यप्राप्तिप्रतिपादनादिदानीमेव कल्माषाजबन्धनसमनन्तरकाल एवानृतवदननिवर्तनादि, नाहिताग्निव्रतकाल एव । अतश्च तद्भ्रेषे श्रौतप्रायश्चित्तं कर्तव्यम् । आहिताग्निव्रतभ्रेषे सर्वत्र व्रातपतीष्टिः इति ।

ख. 'मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामि' इति सर्वासां मानुषवाक्त्वेऽपि लौकिकवाङ्निवृत्तिपरत्वाद्दैवीशब्दस्याऽत्र वैदिकी वागेव दैवी वागित्युच्यते । तां यच्छामि गृह्णामीत्यर्थः । अत ऊर्ध्वं वैदिक्या एव प्रायेण प्रयोगं करोमीति यावत् । अतश्च "अपि वा न वाचं यच्छति" इत्यस्मिन् पक्षे मानुषवाग्यमनाभावेऽपि कृत्स्नमन्त्रप्रयोगो व्रतोपायनार्थं इति । रुद्रदत्तस्तु—वाग्यमाभावपक्षे मन्त्राभावमभिप्रैति ।

ग. वीणा च तूणवश्च तयोस्समाहारो वीणातूणवम् । वीणानादेन वंशध्वनिना च जागरणं कार्यमिति ।

1. B. Ms. reads अवागाद्याधानात्

शल्कैरेतां रात्रिमग्निमिन्धान आस्ते । "शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् । उभयोर्लोकयोर्ऋद्ध्वाऽतिमृत्युं तराम्यहम्" इत्येतया ॥ ४ ॥

शल्केन्धने मन्त्रावृत्तिः । एनमग्निमासमारोपणात् । [1]अजाग्रदग्निं शमयिष्यतीत्युत्थाप्यते शल्केन्धनेनाऽग्निः ॥ ४ ॥

तस्मिन्नुपव्युषमरणी निष्टपति—"जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते । अग्निमश्वत्थादधि हव्यवाहꣳ शमीगर्भाज्जनयन् यो मयोभूः । [1]अयं ते योनिर्ऋत्विय" इत्येताभ्याम् ॥ ५ ॥

समीप उषस उपव्युषम् । तस्मिन्नुपव्युषे । मन्त्रेण तपनं निष्टपनम् । तपने कृतेऽग्नेरुद्वासनम् ॥ ५ ॥

"अग्ने रक्षाꣳसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्य" इत्यरणी अभिमन्त्र्य "मही विश्वपत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणाम् । अन्तर्वत्नी जन्यं जातवेदसमध्वराणां जनयथः पुरोगाम्" इत्यरणी आह्रियमाणे यजमानः प्रतीक्षते ॥ ६ ॥

"दोह्या च ते दुग्धभृच्चोर्वरीते ते भागधेयं प्रयच्छामि" इति यजमानाय प्रयच्छति ॥ ७ ॥

1. Ibid. अजाग्रहणादग्निश्शमयितव्य इत्युत्थाप्यते.

१. अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥
( तै. सं. १-५-५-२ )

"आरोहतं दशतꣳ शक्वरीर्ममर्त्तेनाग्न आयुषा वर्चसा सह। ज्योक्जीवन्त उत्तरामुत्तराꣳसमान्दर्शमहं पूर्णमासं यज्ञं यथा यजै" इति प्रतिगृह्य "ऋत्वियवतीस्थो अग्निरेतसौ गर्भं दधाथां ते वामहं ददे। तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः। ते मत्प्रातः प्रजनिष्येथे ते मा प्रजाते प्रजनयिष्यथः। प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके" इति प्रतिगृह्याऽभिमन्त्रयते यजमानः ॥ ८ ॥

इत्यष्टमी कण्डिका

हस्तद्वयेन प्रतिग्रहः। [क]दशतमिति लिङ्गात् ॥ ८ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

पञ्चमप्रश्ने द्वितीयः पटलः ॥

अथ तृतीयः पटलः

[1]"मयि गृह्णाम्यग्रे अग्निं,[2] यो नो अग्निः पितर" इत्युभौ जपतः[3]। "अपेत वीत" इति गार्हपत्यायतनमुद्धत्य[4] "शन्नो देवीरभीष्टय" इत्यद्भिरवोक्षति ॥ १ ॥

क. प्रतिग्रहमन्त्रे "आरोहतं दशतꣳ शक्वरीर्मम" हे अरणे मम शक्वरीणामङ्गुलीनां दशतं दशत्वसंख्यामारोहतमित्युक्तत्वात् हस्तद्वयप्राप्तिरिति। प्रतिगृह्याभिमन्त्रयत इति पुनर्वचनात् यावन्मन्थनं हस्त एवारणी भवत इति रामाण्डारः। रुद्रदत्तस्तु—प्रतिग्रहानन्तरमभिमन्त्रणमेव कर्तव्यम्, न तयोर्मध्येऽवश्यकर्तव्यमपि किञ्चिदित्येतदर्थमित्याह।

१. मयि गृह्णाम्यग्रे अग्निꣳरायस्पोषाय सुप्रजास्त्वाय सुवीर्याय। मयि प्रजां मयि वर्चो दधाम्यरिष्टाः स्याम तनुवा सुवीराः ॥

२. यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्याꣳआविवेश। तमात्मन् परिगृह्णीमहे वयं मा सो अस्माꣳअवहाय परागात ॥ ( तै. सं. ५. ७. ८. १ )

३. अपेत वीत वि च सर्पतातो येऽत्रस्थ पुराणा ये च नूतनाः। अदादिदं यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ॥ ( तै. ४. २. ४. १ )

४. शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः ॥

एवं दक्षिणाग्नेराहवनीयस्य सभ्यावसथ्ययोश्च ॥२॥

"अपेत वीत" "शन्नो देवीरभिष्टय" इति द्वौ द्वौ[1] एकैकस्मिन्नायतने ॥ १, २ ॥

एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते ॥ ३ ॥

सिकतानामर्धं द्वैधं विभज्याऽर्धं गार्हपत्यायतने निवपत्यर्धं दक्षिणाग्नेः। अर्धं त्रैधं विभज्य पूर्वेषु ॥ ४ ॥

एतेनैव कल्पेन सर्वान् पार्थिवान्निवपति ॥ ५ ॥

[1]"अग्नेर्भस्मासि" इति सिकता निवपति। "संज्ञानमसि" इत्यूषान् ॥ ६ ॥

तान्निवपन् "यददश्चन्द्रमसि कृष्णं तदिहास्तु" इति मनसा ध्यायति ॥ ७ ॥

"उदेह्यग्ने अधि मातुः पृथिव्या विशआविश महतस्सधस्थात्। आखुं त्वा ये दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम्" इत्याखुकरीषम्। "यत्पृथिव्या अनामृतस्सम्बभूव त्वे सचा। तदग्निरग्नये ददात्तस्मिन्नाधीयतामयम्" इति गार्हपत्यायतने वल्मीकवपां निवपति ॥८॥

यदन्तरिक्षस्येति दक्षिणाग्नेः। यद्दिव इति पूर्वेषु ॥९॥

1. Ad. Ms. adds पदार्थौ B. 2. Ms. reads द्वे द्वे

१. अग्नेर्भस्मास्यग्नेः पुरीषमसि संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात् ॥ (तै. सं. ४. २. ४. १)

" यदन्तरिक्षस्यानामृतम् । यद्दिवोऽनामृतम् " इत्यनुषङ्गः । यदग्नित्रयं [क]तदाऽर्धस्याहवनीय एव क्षेपः ॥ ४–९ ॥

उत्समुद्रान्मधुमा ँ ऊर्मिरागात्साम्राज्याय प्रतरां दधानाः । अमी च ये मघवानो वयञ्चेषमूर्जं मधुमत्सम्भरेम " इति सूदम् । " इयत्यग्र आसीः" इति वराहविहतम् ॥ १० ॥

" अदो देवी प्रथमाना पृथग्यद्देवैर्न्युप्ता व्यसर्पो महित्वा । अद ँ हथाऽशर्कराभिस्त्रिविष्टप्यजयो लोकान् प्रदिशश्चतस्रः " इति शर्कराः । द्वेष्यञ्च मनसा ध्यायति ॥

इति नवमी कण्डिका

ऋत ँ स्तृणामि पुरीषं पृथिव्यामृतेऽध्यग्निमादधे सत्येऽध्यग्निमादध इत्यायतनेषु सम्भाराननुव्यूहति ॥१॥

[1]"संयावः प्रियास्तनुव " इत्येषा । संवस्सृजामि हृदयानि स ँ सृष्टं मनो अस्तु वः । स ँ सृष्टः प्राणो अस्तु व" इति वानस्पत्यान् संसृज्य सिकतावन्निवपती "तः प्रथमं जज्ञे अग्नि" रित्येतया ॥ २ ॥

" यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम् । ताभिस्सम्भूय सगणस्सजोषा हिरण्य-

क. सम्भृतस्य सर्वस्यापि निश्शेषं कार्योपयोगावश्यंभावादिति ।

१. संयावः प्रियास्तनुवस्सं प्रिया हृदयानि वः । आत्मा वो अस्तु सम्प्रियस्सम्प्रियास्तनुवो मम ॥ (तै. ४. २. ४. १)

२. इत प्रथमं जज्ञे अग्निस्स्वाद्योनेरधि जातवेदाः । सगायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन् ॥ (तै. सं. २. २. २४. ८)

योनिर्वह हव्यमग्ने" इति गार्हपत्यायतने सौवर्णं हिरण्यशकलमुत्तरतस्सम्भारेषूपास्यति ॥ ३ ॥

"चन्द्रमग्निं चन्द्ररथं ँ हरित्वचं वैश्वानरमप्सुषद ँ सुवर्विदम्। विगाहन्तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः" इत्युपास्तमभिमन्त्रयते। द्वेष्याय रजतं प्रयच्छति ॥ ४ ॥

यदि द्वेष्यं नाधिगच्छेद्यां दिशं द्वेष्यस्स्यात्तेन निरस्येत् ॥ ५ ॥

एवं सर्वेषूपास्य करोति ॥ ६ ॥

यां दिशं द्वेष्योऽवस्थितः तेन प्रदेशेन निरसनम्। हिरण्योपासनाभिमन्त्रणदानान्येकैकस्य। [क]ताम्रशकलं मन्त्रेणोपास्य तूष्णीमभिमन्त्र्य राजतशकलदानम्। [ख]उपदेश औदुम्बरशकलस्य तूष्णीमुपासनम्, न रजतशकलस्य सम्भरणम्, नापि दानम् ॥ १–६ ॥

ब्राह्मौदनिकाद्भस्माऽपोह्य तस्मिन् शमीगर्भादग्निं मन्थति ॥ ७ ॥

क. पञ्चसम्भारपक्षे सुवर्णशकलस्थाने ताम्रशकलविधानात् तेषां मन्त्रेणैवोपासनम्। अभिमन्त्रणं परं तूष्णीम्। तत्र मन्त्रे 'चन्द्र' शब्दश्रवणात् "अग्ने रेतश्चन्द्र ँ हिरण्यम्" इत्यत्राग्निरेतस्त्वाभिधानेन सुवर्णस्यैव प्रतीतेः ताम्रे तन्निवृत्तिरिति।

ख. उपदेशमनन्नु–उपासनमन्त्रे हिरण्ययोनिरिति श्रवणात् ताम्रे तन्मन्त्रनिवृत्तिः। अतस्तूष्णीमेव ताम्रोपासनम्। एवं हिरण्यसम्भरणमन्त्र एवाऽतिप्रयच्छन्निति रजतदानश्रवणात् रजतदानस्य सुवर्णप्रयुक्तत्वावगतेः सुवर्णाभावे रजताभावात् न तस्य सम्भरणं न वा द्वेष्याय दानम् इति।

असम्भरणपक्षेऽवोक्ष्याऽऽयतनानि भस्मापोहनमेव । अपोह्य अपनीय तस्मिन्नेवायतने मन्थति । [क]शमीगर्भादिति ब्राह्मणम् । न त्वशमीगर्भनिवृत्त्यर्थम् । उपदेशस्तु-तस्मिन्नेवायतने शमीगर्भादग्निं मन्थति। अशमीगर्भादन्यत्रापि ॥ ७ ॥

उद्यत्सु रश्मिषु दशहोत्राऽरणी समवदधाति ॥ ८ ॥

[ख]अनुदिते ये रश्मयः, तेषूद्यत्सु " नक्तं गार्हपत्यमा[1]दधाति" इति वचनात् ॥ ८ ॥

"सहाग्नेऽग्निना जायस्व सह रय्या सह पुष्टया सह प्रजया सह पशुभिस्सह ब्रह्मवर्चसेने"त्युपतिष्ठत्यश्वेऽग्निं मन्थति ॥ ९ ॥

उपतिष्ठति समीपे तिष्ठति । 'सहाग्न' इति प्राङ्मुखोऽध्वर्युः प्राच्यामरण्यां त्वक्तोऽपरस्मिंश्च[2] प्रदेशे ॥ ९ ॥

श्वेतोऽश्वोऽविक्लिन्नाक्षो भवति रोहितो वा सितजानुरपि वा य एव कश्चित्साण्डः ॥ १० ॥

अविक्लिन्नाक्षः अलेपनाक्षः । विक्लिन्नाक्ष इत्युपदेशः । सहाण्डाभ्यां साण्डः ॥ १० ॥

क. सूत्रे 'शमीगर्भात्' इति ब्राह्मणवाक्यस्याऽनुकरणं कृतम्, न त्वशमीगर्भस्य निवृत्तिस्तेन बोध्यते । अतोऽशमीगर्भादपि मन्थनं वाजसनेयिमतात्प्राप्तमेव । उपदेशमतं तु-यदा शमीगर्भान्मन्थनं तदा तस्मिन्नेवायतने । यदाऽशमीगर्भात् तदान्यत्रापि । अन्यथा सूत्रे शमीगर्भग्रहणानर्थक्यादिति ।

ख. सूर्योदयात्पूर्वम् । प्राच्यां दिशि जातप्रकाशायामित्यर्थः । "चित्तिः स्रुक्" इत्यादिः "सामाध्वर्युः" ( तै आ. ३, ११ ) इत्यन्तो भागो दशहोता (see तै. ब्रा. २, २, १, ६) अग्निमादधानो दशहोत्रारणिमवदध्यात् इति ।

1. O. M. omits आदधाति
2. B. Ms. reads देशे.

१. चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः ॥ ( तै. आ. ३. १. १ ) इति दशहोता ।

मथ्यमाने शक्तेस्साङ्कृतेस्साम गायति । धूमे जाते गाथिनः कौशिकस्य । 'अरण्योर्निहितो जातवेदा' इति च॥ ११ ॥

इति दशमी कण्डिका

'उपावरोह जातवेद' इति निर्वर्तमानमभिमन्त्रयते ॥ १ ॥

निर्वर्तमानं पतितमात्रम् ॥ १ ॥

अत्र चतुर्होतॄन् यजमानं वाचयति ॥ २ ॥

[क]पञ्चानुवाकाः ऋतुमुखीयवर्जाश्चतुर्होतार इति ॥ २ ॥

"अजन्नग्निः पूर्वः पूर्वेभ्यः पवमानश्शुचिः पावक ईड्य" इति जातमभिमन्त्रयते । जाते यजमानो वरं ददाति ॥ ३ ॥

जातवचनाद्बलवति जाते ॥ ३ ॥

क. चित्तिः स्रुक् (१) पृथिवी होता (२) अग्निर्होता (३) सूर्यं ते चक्षुः (४) महाहविर्होता (५) इति तैत्तिरीयारण्यकपठिताः ( तै. आ. ३. १–५ ) पञ्चानुवाकाश्चतुर्होतृपदेनोच्यन्ते । see तै. ब्रा. २, ३, १. 'किंचतुर्होतृणां चतुर्होतृत्वम्' इत्यादि । "वाग्घोता" ( तै. आ. ३. १–६ ) इत्यनुवाकस्यात्र न ग्रहणम्, तस्य 'प्रायश्चित्तः वाग्घोतेत्यृतुमुख ऋतुमुखे जुहोति' इति पृथग्विनियोगदर्शनात् आपस्तम्बेनापि " अथैष ऋतुमुखीयः यष्षड्ढोता वाग्घोतेति तस्य वदत्यृतुमुख ऋतुमुखे जुहुयादिति स सार्वकामः " ( आप. श्रौ. १४. १४. १३. ) इति फलार्थं विनियोगाच्च । अत एवास्यानुवाकस्य ऋतुमुखीय इत्यपि संज्ञा । अतश्च यत्रैकवचनान्तः प्रयोगः यथा–"चतुर्होत्रा पौर्णमास्यां हवींष्यासन्नान्यभिमृशेत्" (आ. श्रौ. १. ८. ७) 'चतुर्होतारं व्याख्याय' (आप. श्रौ. ४. ९. ७.) इत्यादौ तत्र पृथिवी होता इत्यस्य ग्रहणम् । यत्र तु बहुवचनम्, यथा प्रकृते तत्र वाग्घोतावर्जितानां पञ्चानामनुवाकानां ग्रहणमिति ।

गौर्वै वरोऽतिवरोऽन्यो धेनुर्वरोऽतिवरोऽन्योऽनड्वान् वरोऽतिवरोऽन्यः पष्ठौही वरोऽतिवरोऽन्यः ॥ ४ ॥

वरो वरयितव्यः । तत्र वरचोदनासु वरयितव्ये देये प्राप्ते गौरेव देयः, स हि वरयितव्योऽन्येभ्यो[1]ऽजादिभ्यः, बहुफलत्वात् । गोजातावपि धेन्वादय [2]एव देयाः यदि[3]तु विद्यन्ते, पुनरनुक्रमणात् । पष्ठौही पञ्चवर्षा । अतिवरो बहुमूल्योऽश्वादिः, तस्यापि वरचोदनासूपादानम्, इहोपदेशात्, लिङ्गाच्च–"तस्माद्यज्ञे वरो दीयते" इति । दाने यजमानस्य सिद्धत्वात् पुनर्यजमानग्रहणात् [4]नयनमपि यजमानेन [5]कर्तव्यं स्वयम् । अन्यत्र तु त्यागमात्रेऽन्योऽपि प्रयच्छति । केचित्तु–प्रायश्चित्तमग्न्याधेयं यजमानसान्निध्य एव यथा स्यादित्येवमर्थं यजमानग्रहणम् ॥ ४ ॥

जातं यजमानोऽभिप्राणिति "प्रजापतेस्त्वा प्राणेनाभिप्राणिमि । पूष्णः पोषेण मह्यम् । दीर्घायुत्वाय शतशारदाय । शत ँ शरद्भ्य आयुषे वर्चसे । जीवात्वै पुण्याय" इति ॥ ५ ॥

अभिप्राणनम् उपर्युच्छ्वासः ॥ ५ ॥

"अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवस्समीचीः पुमा ँ सञ्जातमभिस ँ रभन्ता"मिति जातमञ्जलिनाभिगृह्य "सम्राडसि विराडसि सारस्वतौत्वोत्सौ समिन्धतामन्नादं त्वा न्नपत्याय" इत्युपसमिध्याऽथैनं प्राञ्चमुध्दृत्याऽऽसीनः सर्वेषां मन्त्राणामन्तेन

1. B. Ms. reads नान्यः
2. 'क' Omits एव
3. *Ibid* reads यदि तु
4. 'क' reads प्रणयनमपि
5. *Ibid* कार्यम् । अन्यत्र.

रथन्तरे गीयमाने यज्ञायज्ञीये च यथर्ष्याधानेन प्रथमया व्याहृत्या द्वाभ्यां वा प्रथमाभ्याञ्च सर्पराज्ञीभ्यां प्रथमेन च घर्मशिरसा ॥ ६ ॥

अञ्जलिग्रहणाद्याध्वर्यवम्, [क]उत्तरत्रोर्ध्वज्ञुनियमादिह सर्वासीनः। प्रथमायाश्च स्वयमातृण्णायाम्। अन्यत्राऽनियमः। द्वाभ्यां प्रथमद्वितीयाभ्यां व्याहृतिभ्याम् ॥ ६ ॥

"भृगूणां त्वा देवानां व्रतपते व्रतेनादधामि" इति भार्गवस्याऽऽदध्यात्। "अङ्गिरसां त्वा देवानां व्रतपते व्रतेनाऽऽदधामि" इति यो ब्राह्मण आङ्गिरसस्स्यात्। "आदित्यानां त्वा देवानां व्रतपते व्रतेनाऽऽदधामि" इत्यन्यासां ब्राह्मणीनां प्रजानाम्। "वरुणस्य त्वा राज्ञो व्रतपते व्रतेनाऽऽदधामि" इति राज्ञः। "इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनाऽऽदधामि" इति राजन्यस्य। "मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनाऽऽदधामि" इति वैश्यस्य। "ऋभूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामि" इति रथकारस्येति यथर्ष्याधानानि ॥ ७ ॥

इत्येकादशी कण्डिका

[ख]भृगूणां त्वाऽङ्गिरसामित्यस्मच्छाखोक्तमपि लभ्यते। "इमे भृगवः" इत्यन्ता भृगवः। 'अथातोऽङ्गिरसामायास्या' इत्यारभ्याऽङ्गिरसः।

क. दक्षिणाग्नेराधाने "ऊर्ध्वज्ञुरासीनो दक्षिणाग्निमादधाति" (आप. श्रौ. ५. १३. ८.) इति ऊर्ध्वज्ञुत्वविधानादिति।

ख. भृगूणां त्वाऽङ्गिरसां व्रतपते व्रतेनादधामि इत्यविकृत एव पाठो भृगूणाम्। एवमेवाऽङ्गिरसामपि। आपस्तम्बसूत्रे प्रवराध्याये 'भृगूणामेवाऽग्रे व्याख्यास्यामः' (आप. श्रौ. २४. ५. १०) इत्यारभ्य 'इमे भृगवो व्याख्याताः' (आप. श्रौ. २४. ६. ९.) इत्यन्तैस्सूत्रैः प्रतिपादिता भार्गवाः। ततः 'अथातोऽङ्गिरसामायास्याः' इत्यारभ्य 'आरुणिनितुण्डीनाम्' (आप. श्रौ. २४. ८. १०.) इत्यन्तमङ्गिरसः। ततोऽत्र्यादयः। अत्र्यादीनां "आदित्यानां त्वा देवानां व्रतपते" इति मन्त्र इति।

ततोऽग्नेः । अग्न्यादीनामादित्यानामिति । अभिषिक्तो राजा, राजन्यः क्षत्रियः ॥ ७ ॥

भूर्भुवस्सुवरिति व्याहृतयः । [१]भूमिर्भूम्नेति सर्पराज्ञियः । "घर्मश्शिरस्तदयमग्निस्संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ । वातः प्राणस्तदयमग्निस्संप्रियः पशुभिर्भुवत् । स्वदितं तोकाय तनयाय पितुं पच । अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निस्साम्प्रियः पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चश्शुक्रा तनूश्शुक्रं ज्योतिरजस्रम् । तेन मे दीदिहि तेन त्वा दधेऽग्निनाग्ने ब्रह्मणेति" घर्मशिरांसि ॥ १ ॥

यत्ते शुक्र शुक्रमिति तृतीय एव घर्मशिरसि ॥

"यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः । ताभिस्सम्भूय सगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्ने । प्राणं त्वाऽमृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै । दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे । अग्ने गृहपतेऽहे बुध्न्य परिषद्य दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय पृथिव्यास्त्वा मूर्धन् सादयामि यज्ञिये लोके यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामि" इति सम्भारेषु निदधाति ॥ २ ॥

1. O. M. omits आदित्यानाम्.

१. भूमिर्भूम्ना द्यौर्वरिणा (तै. सं. १. ५. ३.) इत्याद्यास्तिस्र ऋचः सर्पराज्ञियः

" सुगार्हपत्यो विदहन्नरातीरुषसश्श्रेयसीश्श्रेयसीर्द- धत् । अग्ने सपत्नाꣳ अपबाधमानो रायस्पोषमिषमूर्ज- मस्मासु धेहि " इत्याधीयमानमभिमन्त्रयते यजमानः । घर्मशिरांसि चैनमध्वर्युर्वाचयति ॥ ३ ॥

इति द्वादशी कण्डिका

आधीयमानं स्थाप्यमानम् । वाचने कृते घर्मशिरसां शमनम् । अवगच्छत्यपि ग्रन्थे वाचनं [क]वचनात् ॥ ३ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

पञ्चमप्रश्नेऽग्न्याधेयाख्ये

तृतीयः पटलः

चतुर्थः पटलः

अर्धोदिते सूर्य आहवनीयमादधाति ॥ १ ॥

निधानमेवार्धोदित आहवनीयस्य हिरण्यकेशिनः ॥ १ ॥

उदिते ब्रह्मवर्चसकामस्य ॥ २ ॥

उदिते सर्वोदिते ब्रह्मवर्चसकामस्य । अन्तरेणापि [1]कामान् [ख]वाज- सनेयिनाम् ॥ २ ॥

क. वाचयतीति विधिबलात् 'ज्ञाते च वाचनं न ह्यविद्वान् विहितोऽस्ति' ( पू. मी. सू. ३-८-१८ ) इति न्यायाच्चेति ।

ख. शतपथब्राह्मणे आहवनीयार्थं मन्थनस्य "तद्धैकेऽनुदिते मथित्वा" (श. ब्रा. २-४-८. ) इत्यनुदितमन्थनं विधाय "यशो ह भवति य एवं विद्वानुदिते मन्थति" ( श. ब्रा. २-४-९ ) इत्युदयानन्तरमेव मथनविधानात् तदनन्तरमेव नित्याधानस्यापि प्राप्तेरिति।

1. 'घ' B. Ms. reads कामम्

गार्हपत्ये प्रणयनीयमिध्ममादीपयति सिकताश्चोपयमनीरुपकल्पयते ॥ ३ ॥

इध्मस्य च संख्या प्रणयनार्थस्य ॥ ३ ॥

तमुद्यच्छति-"ओजसे बलाय त्वोद्यच्छे वृषणे शुष्मायायुषे वर्चसे। सपत्नतूरसि वृत्रतूः। यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः। पुष्टिर्या ते मनुष्येषु पप्रथे तया नो अग्ने जुषमाण एहि। दिवः पृथिव्याः पर्यन्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः। यत्र यत्र जातवेदस्सम्बभूथ ततो नो अग्ने जुषमाण एहि। उदु त्वा विश्वे देवा" इत्येताभिश्चतसृभिः ॥ ४ ॥

उद्यमनम् इध्मगतस्याग्नेरुपरि गार्हपत्यस्य ॥ ४ ॥

उपरीवाऽग्निमुद्यच्छति ॥ ५ ॥

उद्यतमुपयतं धारयति ॥ ६ ॥

उद्यतस्य सिकताभिर्धारणम् ॥ ६ ॥

अथाऽश्वस्य दक्षिणे कर्णे यजमानमग्नितनूर्वाचयति-"या वाजिन्नग्नेः पशुषु पवमाना प्रिया तनूस्तामावह। या वाजिन्नग्नेरप्सु पावका प्रिया तनूस्तामावह या वाजिन्नग्नेस्सूर्ये शुचिः प्रिया तनूस्तामावह" इति। धारयत्येवाग्निम् ॥ ७ ॥

या वाजिन्नि[1]त्यश्वाभिधानात्कमण्डल्वादौ निवृत्तिः। आदित्यस्य [क]वाजिशब्देनाभिधानादनिवृत्तिरुपदेशः। तस्य सर्वत्रावस्थानात् ॥ ७ ॥

क. "या वाजिन्" इति मन्त्रे वाजिशब्देन सूर्यस्याभिधानात् तस्य सर्वदा सर्वस्मिन्नपि पक्षे मन्त्रस्य प्रयोग एवेति।

1. B. Ms. reads इत्यश्वस्याभिधानात्

अथाऽऽग्नीध्रो लौकिकमग्निमाहृत्य मथित्वा वोर्ध्वज्ञुरासीनो दक्षिणामग्निमादधाति यज्ञायज्ञीये गीयमाने यथर्ष्याधानेन द्वितीयया व्याहृत्या तिसृभिस्सर्पराज्ञीभिर्द्वितीयेन च घर्मशिरसा। “यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः। ताभिस्सम्भूय सगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्ने। व्यानं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै। दिवस्त्वा वीर्येण पृथिव्यै महिम्नाऽन्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे। अग्नेऽन्नपा मयोभुव सुशेव दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय। पृथिव्यास्त्वा मूर्धन् सादयामि यज्ञिये लोके। यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामि” इति सम्भारेषु निदधाति ॥ ८॥

इति त्रयोदशी कण्डिका ॥

शमनमपि दक्षिणाग्नेराग्नीध्र एव। अध्वर्योर्व्यापृतत्वात् ॥ ८॥

यो ब्राह्मणो राजन्यो वैश्यश्शूद्रो वाऽसुर इव बहुपुष्टस्स्यात्तस्य गृहादाहृत्याऽऽदध्यात्पुष्टिकामस्य ॥ १ ॥

[क]असुर इव गतश्रीर्यः। बहुपुष्टो बहुधनः ॥ १ ॥

गृहे त्वस्य ततो नाऽश्नीयात् ॥ २ ॥

क. सुष्ठु राः यस्य सः सुरः, न सुरः असुरः दरिद्रः बहुधनोऽपि लोभादिना धनरहित इव वर्तते तस्य गृहादिति। रुद्रदत्तस्तु—असुरनिदर्शनञ्च पोषातिशयदर्शनार्थम्। स हि नृशंसो बलिष्ठश्च सन् पुंसो धनमादाय स्फीततरो भवति इति व्याचख्यौ। ( see also कठ. सं. ८-१२; and कपिष्ठ. सं. ७-७ )

अम्बरीषादन्नकामस्य वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य ॥ ३ ॥

अम्बरीषो भ्राष्ट्रम् । योनित एवाहरण[1]महरहर्दक्षिणाग्नेः ॥ ३ ॥

वामदेव्यमभिगायत आहवनीय उध्द्रियमाणे ॥ ४ ॥

[१]प्राचीमनुप्रदिशामित्येषा । "विक्रमस्व महा२ँ असि वेदिषन्मानुषेभ्यः । त्रिषु लोकेषु जागृहि प्रजया च धनेन च । इमा उ मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेय । इहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेद" इति प्राञ्चोऽश्वप्रथमा [क]अभिप्रव्रजन्ति ॥ ५ ॥

प्रव्रजनमन्त्रा अध्वर्युयजमानयोः । अश्वेन सह बहुवचनम् । केचि[2]दश्वहर्तुरपि मन्त्र इति ॥ ५ ॥

दक्षिणतो ब्रह्मा रथं रथचक्रं वा वर्तयति यावच्चक्रं त्रिः परिवर्तते ॥ ६ ॥

षट्कृत्वो द्वेष्यस्य ॥ ७ ॥

दक्षिणत [ख]आहवनीयस्य रथचक्रप्रवर्तनम् ॥ ६, ७ ॥

जानुदघ्ने धारयमाणस्तृतीयमध्वनोऽग्निं हरति नाभिदघ्ने तृतीयमास्यदघ्ने तृतीयम् । न कर्णदघ्नमत्युद्गृह्णाति ॥ ८ ॥

क. बहुवचनेन बहुकर्तृकसमन्त्रकक्रियाविध्यवगतेस्तद्बलात् अश्वनयनकर्तुरपि मन्त्रोच्चारणं भवेदिति ।

ख. विहारस्य दक्षिणत इति रुद्रदत्तः ।

1. B. Ms. reads अहरहरपि दक्षिणाग्नेः

2. B. Ms. reads अश्वभर्तुरपि.

१. प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह ।
विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥ ( तै. सं. ४-६-५-१ )

जानुदघ्ने जानुप्रमाणे । [1]एवमुत्तरयोः । [2]नाधिकं कर्णप्रमाणात् । [3]आस्यग्रहणेन सर्वस्य मुखस्य ग्रहणम् ॥ ८ ॥

यद्युदूह्य निगृह्णीयान्मुखेन सम्मायाऽऽदध्यात् ॥ ९ ॥

यद्युदूह्य निगृह्णीयात् जानुदघ्नादिपरिमाणान्नीचैर्धारयेत् । मुखेन सम्माय स्थापनमेव प्रायश्चित्तम् । सम्मानं तुल्यधारणम् । [4]विहितपरिमाणादूर्ध्वं नयने प्रायश्चित्तम् । उपदेशो यद्युदूह्य निगृह्णीयादेतदेव प्रायश्चित्तम् । मुखेन सम्मायाधानं नित्यम् ॥ ९ ॥

नाऽग्निमादित्यञ्च व्यवेयात् ॥ १० ॥

दक्षिणतः परिगृह्य हरति ॥ ११ ॥

अर्धाध्वे यजमानो वरं ददाति ॥ १२ ॥

अर्धमध्वनोऽर्धाध्वम् ॥ १२ ॥

अर्धाध्वे हिरण्यं निधाय नाकोऽसि ब्रध्नः प्रतिष्ठासङ्क्रमण इत्यतिक्रामति ॥ १३ ॥

अर्धाध्वे हिरण्यनिधानाद्याध्वर्यवम् ॥ १३ ॥

[1]प्राञ्चमश्व "मभ्यस्थाद्विश्वा" इति दक्षिणेन पदोत्तरतस्सम्भारानाक्रमयति यथाऽऽहितस्याग्नेरङ्गाराः पदमभ्यववर्तेरन्निति ॥ १४ ॥

1. Ibid, एवमुत्तराणि नाभिप्रमाणानि.
2. 'ङ' reads नाधिकप्रमाणानि.
3. 'क' reads आस्येन सह.
4. B. Ms. reads विहितदेशादूर्ध्वम्

1. अभ्यस्थाद्विश्वा: पृतना अरातीस्तदग्निराह तदु सोम आह । बृहस्पतिस्सविता तन्म आह पूषा माधात्सुकृतस्य लोके (तै. सं. ४-२-८-१)

प्रदक्षिणमावर्तयित्वा "यदक्रन्द" इति पुनरेवाऽऽक्रमयति ॥१५॥

[क]द्वितीयस्याक्रमणमन्त्रस्य कमण्डल्वादौ निवृत्तिः । अग्निर्वा अर्वेत्यभिधानादनिवृत्तिरुपदेशः ॥ १५ ॥

पुरस्तात्प्रत्यञ्चमश्वं धारयति ॥ १६ ॥

पुरस्तादाहवनी[1]यायतनस्य प्रत्यङ्मुखोऽश्वो धार्यते ॥ १६ ॥

पूर्ववाडश्वो भवति ॥ १७ ॥

तदभावेऽनड्वान् पूर्ववाडेतानि कर्माणि करोति इति पैङ्गायनिब्राह्मणं भवति ॥ १८ ॥

इति चतुर्दशी कण्डिका

पूर्वं वयांसि वहतीति पूर्ववाट् युवा । एतानि कर्माण्यग्निमन्थनस्थापनादीनि करोति । प्रतिनिधिः पूर्ववाडनड्वान् ॥ १७, १८ ॥

कमण्डलुपद आदधीतेति बह्वृचब्राह्मणम् । अजस्य पद आदधीतेति [ख]वाजसनेयकम् ॥ १ ॥

क. यदक्रन्द इति द्वितीयमन्त्रे–अन्तेऽर्वन्निति शब्दप्रयोगात् तस्याश्ववाचकस्य कमण्डल्वभिधायकत्वासम्भवात् तत्र तस्य निवृत्तिरिति । अर्वन् पदेनात्राग्नेरेवाभिधानात्कमण्डल्वादावपि मन्त्रस्य प्रवृत्तिरित्युपदेशमतम् ।

ख. किमिदं वाजसनेयकमिति न ज्ञायते । वाजसनेयिब्राह्मणे शतपथे "तमश्वस्य पद आधत्त" (श. ब्रा. २. ४. २४) इत्यश्वपद एवाधानविधानात् ।

1. B.1 Ms. reads आहवनीयस्य.
2. B. 2 Ms.omits युवा.

१. यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू उपस्तुतं जनिम तत्ते अर्वन् ॥ तै. सं. ४-६-७-१.

[क]कमण्डलुः करकः, तस्य मूले पदोपचारः । स चाजश्च मन्त्रजना-त्प्रभृति विकल्प्येते । पूर्वमश्वकर्तृकम् । उपदेश गतानि कर्माणि करोति इत्यनुवर्तयति । अतः कमण्डलुरजश्च मन्थनाद्येव ॥ १ ॥

अथ यजमानश्शिवा जपति–"ये ते ऽग्ने शिवे तनुवौ विराट् च स्वराट् च ते मा विशतां ते मा जिन्व-ताम् । ये ते अग्ने शिवे तनुवौ सम्राट् चाभि भूश्च ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ प्रभ्वीच प्रभूतिश्च ते मा विशतां ते मा जिन्वताम् । यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादध" इति ॥ २ ॥

यास्ते अग्ने घोरास्तनुवः ताभिरमुं गच्छेति यज-मानो द्वेष्याय प्रहिणोति ताभिरेवैनं पराभावयति ॥ ३ ॥

"यास्ते अग्ने घोरा" इति [ख]पारक्षुद्रः । तेन द्वेष्यार्थमग्निं प्रस्थाप-यति । ताभिस्तनूभिर्घोराभिः । पराभावः सर्वनाशः, [1]क्वचिदप्यनव-स्थानं शत्रोः ॥ ३ ॥

अरण्येऽनुवाक्या भवन्ति ॥ ४ ॥

क. करकः पात्रविशेषः तस्य योऽधोभागः स्थापनस्थानं तदत्र पदशब्देनाभिधीयत इति तत्रैवाधानमिति । रुद्रदत्तस्तु–कमण्डलुशब्दो मृगविशेषवाची इत्यभ्युपगम्य भाष्य-कारमतं खण्डयति ।

ख. पारक्षुद्र इति तैत्तिरीयब्राह्मणस्य संज्ञा पूर्वाचार्याणाम् । अतश्चाधानब्राह्मणपठितेनाऽनेनैव मन्त्रेण सूत्रोपात्तेन प्रहिण्वनम , न त्वारण्यकमन्त्रेण ( तै. आ. ४. २३.) इति ।

1. B.2. Ms has नवस्थानलाभः शत्रुं पराभावयति instead of क्वचिदित्यादि

अरण्येऽनूच्यन्त इत्यरण्येऽनुवाक्या [क]घोराः । ताश्च वक्तव्या भवन्ति । अनुवाकद्वयमुभयत्र । उपदेशो न पारक्षुद्रः । केचिदेकमनुवाकमर्धं [1]गच्छान्तमिह । तथोत्तरमपरत्र ॥ ४ ॥

"यदिदं दिवो यददः पृथिव्यास्संविदाने रोदसी सम्बभूवतुः । तयोः पृष्ठे सीदतु जातवेदाश्शम्भूः प्रजाभ्यस्तनुवे स्योनः" इत्यभिमन्त्र्य पुरस्तात् प्रत्यङ् तिष्ठन्नाहवनीयमादधाति ॥ ५ ॥

अभिमन्त्रणं कृत्वा प्रत्यङ्मुखस्तिष्ठति पुरस्तादाहवनीयायतनस्य ॥ ५ ॥

बृहति गीयमाने श्यैतवारवन्तीययोर्यज्ञायज्ञीये च यथर्ष्याधानेन सर्वाभिर्व्याहृतीभिस्सर्वाभिस्सर्पराज्ञीभिस्तृतीयेन च घर्मशिरसा यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः । ताभिस्सम्भूय सगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्ने । अपानं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै । दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे । अग्ने संम्राडजैकपादाहवनीय दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय पृथिव्यास्त्वा मूर्धन्

क. यास्ते अग्ने घोराः स्निक्च स्नीहितिश्च ( तै. आ. ४. २३. २४. ) इत्यनुवाकद्वयम् । इदमनुवाकद्वयमपि अत्र, उत्तरत्र नितमने (आप. श्रौ. ९. १७. ८.) च पठनीयमिति । उपदेशमते तु—न ब्राह्मणोक्तस्य (शाखोक्तस्यात्र) पाठः सूत्रकारेण "यास्ते अग्ने घोरा" इत्युक्त्वा तस्य विशेषापेक्षायाम् 'अरण्येऽनुवाक्या भवन्ति' इति निर्देशादिति । केचित्तु—प्रथमस्येह पाठः 'यास्ते अग्न' इत्यस्य । द्वितीयस्योत्तरत्र नितमने स्निक्च स्नीहितिश्चेत्यस्य । अरण्येऽनुवाक्या भवन्ति इति सामान्यत एवोभयत्र श्रवणेऽप्येकत्र विनियुक्तस्यापरत्र विनियोगासम्भवेनैवमेव व्यवस्थापनीयत्वादिति ।

1. B. Ms. reads गच्छान्तमिच्छान्ति.

सादयामि यज्ञिये लोके। यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामि" इति सम्भारेषु निदधाति ॥ ६ ॥

इति पञ्चदशी कण्डिका

व्याहृत्यादिघर्मशिरोऽन्तमधर्युरुक्त्वा पश्चादाहवनीयाधानम् ॥६॥

"आनशे व्यानशे सर्वमायुर्व्यानशे। अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि। ममैव सन् वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेद" इत्याधीयमानमभिमन्त्रयते यजमानः ॥ १ ॥

व्याहृतीस्सर्पराज्ञीर्घर्मशिरांसीति सर्वेष्वाधानेषु यजमानोऽनुवर्तयते येन येनादधाति ॥

येन येन यजुषा यं यमग्निमादधाति स्थापयति ॥ २ ॥

नाहितमनभिहुतमग्निमुपस्पृशाति। आज्येनौषधीभिश्च शमयितव्यः ॥ ३ ॥

अकृतशमनो न स्प्रष्टव्यः। आज्येनौषधीभिश्च शमयितव्यः ॥ ३ ॥

या ते अग्ने पशुषु पवमाना प्रिया तनूर्या पृथिव्यां याऽग्नौ या रथन्तरे या गायत्रे छन्दसि तां त एतेनावयजे स्वाहा। या ते अग्नेऽप्सु पावका प्रिया तनूर्याऽन्तरिक्षे या वायौ या वामदेव्ये या त्रैष्टुभे छन्दसि तां त एतेनावयजे स्वाहा। या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि याऽऽदित्ये या बृहति या जागते छन्दसि तां त एतेनावयजे स्वाहा" इत्येतैः प्रतिमन्त्रमाज्यमोषधीश्च जुहोति ॥ ४ ॥

**समिध आदधातीत्येके ॥ ५ ॥**

[क]सर्वेष्वाधानेष्वाहुतित्रयेण । नाऽऽहवनीय एव । उपदेश एकैकया शमनम् । तृतीयया सभ्यावसथ्ययोरपि । बौधायनमतिश्च सर्वत्र शमनं व्याहृतीभिरग्नीन् शमयित्वेति । केचिद्दक्षिणाग्न्याहवनीययोरिदानीमेव कुर्वन्ति नास्त्यभिमर्शनेनार्थः पूर्वमिति ॥ ४-५ ॥

**ब्रह्माऽग्न्याधेये सामानि गायति ॥ ६ ॥**

**प्रतिषिद्धान्येकेषाम् ॥ ७ ॥**

**व्याहृतीभिरेवोद्गीथं भवतीति वाजसनेयकम् ॥ ८ ॥**

इति षोडशी कण्डिका

व्याहृतीभिरुद्गीथमुद्गानमध्वर्युणैव [ख]प्रयुज्यमानासु । केचित्तु—कल्पत्रयम्, प्रतिषेधादक्रिया साम्नाम् । क्रिया, वा । विधानात् । उद्गानकाल व्याहृतीभिर्गानम् । केचिदुच्चारणं ब्रह्मणः ॥ ६-८ ॥

इत्यापस्तम्बश्रौतसूत्रवृत्तौ धूर्तस्वामिकृतायां

पञ्चमस्य प्रश्नस्य चतुर्थः पटलः ॥

क. यद्यप्याहवनीयाधानानन्तरमेवेदमुक्तम्, तथापि अनभिहुतस्य स्पर्शनिषेधस्य सर्वसाधारणत्वेन सर्वत्रैवास्य प्रवृत्तेः शमनहोमाख्यमाहुतित्रयमिदं सर्वेष्वप्यग्निषु कर्तव्यम्, नाहवनीयमात्र इति । उपदेशमतन्तु—प्रथमेन गार्हपत्यस्य, द्वितीयेन दक्षिणाग्नेः, तृतीयेनाऽऽहवनीयस्य, तृतीयेनैव च सभ्यावसथ्ययोश्शमनहोमः । अग्निपृथिवीगायत्रीणां प्रथममन्त्रोक्तानां गार्हपत्येन, वाय्वन्तरिक्षत्रिष्टुभां द्वितीयमन्त्रोक्तानां दक्षिणाग्निना, आदित्यद्युजगतीनामाहवनीयेन च सह सम्बन्धावगतेरिति ।

ख. व्याहृतिप्रयोगकाले गानविशिष्टास्ताः प्रयोक्तव्याः । तत्र चाध्वर्युरेव कर्ता, कर्त्रन्तरानुपादानादिति । केचित्तु कल्पत्रयमत्र मन्यन्ते—"रुदन्ति ह वा अस्याग्नयो यस्याग्न्याधेये सामानि गायन्ति" इत्यादिना गानप्रतिषेधश्रवणादकरणमित्येकः पक्षः । 'रथन्तरमभिगायत आहवनीय आधीयमाने' इति विधानात् करणमिति द्वितीयः । उद्गानविधानात् उद्गानकाले व्याहृतिभिर्गानमिति तृतीयः कल्पः । केचित्तु व्याहृतीनामुच्चारणमेव, न तु गानमित्यभिप्रयन्ति इति ।

## पञ्चमः पटलः

ततस्सभ्यावसथ्यावादधाति लौकिकमग्निमाहृत्य मथित्वाऽऽहवनीयाद्वा यथर्ष्याधानेन ॥ १ ॥

[क]विकल्पेनाधानं सभ्यावसथ्ययोः हिरण्यकेशिवचनात्–'प्रतिषिद्धौ सभ्यावसथ्यावेकेषाम्' इति । [ख]गार्हपत्यादपि दक्षिणाग्नेराधानं यत् त्रेधाग्निराधीयत इति । आश्वलायनश्चैकयोनय इति । [ग]'यत्त्रेधाग्निराधीयत' इत्येतदेवाग्नित्रि[1]त्वस्य विधायकम् । [2]अन्यत्राऽविधानात् अनुवादस्वरूपो

क. हिरण्यकेशिना 'लौकिकाग्निमाहृत्य मथित्वाऽऽहवनीयाद्वा सभ्यावसथ्यावादधाति' इति सभ्यावसथ्ययोराधानं विधाय, ततः 'प्रतिषिद्धौ सभ्यावसथ्यावेकेषाम्' इत्युक्तत्वात् तन्मते विकल्पस्सिध्यतीति ।

ख. "तस्य त्रेधा महिमानं व्यौहत्" इत्यर्थवादपूर्वकं "यत् त्रेधाग्निराधीयते" ( तै. ब्रा.- १. १. ९. ७. ) इति विधानात् तेन चैकस्मादेव गार्हपत्यादग्निं प्रणीय तं त्रेधा विभज्य त्रिष्वप्यायतनेषु विधानमवगम्यते । आश्वलायनोऽपि त्रयाणामेकयोनित्वं विदधाति । अतो गार्हपत्यादपि दक्षिणाग्नेराधानं सिध्यतीति ।

ग. शाखान्तरेऽग्नित्रित्वस्य विधानादत्रापि "यत् त्रेधाग्निराधीयते" इत्यनुवादस्वरूपो विधिरित्यङ्गीक्रियते । तेन चाग्नित्रयस्यैवाधानं सिध्यति । अत एवास्माकं ब्राह्मणे त्रयाणामेवाधानमुक्त्वा "त्रीणि हवींषि निर्वपति" ( तै. ब्रा. १. १. ९. ८. ) इति पवमानेष्टय उक्ताः । तत्रैवान्तिमेऽनुवाके–"पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टा, यदग्निराधीयते, तस्मादेतावन्तोऽग्नय आधीयन्ते" इति पञ्चत्वस्तुतिपूर्वकं प्रवृत्तेन नित्यानुवादस्वरूपेणाऽनेन विधिनाऽग्निपञ्चकाधानं विधीयते । अतश्च त्रैवर्णिकानामग्नित्रित्वपञ्चत्वयोर्विकल्प इति । "पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टा" इत्यत्र ब्राह्मणग्रहणं मुख्यत्वख्यापनद्वारा त्रैवर्णिकोपलक्षणार्थम् "जायमानो वै ब्राह्मणः" इत्यादाविव । अत एव च सभामध्ये कर्तव्योऽधिदेवनहोमो राजन्यस्य विधीयते–'निषसाद धृतव्रतो वरुण इति मध्येऽधिदेवनस्य जुहोति' ( आप. श्रौ. ५. १९. २. ) इति । अतस्त्रयाणामपि वर्णानां पञ्चाग्निविधानम । अथवा "पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टा" इत्यत्राकारप्रश्लेषः क्रियते । अब्राह्मणे राजन्यवैश्ययोरित्यर्थः । अनेन राजन्यवैश्ययोरग्निपञ्चकं विधीयते । एवं च सति ब्राह्मणस्य पूर्वविधिनैतद्विधिना च क्षत्रियवैश्ययोश्चाग्निपञ्चकं प्राप्तम् । तत्र ब्राह्मणस्य जनसमुदायरूपसभाया अभावात् कथं सङ्गतिरित्याशङ्कायां "पशवः खलु वै ब्राह्मणस्य सभा" ( तै. सं. १. ७. ६. ७. ) इति नात्र राज्ञ इवामात्यभटरूपा सभा ब्राह्मणस्योचिता, किं तर्हि ? यज्ञनिष्पादकाः द्विपादश्चतुष्पादश्च पशवोऽस्य सभा इति पशुभिस्सभानुग्रहदर्शनमुपपद्यत इति ।

1. 'ब' 'घ' 'ङ' read अग्नित्रयस्य.
2. 'क' reads विधायकं वाक्यमन्यत्रापि.

विधिः। यथा-"यन्नेनाश्वालभेत वायव्यस्य शिर उपदध्यात्" इति। अतश्च अयागामेवाधानमुक्त्वा इष्टय उक्ता अस्माकम्। उत्तमेऽनुवाके तु पश्चानामाधाने नित्यानुवादस्वरूपेण—तस्मादेतावन्तोऽग्नय आधीयन्त इति ब्राह्मणेनेत्यतो विकल्पः। मुख्येन प्रदर्शनं ब्राह्मणेन। अतस्सर्ववर्णानामपि पश्चत्वम्, अधिदेवने राजन्यस्य होमदर्शनात्। [1]एवं वा पश्चत्वमुपपद्यतेऽब्राह्मणे प्रविष्टेति। तथा सति सभाभावात् ब्राह्मणस्य "पशवः खलु वै ब्राह्मणस्य सभा" इति लिङ्गात् सभानुग्रहश्चोपपद्यते। ब्राह्मणस्य जनसभाया अभावात्। राजा हि सेव्यते सर्ववर्णैः। शाला तु विद्यते सभ्यस्थानं ब्राह्मणादीनाम्। यथर्ष्याधानेनाधाय सभ्यशमनं कर्तव्यम्। तथाऽऽवसथ्यमपि। [क]पुनः पुनः कर्माणि [3]सैवैतयोर्योनिः। अनुगतयोश्च। पूर्वोत्पन्नान्यपि प्रायश्चित्तान्यग्न्यभावाच्च न [4]कृतानि। तेषां पूर्णाहुत्यनन्तरं [ख]क्रियेत्युपदेशः[5]। न तु तत्, [6]अनन्तरं दोषात्कर्तव्यानि [7]प्रायश्चित्तानि यत्सम्भवन्ति,। अतोऽनाज्ञातमन्तरितं वा यत्रान्तरायः। ब्राह्मौदनिकेऽपि सर्वप्रायश्चित्तानाज्ञातादि दाक्षिणाग्नौ उत्पन्ने "भुव" इति। अनुत्पन्ने [8]त्वनाज्ञातजप एव। गार्हपत्यादिसम्बद्धा व्याहृतयः। न ता अन्यस्मिन्नग्नौ ॥ १ ॥

क. तयोः पुनः पुनराधानेऽनुगतौ च यस्या योनेरनयोः प्राथमिकी उत्पत्तिः तस्या एवोत्पादनम्।

ख. प्रायश्चित्ताहुतीनामाहवनीयाद्यग्निष्वेव कर्तव्यताविधानात् पूर्णाहुतिपर्यन्तत्वादाधानस्य तदनन्तरमेव चाऽऽहवनीयत्वादिसिद्धेस्ततः परमेव तानि कर्तव्यानीत्युपदेशमतम्। तन्न युक्तम्; दोषोत्पत्यनन्तरमेव तत्समाधानार्थं प्रायश्चित्तानामनुष्ठेयत्वात्। अतो दोषोत्पत्तिसमनन्तरमेवानाज्ञातमन्त्रत्रयजपः। यत्रान्तरायस्तत्रान्तरायजप इति।

1. B. Ms. reads एवञ्च for एवं वा.
2. 'घ' 'ङ' read समनम्.
3. B. Ms. reads सैवत्वेतयोः; O. M. reads यैवैतयोः
4. 'घ' reads न करोति.
5. 'घ' 'ब' read क्रियेत्युपदेशः
6. 'ङ' reads नतु तदनन्तरम्.
7. 'घ' 'ङ' read प्रायश्चित्तानि कर्तव्यानि.
8. 'क' Omits तु.

[1]अग्न आयूंषि पवसे [2]अग्ने पवस्व स्वपाः । "अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम्" इति तिस्र आश्वत्थ्यस्समिध एकैकस्मिन्नादधाति । आहवनीये वा तिस्रः ॥ २ ॥

साधनभेदात्क्रियाभेदः [क]समित्सु । अतः प्रत्यृचं समिदाधानं [1]सूत्रकारेणानुबद्धम् । समित्त्रयेण पञ्चानामनुसमयः समित्त्रयस्यैकजानीयत्वात् पवनमानदेवतैकत्वाच्च संस्कारैकत्वमिति । केचिदेकैकयानुसमयः, समित्सु क्रियाभेदात् ॥ २ ॥

"समुद्रादूर्मिर्मधुमाꣳ उदारदुपाꣳशुना सममृत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः । वयं नाम प्रब्रवामा घृतेनाऽस्मिन् यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् । चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याꣳ आविवेश" इति शमीमय्यौ घृतान्व-

क. समिद्भेदादेकैकक्रियायां मन्त्रबहुत्वस्याऽदृष्टार्थत्वप्रसङ्गात् तिसृभिस्तिसृभिरिति समस्तविनियोगाभावादेकैकयर्चा एकैका समिदाधेया । एवं तिस्रस्तिस्रस्समिधो गार्हपत्ये । एवमेवैकैकयर्चा एकैकेति दक्षिणाग्न्यादिषु चतुर्ष्वप्यग्निषु समिध आधेयाः । अतश्च गार्हपत्ये समित्त्रयाधानं कृत्वा ततो दक्षिणाग्नौ समित्त्रयाधानम्, तत आहवनीयादाविति । केचित्तु—प्रथमां समिधं गार्हपत्यादिषु पञ्चस्वाधाय ततो द्वितीयां समिधं, तथैव तृतीयामित्येकैकयाऽनुष्ठानमिच्छन्ति । स एवैकैकयानुसमयः ।

1. O. M. reads सूत्रकारैश्चानुबद्धम्.

१. अग्न आयूꣳषि पवस आसुर्वोर्ज मिषं चनः । आरे बाधस्व दुच्छुनाम् ॥

२. अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् । तदस्मोषꣳ रयिं मयि ॥ (तै. सं. १. ६. ६. ३.)

विधिः। यथा-"यद्येनाग्नालभेत वायव्यस्य शिर उपदध्यात्" इति। अनश्च त्रयाणामेवाधानमुक्त्वा इष्टय उक्ता अस्माकम्। उत्तमेऽनुवाके तु पञ्चानामाधानं नित्यानुवादस्वरूपेण—तस्मादेतावन्तोऽग्नय आधीयन्त इति ब्राह्मणेनेत्यनो विकल्पः। मुख्येन प्रदर्शनं ब्राह्मणेन। अतस्सर्ववर्णानामपि पञ्चत्वम्, अधिदेवने राजन्यस्य होमदर्शनात्। [1]एवं वा पञ्चत्वमुपपद्यतेऽब्राह्मणे प्रविष्टेति। तथा सति सभाभावात् ब्राह्मणस्य "पशवः खलु वै ब्राह्मणस्य सभा" इति लिङ्गात् सभानुग्रहश्चोपपद्यते। ब्राह्मणस्य जनसभाया अभावात्। राजा हि सेव्यते सर्ववर्णैः। शाला तु विद्यते सभ्यस्थानं ब्राह्मणादीनाम्। यथर्ष्याधानेनाधाय सभ्यशमनं कर्तव्यम्। तथाऽऽवसथ्यमपि। [क]पुनः पुनः कर्माणि [3]सैवैतयोर्योनिः। अनुगतयोश्च। पूर्वोत्पन्नान्यपि प्रायश्चित्तान्यग्न्यभावाच्च न [4]कृतानि। तेषां पूर्णाहुत्यनन्तरं [ख]क्रियेत्युपदेशः[5]। न तु तत्, [6]अनन्तरं दोषात्कर्तव्यानि [7]प्रायश्चित्तानि यत्सम्भवन्ति,। अतोऽनाज्ञातमन्तरितं वा यत्रान्तरायः। ब्राह्मौदनिकेऽपि सर्वप्रायश्चित्तानाज्ञातादि दाक्षिणाग्नौ उत्पन्ने "भुव" इति। अनुत्पन्ने [8]त्वनाज्ञातजप एव। गार्हपत्यादिसम्बद्धा व्याहृतयः। न ता अन्यस्मिन्नग्नौ ॥ १ ॥

क. तयोः पुनः पुनराधानेऽनुगतौ च यस्या योनेरनयोः प्राथमिकी उत्पत्तिः तस्या एवोत्पादनम्।

ख. प्रायश्चित्ताहुतीनामाहवनीयाद्यग्निष्वेव कर्तव्यताविधानात् पूर्णाहुतिपर्यन्तत्वादाधानस्य तदनन्तरमेव चाऽऽहवनीयत्वादिसिद्धेस्ततः परमेव तानि कर्तव्यानीत्युपदेशमतम्। तन्न युक्तम्; दोषोत्पत्त्यनन्तरमेव तत्समाधानार्थं प्रायश्चित्तानामनुष्ठेयत्वात्। अतो दोषोत्पत्तिसमनन्तरमेवानाज्ञातमन्त्रत्रयजपः। यत्रान्तरायस्तत्रान्तरायजप इति।

1. B. Ms. reads एवञ्च for एवं वा.
2. 'घ' 'ङ' read समनम.
3. B. Ms. reads सैवत्वेतयोः; O. M. reads यैवैतयोः
4. 'घ' reads न करोति.
5. 'घ' 'ब' read क्रियेत्युपदेशः
6. 'ङ' reads नतु तदनन्तरम्.
7. 'घ' 'ङ' read प्रायश्चित्तानि कर्तव्यानि.
8. 'क' Omits तु.

[1]अग्न आयूंषि पवसे [2]अग्ने पवस्व स्वपाः । "अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम्" इति तिस्र आश्वत्थ्यस्समिध एकैकस्मिन्नादधाति । आहवनीये वा तिस्रः ॥ २ ॥

साधनभेदात्क्रियाभेदः [क]समित्सु । अतः प्रत्येकं समिदाधानं [1]सूत्रकारेणानुबद्धम् । समित्त्रयेण पञ्चानामनुसमयः समित्त्रयस्यैकजातीयत्वात् पवनमानदेवनैकत्वाच्च संस्कारैकत्वमिति । केचिदेकैकयानुसमयः, समित्सु क्रियाभेदात् ॥ २ ॥

"समुद्रादूर्मिर्मधुमाꣳ उदारदुपाꣳशुना सममृत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः । वयं नाम प्रब्रवामा घृतेनाऽस्मिन् यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् । चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याꣳ आविवेश" इति शमीमय्यो घृतान्व-

क. समिद्भेदादेकैकक्रियायां मन्त्रबहुत्वस्याऽदृष्टार्थत्वप्रसङ्गात् तिसृभिस्तिसृभिरिति समस्तविनियोगाभावादेकैकयर्चा एकैका समिदाधेया । एवं तिस्रस्तिस्रस्समिधो गार्हपत्ये । एवमेवैकैकयर्चा एकैकेति दक्षिणाग्न्यादिषु चतुर्ष्वप्यग्निषु समिध आधेयाः । अतश्च गार्हपत्ये समित्त्रयाधानं कृत्वा ततो दक्षिणाग्नौ समित्त्रयाधानम्, तत आहवनीयादाविति । केचित्तु—प्रथमां समिधं गार्हपत्यादिषु पञ्चस्वाधाय ततो द्वितीयां समिधं, तथैव तृतीयामित्येकैकयाऽनुष्ठानमिच्छन्ति । स एवैकैकयानुसमयः ।

1. O. M. reads सूत्रकारैश्चानुबद्धम्.

१. अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥

२. अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् । तदत्वोषꣳ रयिं मयि ॥ (तै. सं. १. ६. ६. ३.)

रक्तास्तिसृभिस्तिस्रः एकैकस्मिन् आदधाति। आहवनीये वा तिस्रः ॥ ३ ॥

[1]न घृतान्वक्ता आश्वत्थ्यः। मूलादारभ्याग्रात् अक्ताः अन्वक्ताः। शमीमय्यः मन्त्रलिङ्गात्। तिसृभिरिति ऋक्परिज्ञानार्थम्। गार्हपत्ये तिस्र आधाय [2]शमीमयीरितरेष्वपि तिस्रस्तिस्र आदधाति ॥ ३ ॥

एवं नानावृक्षीयाः। "[1]प्रेद्धो अग्ने दीदिहि पुरो न" इत्यौदुम्बरीं समिधमादधाति। "[2]विधेम ते परमे जन्मन्नग्ने" इति वैकङ्कतीम्। "[3]ता॑ँ सवितुर्वरेण्यस्य चित्रा"मिति शमीमयीम् ॥ ४ ॥

एवमिति वचनान्नानावृक्षीया अपि घृतान्वक्ता जातिभिन्ना अपि तिसृभिस्तिस्र एकैकस्मिन्नाधीयन्ते। [क]पुनस्समिद्वचनात्प्र[3]कृष्टमिन्धनं याः कुर्वन्ति शुष्कास्ता आधीयन्ते ॥ ४ ॥

ततस्तूष्णीमग्निहोत्रं जुहोति ॥ ५ ॥

क. प्रकृतत्वादेव समिधस्सिद्धेः पुनस्समिद्ग्रहणमग्निसमिन्धनसमर्थानामेव समिधां अर्थाच्छुष्काणामेवाऽऽधानम्, नाऽऽर्द्राणाम्। शुष्काणामलाभेऽन्येषामेव यज्ञियकाष्ठानामाधानम् अर्थद्रव्यविरोधेऽर्थो बलवान् (जै. सू. ६. ३. ३९.) इति न्यायादिति। अर्थः प्रयोजनम्।

1. O. Ms. omits न.
2. B. Ms. reads शमीमय्यः। एवमिति वचनादितरेष्वपि.
3. 'घ' 'ब' read समिद्वचनाच्च.

१. प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ। त्वा॑ँ शश्वन्त उपयन्ति वाजाः। ( तै. सं. ४-६-५-४. )

२. विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे। यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवी॑ँषि जुहुरे समिद्धे ॥

३. ता॑ँ सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम्। यामस्य कण्वो अदुहत्प्रपीना॑ँ सहस्रधारां पयसा महीं गाम् ॥

तूष्णीमग्निहोत्रे पूर्वाहुतिरेव तूष्णीम्, अन्यत्सर्वं मन्त्रवत्। [1]सर्वं [क]तूष्णीमित्यन्यत्र वचनादिति। [ख]विकृतौ चोद्यमानो धर्मः प्रधानार्थो भवतीति। यथा "सप्त ते अग्ने" इति पुनराधेये पूर्वाहुतिरेव, प्रातर्होमविकारश्च। 'अयथापूर्वमाहुती जुहोती'ति लिङ्गात्। आदित्यायाग्निं गृह्णामीति ऊर्जे त्वेत्यूर्ध्वमित्येवमादि कार्यम्। आग्नेयस्तु होमः "अग्निः पराभवेदि"ति लिङ्गात्। अत आग्नेयश्हविरित्येव। केचिदनिर्दिष्टदेवताकत्वात् सौर्यं हविरित्येव होमः। इध्माधानादि सर्वं तूष्णीमित्युपदेशः, बौधायनमतिश्च। अकाम्यत्वाच्च पयसा होमः॥

क. मृताग्निहोत्रे 'सर्वं तूष्णीं क्रियेत' (आप. श्रौ. ९. ११. ७.) इति सर्वशब्दग्रहणात् इदमवगम्यते—यत्र सर्वशब्दग्रहणं तत्रैव तूष्णीं सर्वानुष्ठानम्, प्रकृते तु तथाऽभावात् अग्निदेवताकायाः प्रथमाहुतेरेव तूष्णीमनुष्ठानम्, अन्यत्सर्वं समन्त्रकमिति।

ख. विकृतिसन्निधौ विधीयमानो धर्मः प्राकृतान् धर्मान् बाधेन, विशेषविहितत्वात्। तत्र यावतां बाधेनाऽऽत्मलाभस्स्यात् तावतो बाधेत, न सर्वान्। अतश्च तस्य प्रधानमात्रार्थत्वेनाप्युपपत्तौ सर्वबाधे प्रमाणाभावः। यथा—पुनराधेयप्रकरणे "सप्त ते अग्ने समिधस्सप्त जिह्वा इत्यग्निहोत्रं जुहोति" (आप. श्रौ. पृ. २७. १४.) इत्यत्रापि प्रथमाहुतिरेव मन्त्रवती कार्या। एवं प्रातर्होमविकारत्वं चास्या आहुतेः। तदानीमेव 'अयथापूर्वमाहुती जुहोति' इति लिङ्गमुपपद्येत। तथाहि—अस्मिन्नेव प्रकरणे "होतव्यमग्निहोत्रा ३ न होतव्या" ३ मिति सन्देहमुपक्षिप्य "यद्यजुषा जुहुयात् अयथापूर्वमाहुती जुहुयात्, यन्न जुहुयात् अग्निः पराभवेत् तूष्णीमेव होतव्यम्, यथापूर्वमाहुती जुहोति; नाग्निः पराभवति" (तै. ब्रा. १. १. ६) इत्युक्तम। अस्यायमर्थः—अस्मिन् कालेऽग्निहोत्रं कर्तव्यं न वेति संशयः। यदि मन्त्रेण होमः क्रियेत तर्हि अहनि क्रियमाणेऽस्मिन् होमे "सूर्यो ज्योतिः" इति प्रातःकालिकहोममन्त्रः प्रसज्येत। ततश्चास्य प्रातर्होमत्वापत्त्या प्रातरुपक्रमे नित्यवैपरीत्यं स्यात्। नित्याग्निहोत्रस्य सायमेवोपक्रमात्। अतोऽयथापूर्वत्वम। यदि तु होम एव न क्रियेत तर्हि आधानजन्याग्नेराहाराभावात् पराभवस्स्यात्। अतो मन्त्रं विना होमः कर्तव्यः। तदा दोषद्वयमपि परिहियेतेति। एवञ्च प्रातर्होम एव मन्त्रपरित्यागे कृते प्रातर्होमत्वं नाभिव्यज्यत इति तूष्णीं होमप्रशंसा सिध्यति। अनेन प्रातर्होमस्यैवायं विकारभूत इति प्रतीयत इति। "आदित्यायाऽग्निं गृह्णामि रात्रिया अहः" इति प्रातः' (आप. श्रौ. ६. ९. ६.) इति विहितो जपः, 'ऊर्जे त्वेत्यूर्ध्वं प्रातः' (आप. श्रौ. ६. १०. १०.) इति विहितं लेपमार्जनञ्च प्रातर्होमीयमेव कुर्यादिति। देवता त्वग्निरेव न सूर्यः। अकरणे अग्निपराभवस्यैव श्रवणादिति। अतः स्रुगाचमनमन्त्रः 'आग्नेयश्हविः प्रजननं मे अस्तु" (आप. श्रौ. ६. ११. पू.) इत्येव, न सौर्यमिति मन्त्रसन्नमनमिति।

1. B. Ms. reads सर्वत्र तूष्णीम्

अपि वा द्वादशगृहीतेन स्रुचं पूरयित्वा प्रजापतिं मनसा ध्यायन् जुहोति। साऽग्निहोत्रस्य स्थाने भवति ॥६॥

साङ्गस्य स्थाने पूर्णाहुतिः प्रजापतये स्वाहेति मनसा ॥ ६ ॥

"यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छे"ति यजमानो द्वेष्याय प्रहिणोति ताभिरेवैनं नितमयति अरण्येऽनुवाक्या भवन्ति ॥ ७ ॥

इति सप्तदशी कण्डिका

नितमयति निरुच्छ्वासं करोति ॥ ७ ॥

द्वादशगृहीतेन स्रुचं पूरयित्वा[1] "सप्त ते अग्ने समिधस्सप्त जिह्वा" इति सप्तवत्या पूर्णाहुतिं जुहोति। हुतायां यजमानो वरं दत्वा शिवा जपति। "ये अग्नयो दिवो ये पृथिव्यास्समागच्छन्तीषमूर्जं दुहानाः। ते अस्मा अग्नयो द्रविणं दत्वेष्टाः प्रीता आहुतिभाजो भूत्वा यथा लोकं पुनरस्तं परेत स्वाहा" इति जुहोति ॥ १ ॥

सप्तवत्येति ज्ञानार्थम्। पूर्णाहुत्यङ्गं शिवाजपान्तमग्न्याधेयम्, हुतायामिति तदङ्गत्वेन निर्देशात् ॥ १ ॥

अथ विराड्भिर्यजमान उपतिष्ठते—"अथर्व पितुं मे गोपायान्नं प्राणेन सम्मितम्। त्वया गुप्ता इषमूर्जं मदन्तो रायस्पोषेण समिषा मदेम" इत्यन्वाहार्यपचनम्। "नर्य प्रजां मे गोपाय मूलं लोकस्य सन्ततिम्। आत्मनो

१. सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्तधाम प्रियाणि। सप्त होत्रास्सप्तधा त्वा यजन्ति सप्तयोनीरा पृणस्वा घृतेन ॥ (तै. १-५-३-२)

हृदयान्निर्मितां तां ते परिददाम्यहम्" इति गार्हपत्यम् । "शꣳस्य पशून् मे गोपाय विश्वरूपं धनं वसु । गृहाणां पुष्टिमानन्दं ताꣳस्ते परिददाम्यहम्" इत्याहवनीयम् । "सप्रथ सभां मे गोपायेन्द्रियं भूतिवर्द्धनम् । विश्वजनस्य छायां तान्ते परिददाम्यहम्" इति सभ्यम् । "अहे बुध्निय मन्त्रं मे गोपाय श्रियञ्च यशसा सह । अहये बुध्नियाय मन्त्रꣳ श्रियं यशः परिददाम्यहम्" इत्यावसथ्यम् । "पञ्चधाऽग्नीन् व्यक्रामद्विराट् सृष्टा प्रजापतेः । ऊर्ध्वा रोहद्रोहिणी योनिरग्नेः प्रतिष्ठिति"रिति सर्वान् ॥ २ ॥

इत्यष्टादशी कण्डिका

विराट्क्रमेभ्योऽनन्तरम् अधिदेवनोद्धननादि निषसादद्धोमान्तं राजन्यस्यैवाऽग्निपञ्चत्वे । त्रित्वेऽपि [क]पञ्चधाऽग्नीनित्युपस्थानम्, विराजोऽभिधानात् । [ख]पारक्षुद्रा अपि विराट्क्रमा विकल्पेन [1]लभ्यन्ते मा भूदनर्थकः पाठ इति, समानार्थत्वादिति ॥ २ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

पञ्चमप्रश्ने पञ्चमः पटलः

क. अनेन मन्त्रेण नाग्नीनां प्रकाशनम्, किन्तु विराट्संज्ञकाया गोदेवतायाः । अतोऽसमवेतत्वात् पञ्चधा इत्येवाऽविकृतो मन्त्रपाठ इति ।

ख. अत्र विराडुपस्थानार्थं सूत्रकारेण शाखान्तरीया एव मन्त्राः पठिताः, तथाप्यस्मच्छाखापठितानामपि मन्त्राणां "नर्य प्रजां मे गोपायामृतत्वाय जीवसे । जातान् जनिष्यमाणाꣳश्चामृते सत्ये प्रतिष्ठिताम् ॥ १ ॥ अथर्व पितुं मे गोपाय रसमन्नमिहायुषे । अदब्धायोऽशीततनोऽविषन्नः पितुं कृणु ॥ २ ॥ शꣳस्य पशून् मे गोपाय द्विपादो ये चतुष्पदः । अष्टाशफाश्च य इहाग्ने ये चैकशफा आशुगाः ॥ ३ ॥ सप्रथ सभां मे गोपाय ये च सभ्यास्सभासदः । तानिन्द्रियावतः कुरु सर्वमायुरुपासताम् ॥ ४ ॥ अथर्व पिर्तुं मे गोपाय यमृषयस्त्रैविदा विदुः । ऋचस्सामानि यजूꣳषि सा हि श्रीरमृता सताम् ॥ ५ ॥ इति पञ्चानां गार्हपत्यादिषु पञ्चस्वग्निषु विकल्पेन प्राप्तिरस्त्येव । अन्यथाऽऽधानप्रकरणे एषां पाठो व्यर्थस्स्यात् । अर्थाऽप्युभयेषां समान एवेति ।

1. B. Ms. adds गार्हपत्यादयः before लभ्यन्ते.

## षष्ठः पटलः

आग्नेयस्याऽष्टाकपालस्य तन्त्रं प्रक्रमयति ॥ १ ॥

निरुप्तं हविरुपसन्नमप्रोक्षितं भवति । अथ सभाया मध्येऽधिदेवनमुद्धत्याऽवोक्ष्याऽक्षान्युप्याऽक्षेषु हिरण्यं निधाय समूह्य व्यूह्य प्रथयित्वा "निषसाद धृतव्रत" इति मध्येऽधिदेवने राजन्यस्य जुहोति ॥ २ ॥

अप्रोक्षितमिति सिद्धे गुरूकरणान्निर्वापाङ्गमुपसादनम् । अतः "[क]साकं सूर्येणोद्यता" इत्युपसादनान्तं क्रियते । [ख]केचिन्निरुप्तं हविरिदं देवानामिति कृते उपसादनान्ते,[1]अकृते वा प्रोक्षणीसंस्कारे [2]उद्धननादेः कालत्रयनिर्देशार्थं गुरूकरणमिति । तदा तु प्रोक्षणादिकर्मेत्येकं पक्षमाश्रित्योच्यते । द्यूतस्थानमधिदेवनम् । उद्धननं खननम् । अवोक्षणमवाङ्मुखेन हस्तेन । अक्षा विभीतकाः । समूहनम् एकीकरणम् । हिरण्यस्यो[3]परिष्टाद्व्यूहनम् । प्रसारणं प्रथनम् यथा अन्योन्यस्योपरि न तिष्ठन्ति । अधिदेवनमध्ये हिरण्ये होमो राजन्यस्यैव ॥ २ ॥

आवसथे परिषदो मध्ये हिरण्यं निधाय मन्त्रवत्या हिरण्ये जुहोति "प्रनूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।

क. साकमेधपर्वणि " अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकं सूर्येणोद्यता " (आ. श्रौ. ८. ९. २.) इति विहितेऽनीकवतीनिर्वापे उपसादनान्तमुदयकाल एव क्रियेतेति ।

ख. केचित्तु–"इदं देवानाम् इदमु नस्सह" इति निरुप्तेष्वन्वोप्येति निरुप्तान्वावापानन्तरम्, उपसादनानन्तरं वा प्रोक्षणीसंस्कारात्पूर्वं वा उद्धननादिकं कर्तव्यमित्येतदर्थं गुरुकरणमित्याहुः ।

1. B. Ms. adds अकृते before वा.
2. B. & O. Mss. read उद्धननादिकर्तव्यमिति विकल्पमाहुः । But it seems the portion commentary of Ramandar has been written by mistake.
3. B. Ms. reads उपरिष्टादध्यूहनम्.

१. निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुः । ( तै. सं. १-८-१६-१ ).

यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकाꣳसि चक्रिरे” इति ॥ ३ ॥

आवसथो यत्राऽतिथीनां निवासः । परिषत् जनाः आधानप्रेक्षकाः । मन्त्रवत्येति ज्ञानार्थमध्वर्युयजमानयोः ॥ ३ ॥[1]

“उत नोऽहिर्बुध्नियश्शृणोत्वज एकपात्पृथिवी समुद्रः । विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु नः” इत्युक्त्वा शतमक्षान् यजमानाय प्रयच्छन्नाह व्रीहिभ्यो गां दीव्यताऽहिꣳसन्तः परूꣳषि विशसतेति ॥ ४ ॥

सम्प्रैषवत्कुर्वन्ति ॥ ५ ॥

इत्येकोनविंशी कण्डिका

परूंषि पर्वाणि । विशसत विभजत । अहिंसन्तः कितवाः । पर्वाणि परिगृह्णन्तु—ममेदं तवेदमिति ॥ ५ ॥

कृतं यजमानो विजिनाति ॥ १ ॥

तथा क्रियते यथाक्षाणि विजिनाति [क]कृतेन येन यजमानः ।

तया यज्ञयन्ति तदन्नं संस्कृत्य सभासभ्य उपहरति ॥ आवसथे भुञ्जते ॥ २ ॥

तया च क्रीत्वा व्रीहीन् व्रीह्योदनः सभासभ्य उपहर्तव्यः । उद्धननादि भोजनान्तं सभ्यावसथ्याङ्गम् “यत्सभायां विजयन्ते” “यदावसथेऽन्नꣳहरन्ति” इति लिङ्गात् ॥

क. कृतम्, त्रेता, द्वापरः, कलिरिति द्यूतस्य चत्वारः प्रकाराः । तत्राक्षनिवापानन्तरं तेषु चतुर्धा विभज्यमानेषु यत्र सर्वे भागास्समाः तत् कृतमित्युच्यते । यत्र त्रयोऽवशिष्यन्ते सा त्रेता । यत्र द्वौ स द्वापरः । यत्रैकः स कलिः । तत्र प्रथमं पर्व गृहीत्वा जितवानस्मि ति यजमानस्तत्पणभूतां गां गृहीत्वा तां च विक्रीय तल्लब्धैर्व्रीहिभिस्तण्डुलनिष्पादनद्वारा ओदनं सम्पाद्याऽऽधानप्रेक्षकेभ्यस्सभासभ्य उपहरेदिति ।

1. An. Ms. adds. व्रीहिभ्यो गां दीव्यताऽहिंसन्तः परूंषि विशसतेति सम्प्रैषमाहाक्षान्यजमानाय प्रयच्छन्.

**क्लृप्तिसामनसीभ्यामग्नीन् यजमान उपतिष्ठते 'कल्पेतां द्यावापृथिवी', 'ये ऽग्नयस्समनस' इति ॥ ३ ॥**

[1]अग्निचित्त्वे उपसादनान्ते [क]क्लृप्तिसामनसीभ्यामुपस्थानम्। सर्वत्र नामधेयोपदेशो [2]मन्त्रपरिज्ञानार्थम्। '[ख]वासन्तिकावृतू, ग्रैष्मावृतू' इति यथर्तु सन्नामो मन्त्रस्य, हिरण्यकेशिमतात्। [ग]इष्टिर्विद्युदादिपरितोषणान्ता। आहवनीयस्त्वाश्वपादिक एव, अग्निसंस्कारस्याऽपरिसमाप्तत्वात् ॥ ३॥

**[3]प्रोक्षादि कर्म प्रतिपद्यते ॥ ४ ॥**

**आग्नेयस्य दक्षिणाकाले दक्षिणा ददाति ॥ ५ ॥**

अग्न्याधेयस्य दक्षिणा आग्नेयस्य दक्षिणाकाले दीयन्ते। [घ]तस्मान्नान्वाहार्यधर्मो दक्षिणानाम्। न वाऽऽग्नेयस्यान्वाहार्यः। ताभिरेव परिक्रयसिद्धेः, समानकालत्वात्। यथा गृहस्थनिमित्तः प्रदीपः कृतः पुत्राणामपि

क. "कल्पेतां द्यावापृथिवी" (तै. सं. ४-४-११-१.) इति क्लृप्तिः। "येऽग्नयस्समनसः" (तै. सं. ४-४-११-१.) इतिसामनसी।

ख. यद्यपि "ये ऽग्नयः" इति मन्त्रे 'वासन्तिकावृतू' इत्येव पठितम्, तथापि यस्मिन्नृतौ अग्न्याधानं क्रियते तदृतुबोधकः शब्दोऽत्र प्रयोक्तव्यः—वासन्तिकावृतू, ग्रैष्मावृतू, शैशिरावृतू इत्यादिः। हिरण्यकेशिना "कल्पेतां द्यावापृथिवी ये ऽग्नयः" इति यथर्तु क्लृप्तिसामनसीभ्यामग्नीनुपतिष्ठते' (स. श्रौ. ३. ९. ९.) इति यथर्तु सन्नामस्य विधानादिति।

ग. परितोषणं ब्राह्मणतर्पणम्। अत्राहवनीयो गौण एवाऽश्वपदादाहितोऽग्निर्ग्राह्यः। अद्य-यावन्मुख्याहवनीयत्वापादकानां संस्काराणामपरिसमाप्तत्वात्। तेषामिष्ट्यन्त एव समाप्तेः।

घ. अग्न्याधेयदक्षिणाया एवाग्नेयदक्षिणाकाले देयत्वविधानात् तस्या ऐष्टिकत्वाभावेन न तत्रैष्टिकान्वाहार्यधर्मप्राप्तिः। न वाग्नेयार्थं पृथगन्वाहार्यदक्षिणा। आधानदक्षिणयैवाग्नेयस्यापि प्रसङ्गादुपकारसिद्धेः। यत्र त्वङ्गानामपि पृथक्प्रयोगो विधीयते तत्र पृथग्दक्षिणा भवति। दक्षिणायाः प्रयोगाङ्गत्वात् तस्याः प्रयोगान्तरेऽनुपकारकत्वात्। यथा—अन्वारम्भणीयायां वैमृधेष्टौ च पूर्णमासाङ्गभूतायां पृथक् प्रयोगानुष्ठाने दक्षिणाम्नानम् "मिथुनौ गावौ दक्षिणा" इति अन्वारम्भणीयायाम् (आप. श्रौ. ९. २३. ४.) सप्तदश सामिधेनीको यथाश्रद्धदक्षिणः (आप. श्रौ. ३. १४. ४.) इति वैमृधे।

1. O. M. & B. Mss. read अतोऽग्निचित्त्वे.
2. B. Ms. reads कल्परिज्ञानार्थं for मन्त्रपरिज्ञानार्थम्.
3. All Mss. read प्रोक्षादि.

भोजनार्थं साधयति, न पृथक् तेषां भोजनेऽन्यस्साध्यते। एवं विमुक्तस्याङ्गस्य पृथक् दक्षिणा देया, यत्रापि नाम्नायते। तत्र च लिङ्गानि यथान्वारम्भणीयायां वैमृधे च। न ह्यप्राप्तां दक्षिणां विदध्यात्। दक्षिणानियमश्च यथा मिथुनौ गावौ दक्षिणेति ॥ ५ ॥

**अजं [क]पूर्णपात्रमुपबर्हणं सार्वसूत्रमित्यग्नीधे ॥ ६ ॥**

उपबर्हणं शिरस उपधानम्। नानावर्णैः सूत्रैः। रूपाणामवरुध्या इति ॥ ६ ॥

**वहिनमश्वं ब्रह्मणेऽध्वर्यवे वा ॥ ७ ॥**

**आहवनीयदेशेऽनड्वाहमध्वर्यवे ॥ ८ ॥**

वहति तस्मिन् काल इति [ख]वही ॥ ७, ८ ॥

**अपरेण गार्हपत्यं धेनुं होत्रे ॥ ९ ॥**

[ग]धेनुर्दाने सवत्सा, उपकारसिद्धेः। आलम्भे त्ववत्सा एकया क्रियासिद्धेः। उभयत्र लिङ्गदर्शनम् "दश सम्पद्यन्ते, द्वन्द्विन" इति ॥

क. पूर्णपात्रलक्षणमेवम्—अष्टमुष्टि भवेत् किञ्चित् किञ्चिच्चत्वारि पुष्कलम्।
पुष्कलानि तु चत्वारि पूर्णपात्रं प्रचक्षते ॥ इति।
एवञ्चाष्टाविंशत्युत्तरशत (१२८) मुष्टिपरिमितं व्रीह्यादिद्रव्यं पूर्णपात्रमिति व्यवहार इति फलितम्।

ख. अनायासेन वहनसमर्थ इत्यर्थः। सति विभवे तस्याऽदाने दोषो मनुना दर्शितः—
प्राजापत्यमदत्त्वाऽश्वमग्न्याधेयस्य दक्षिणाम्।
अनाहिताग्निर्भवति ब्राह्मणो विभवे सति ॥ (म. स्मृ. ११. ३८.) इति।

ग. धेनुदाने पयोलाभः प्रयोजनम्। तच्च वत्समन्तरा दोहनासिद्धेः न सम्भवतीति वत्सदानमप्यर्थसिद्धमिति। यत्र तु "द्यावापृथिव्यां धेनुमालभेत" (तै. सं. २. १. ४. ७.) इत्यादौ धेन्वालम्भः श्रुतः तत्र धेनुमात्रमेव। न वत्सः। तन्मात्रेणैव क्रियानिष्पत्तेरिति। तत्र च लिङ्गम् सोमक्रये "दश सम्पद्यन्त" इति श्रवणम्। तत्र 'एकहायन्या क्रीणाति, अजया क्रीणाति, हिरण्येन क्रीणाति, धेन्वा क्रीणाति, ऋषभेण क्रीणाति, अनडुहा क्रीणाति, मिथुनाभ्यां क्रीणाति, वाससा क्रीणाति" इति क्रयसाधनत्वेन नव द्रव्याण्यनुक्रम्य "दश सम्पद्यन्ते" (तै. सं. ६. १. १०) इत्युक्तम्। अत्र दशत्वं धेन्वासह वत्सस्यापि ग्रहण एवोपपद्यते इति। See also सायणभाष्य on this portion धेनोस्सवत्साया विवक्षितत्वाद्दशद्रव्यसम्पत्तिः' । ( P. 297 तै. सं. भा I part An edn ) आलम्भोदाहरणं तु द्वन्द्विन इति। अश्वमेधे सोमाय स्वराज्ञ इति द्वन्द्विन (आलभेत) ( आप. श्रौ. २०. १९. ९ ) इत्युक्तम्। द्वौ द्वौ पशू मिलित्वा एकं द्वन्द्वम्। यथा—अनड्वाहौ इति। तत्र द्वे धेनू भौमी इत्येकं द्वन्द्वम्। तत्र वत्सयोरपि ग्रहणे द्वन्द्वता व्याहन्येत, चतुष्टयता स्यात्। तदा द्वन्द्विन इत्यनुपपन्नं स्यादिति।

वासो मिथुनौ गावौ नवञ्च रथं ददाति। तानि साधारणानि सर्वेषाम् ॥ १० ॥

आ द्वादशभ्यो ददातीत्युक्त्वाऽऽह "काममूर्ध्वं देयमपरिमितस्याऽवरुध्यै" इति विज्ञायते ॥ ११ ॥

आद्वादशभ्य इति [क]गौर्द्वादशः, इच्छन्नूर्ध्वं ददाति ॥

ऊर्ध्वमादिष्टदक्षिणाभ्यो वदति षट् देया द्वादश देयाश्चतुर्विंशतिर्देया इति ॥ १२ ॥

षडाद्यास्वेकं कल्पं ददाति। द्वादशपर्यन्ता आदिष्टदक्षिणाः। ताभ्य ऊर्ध्वं काममूर्ध्वमित्यनियमे प्राप्ते षट् द्वादश चतुर्विंशतिर्वा ॥ १२ ॥

ता विकल्पन्ते ॥ १३ ॥

एता विकल्पन्ते परस्परेण ॥ १३ ॥

येषां पशूनां पुष्टिं भूयसीं कामयेत तेषां वयसाम् ॥ १४ ॥

येषामेकहायनादीनामापञ्चहायनेभ्यो वृद्धिमिच्छति तस्य वयसः षट् द्वादश चतुर्विंशतिर्वा ददाति, अन्यैस्तु सूत्रकारैः सहाऽऽदिष्टदक्षिणाभिरेताः संख्या विकल्प्यन्ते, न परस्परेणेति ॥ १४ ॥

दित्यौहीं दद्यात् दित्यवाहञ्च मुष्करम् ॥ १५ ॥

दित्यवाट् दित्यौही च नित्यौ षडाद्यासु। द्विवर्षो दित्यवाट्, तथा दित्यौही। वृषणौ यस्य विद्येते स मुष्करः ॥ १५ ॥

[ख]वर्धमानां दक्षिणां ददाति ॥ १६ ॥

न वृद्धा दीयते दक्षिणा ॥ १६ ॥

क. वासःप्रभृतीनि निर्दिष्टानि दत्वा ततो द्वादशसंख्यापूर्तिपर्यन्तं गावो देयाः द्रव्यविशेषानुपदेशात्। तस्या एव महोपकारकत्वेन तदानीं प्रवृत्तेरिति।

ख. वर्धमानैव दातव्या, न तु पूर्वमेव समाप्तवृद्धिः, अर्थात् क्षीयमाणा न दातव्येति। सूत्राणां व्यत्यस्य व्याख्यानं दित्यौह्यादीनां विकल्पशङ्कापरिहारार्थम्।

यद्यनाढ्योऽग्नीनादधीत काममेवैकां गां दद्यात् सा गवां प्रत्याम्नायो भवतीति विज्ञायते ॥ १७ ॥

अनाढ्यः यस्य नास्ति दक्षिणासम्पत् । काममेवेति वचनात् प्राकृतास्वनडुहेन्वादिष्वेका दीयते, अन्या वा । सा च गवामेव स्थाने भवति । न रथादीनन्यजातीयान्निवर्तयति, नाप्यङ्गदक्षिणाः, अतुल्यकालत्वात् ॥१७॥

सिद्धमिष्टिस्सन्तिष्ठते ॥ १८ ॥

इति विंशी कण्डिका

सिद्धमिष्टिरिति यत्र वचनं तत्र कपालविमोचनान्ता संस्था । न शंय्वन्ताद्याः खण्डसंस्थाः ॥ १८ ॥

पवमानहवींषि सद्यो[1] निर्वपेत् ॥ १ ॥

सद्यः समानेऽहनि यस्मिन्नेवाऽऽधानम् ॥ १ ॥

द्वादशाहे द्व्यहे त्र्यहे चतुरहेऽर्धमासे मास्यृतौ संवत्सरे वा ॥ २ ॥

आधानाद्द्वादश एवाऽहनि पवमानहवींषि । एवमुत्तरत्रापि । द्वादश्यां पुरस्तादित्यत्र पुरस्ताद्वचनात् । केचिद्द्वादशाहे गत इति सर्वत्राऽध्याहरन्ति । तेषां तु त्रयोदशेऽहनि ॥ २ ॥

न सोमेनाऽयक्ष्यमाणः पुरा संवत्सरान्निर्वपेत् ॥ ३ ॥

सोमेन यक्ष्यमाणस्सर्वकर्मभ्यः [क]पूर्वम् ॥ ३ ॥

निर्वपेदित्येके ॥ ४ ॥

यदि निर्वपेदग्नये पवमानायाऽग्नये पावकायाऽग्नये शुचय इति तिस्र आज्याहुतीस्सोमदेवताभ्यो वा हुत्वा निर्वपेत् ॥

क. सर्वकर्मभ्यः पूर्वमिति सोमपूर्वकाधानमुच्यते ।

1. क Ms reads अनुनिर्वपेत्

कयदापि सोमदेवनाभ्यस्तदाप्याज्याहुती: ॥ ५ ॥

समानतन्त्राणि नानातन्त्राणि वाऽऽग्नेयेन वा समान-तन्त्राणि ॥ ६ ॥

आग्नेयेन समानतन्त्रेष्वपि हुत्वैवारम्भः । 'अग्नये पवमानाय स्वाहा' । एवं पावकशुच्योः । सोमदेवताभ्योऽपि तिसृभ्य एव, यासामावाहनम् । 'इन्द्राय वसुमते स्वाहा' इति । एवमुत्तरे समानतन्त्राणि त्रीण्यपि । तदा चाविभक्तं शतमानं दीयते । नानातन्त्राणि वा, 'एकं निरुप्य उत्तरे समस्ये'दिति वचनात्, तदाऽपि विभागेन शतमानं दानम् । आग्नेयेन [1]समानतन्त्रेषु न पवमानदक्षिणाः, अग्न्याधेयदक्षिणाभिरर्थस्य सिद्धत्वात् ॥

यं कामयेत पापीयान् स्यादिति तस्यैकमेकमेतानि हवींषि निर्वपेत् । न वसीयान्न पापीयानिति तस्य साकं सर्वाणि । यं कामयेतोत्तरं वसीयान् श्रेयान् स्यादिति तस्याऽग्नये पवमानाय निरुप्य पावकशुचिभ्यां समानबर्हिषौ निर्वपेत् ॥ शतमानं हिरण्यं दक्षिणा ॥ ७ ॥

पापीयान् स्यादित्येकैकं नानातन्त्रप्रतिषेधः । उत्तरौ नित्यौ, न काम्यौ ॥ ७ ॥

पूर्वयोर्हविषोर्द्वे त्रिंशन्माने उत्तरस्मिंश्चत्वारिंशन्मानम् ॥ ८ ॥

नानातन्त्रेषु पूर्वयोर्हविषोर्विभागेन शतमानदानम् ॥

येन हिरण्यं[2] मिमते तेन मीत्वा ददाति ॥ ९ ॥

क. यदा पक्षान्तरावलम्बेन सोमदेवताभ्यो हूयते तदानीमपि तिस्र एवाज्याहुतीस्सवनत्रयदेवताभ्यो जुहुयादित्यर्थः ।

1. B. Ms reads समानतन्त्रेण for समानतन्त्रेषु.
2. क reads मिमीते

सिद्धमिष्टिस्सन्तिष्ठते ॥ १० ॥

इत्येकविंशी कण्डिका

[क]आद्यं मानं गुञ्जम् । केचित् वटबीजम् ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

पञ्चमप्रश्ने षष्ठः पटलः

सप्तमः पटलः

ऐन्द्राग्नमेकादशकपालमनुनिर्वपत्यादित्यं च घृते चरुम् ॥ १ ॥

सप्तदश सामिधेन्यः ॥ २ ॥

यस्मिन्नहनि पवमानहवींषि तस्मिन्नेवाहन्यैन्द्राग्नादीनि । [ख]इष्टयुत्कर्षपक्षे [1]फलवतामग्निहोत्रादीनामुत्कर्षः, असमासत्वादग्न्याधेयस्य । आग्रयणं [2]तु चतुश्शरावो लौकिके । उपदेशः कुर्वन्त्यग्निहोत्रादीनि बोधायनमतात् । केचित्पवमानहविषामुत्कर्षे ऐन्द्राग्नादीनि तदहरेव

क. प्रथमतो येन हिरण्यं मिमीते तदाद्यमानसाधनं गुञ्जा, वटबीजमिति केचिद्वदन्ति ।

ख. पवमानहविषां द्वादशाहादिषु करणपक्षेऽग्निहोत्रादीनामप्याहवनीयाद्यग्निसाध्यानामुत्कर्षः कर्तव्यः । पवमानेष्टीनामाधानाङ्गत्वात् पवमानेष्टयनन्तरमेव साङ्गाधानसमाप्तेः । साङ्गादेवाधानादाहवनीयाद्युत्पत्तिश्रवणात् । इदञ्च वार्तिककारकुमारिलमते । यदा शबरस्वामिमतानुसारेण पवमानहविषामाधानवत् साक्षादेवाग्न्यर्थत्वम्, तदाप्युत्कर्ष एव, तानि विना अग्न्युत्पत्तेरभावादिति । तन्मध्यकालपतितः आग्रयणचतुश्शरावस्तु वैकल्पिकः, अपिवा 'नवानां चतुश्शरावमोदनं पक्त्वा' ( आप. श्रौ. ६-३०-१७ ) इति विहितोऽवश्यानुष्ठेयत्वेनोत्कर्षायोगात् स्वकाल एव लौकिकेऽग्नौ कर्तव्य इति ।

उपदेशमतं तु—पवमानेष्टीनामुत्पन्नाग्निसंस्कारकत्वमेव । अत आधानानन्तरमेव चाहिताग्नित्वसिद्धेः तदधिकारिकाणामग्निहोत्रादीनामिष्टयुत्कर्षपक्षेऽप्यनुष्ठानं भवत्येवेति ।

1. 'घ' reads इष्टयुत्कर्षे फलवताम्

2. B. Ms. reads आग्नेयस्तु चतुश्शरावः and B[2] Omits उपदेशः ।

कुर्वन्ति। यजुरुत्पूतेन घृतेन श्रपणं चरोः, [क]पवित्रवत्याज्ये 'अकर्णानावपति' इत्यस्य चरुषु दर्शनात् ॥ १, २ ॥

**चतुर्धाकरणकाल आदित्यं ब्रह्मणे परिहरति ॥**

[ख]अचतुर्धाकृतो ब्रह्मणे दीयते आदित्यः ॥ ३ ॥

**तं चत्वार आर्षेयाः प्राश्नन्ति ॥ ४ ॥**

पुनरार्षेयग्रहणात्त एव कर्तारो नियम्यन्ते। अन्यत्र तत्पुत्रादयोऽपि ॥ ४ ॥

**प्राशितवद्भ्यस्समानं वरं ददाति। धेन्वनडुहोर्दानमेके समामनन्ति। सिद्धमिष्टिस्सन्तिष्ठते ॥ ५ ॥**

समानो वर एवेष्टिदक्षिणा। [ग]ऐन्द्राग्नस्य मुख्यत्वादामावास्यं तन्त्रम्, अन्यत्र तु पौर्णमासतन्त्रमेव ॥ ५ ॥

क. " देवो वस्सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिः" इति यजुषा घृतमुत्पूय तत्र श्रपण कर्तव्यम्। मैत्राबार्हस्पत्येष्टौ राजसूयाङ्गभूतायां पवित्रवत्याज्येऽकर्णानावपति ( आ. श्रौ. १८-११-१८ ) इति दर्शनात्। अयमाशयः—अस्ति राजसूये मैत्राबार्हस्पत्येष्टिः। तत्र निर्वापावहननानन्तरं खण्डितानखण्डितांश्च तण्डुलान् पृथग्विविच्य खण्डितैस्तण्डुलैः बृहस्पतये पयसि चरुं निर्वपेत्। येऽखण्डितास्तैर्मित्रायाऽऽज्ये चरुं निर्वपेत्। " मैत्राबार्हस्पत्यं भवति कर्णांश्चाकर्णांश्च तण्डुलान् विचिनुयात्, ये कर्णास्स पयसि बार्हस्पत्यो येऽकर्णास्स आज्ये मैत्रः" (तै. सं. १-८-८.) इति ब्राह्मणवाक्यम्। तत्र पवित्रवत्याज्येऽकर्णानावपतीति श्रुतम्। उत्पवनार्थपवित्रविशिष्ट आज्येऽखण्डीतान् तण्डुलान् श्रपणार्थं प्रक्षिपतीत्यर्थः। तत्र पवित्रविशिष्टत्वमाज्यस्य तदैवोपपद्येत यद्याज्यस्योत्पवन क्रियेत। एवं कृष्णलचरावपि तानि पवित्रवत्याज्ये आवपति ( आप. श्रौ. १९-२१-३ ) इति श्रपणाधिकरणस्याज्यस्य पवित्रवत्वं श्रुतम्। एतेनावगम्यते—श्रपणाधिकरणभूतेषु दध्याज्यपयस्स्वपि उत्पवनं कर्तव्यमिति। ( See commentary also of रुद्रदत्त on the Sutra ( आप. श्रौ. १-१४-४ ).

ख. चतुर्धाकरणप्रयाम्नायतयैव परिहरणविधानात् चतुर्धाकरणं विनैव ब्रह्मणे परिहरेदिति।

ग. अत्र ऐन्द्राग्नम्, आदित्यमिति चरुद्वयं वर्तते। तत्रामावास्यैन्द्राग्नविकृतिभूतमैन्द्राग्नम्। आदित्यचरुस्तु—आग्नेयविकृतिः। आग्नेयस्तूभयत्राऽमावास्यायां पौर्णमास्याञ्च पठित इत्यादित्यस्याप्युभयविकृतित्वं विकल्पेन प्राप्तुं शक्यते, तथापि प्राथम्यात्पौर्णमासयाग विकृतित्वमेव युक्तम्। एवञ्चैन्द्राग्नस्य दर्शविकृतित्वम्, आदित्यस्य पौर्णमासविकृतित्वमित्युभयोर्विरोधे समानतन्त्रेणोभयोरनुष्ठाने कस्य धर्मा अनुष्ठेया इति सन्देहे ' मुख्यं वा पूर्वचोदनाल्लोकवत्' इति पूर्वमीमांसाया द्वादशिकन्यायेन (पू. मी. १२-२-८) प्रथमश्रुतैन्द्राग्नधर्मा एवानुष्ठेया इति दार्शिकधर्माणामेवानुष्ठानम्। स्थलान्तरे तु आग्नेयविकृतीनां पूर्वोक्तन्यायेन पौर्णमासीधर्मा एवेति।

**आग्नावैष्णवमेकादशकपालमनुनिर्वपत्यग्नीषोमीयमेकादशकपालं विष्णवे शिपिविष्टाय त्र्युद्धौ घृते चरुम् ॥ सिद्धमिष्टिस्सन्तिष्ठते ॥ ६ ॥**

त्र्युद्धिः त्रिकाण्डः [1]अन्वाहार्यो दक्षिणा ॥ ६ ॥

**आदित्यं घृते चरुं सप्तदशसामिधेनीकं धेनुदक्षिणं सर्वेषामनुनिर्वाप्याणां स्थाने वाजसनेयिनस्समामनन्ति ॥ सिद्धमिष्टिस्सन्तिष्ठते ॥ ७ ॥**

आदित्यस्यापि त एव कालाः सद्यआदयः । तत्स्थानापत्तेः । नास्य परिहरणम्, पुनस्सामिधेनीविधानात् । अथ याज्यानुवाक्याः- [१]"अग्निर्मूर्धा" "भुवो [२]यज्ञस्य" इत्याग्नेयस्य । [३]" अग्न आयूंषि पवसे" इति षट् पवमानहविषाम् । [४]"इन्द्राग्नी रोचना दिवः," [५]"श्नथद्वृत्रम्" इत्यैन्द्राग्नस्य । [६]"अदितिर्न उरुष्यतु" [७]"महीमूषु मातरम्"

1. B. Ms adds अन्न before अन्वाहार्यो दक्षिणा.

१. अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपा ँरेतांँसि जिन्वति । (तै. सं. ४-४-४-१).

२. भुवो यज्ञस्य रजसश्च नेता यत्रानियुद्भिस्सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षाञ्जिह्वामग्ने चकृषे हव्यवाहम् ॥ ( तै. सं. ४-४-४-१ )

३. अग्न आयूँषि पवस आसुवोर्जमिषञ्च नः । आरे बाधस्व दुच्छुनाम् ॥
अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् । दधत्पोषँरयिं मयि ॥
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ॥
स नः पावक दीदिवोऽग्ने देवाँइहावह । उप यज्ञँहविश्च नः ॥
अग्निश्शुचिव्रततमश्शुचिर्विप्रश्शुचिः कविः । शुची रोचत आहुतः ॥
उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतीँष्यर्चयः ॥ ( तै. सं. १-३-१४-८ )

४. इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वाञ्चेति प्रवीर्यम् ॥

५. श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् । इरज्यन्ता वसव्यस्य भूरेस्सहस्तमा सहसा वाजयन्ता ॥ ( तै. सं. ४-२-११-१ )

६. अदितिर्न उरुष्यत्वदितिश्शर्म यच्छतु । अदितिः पात्वँहसः ॥ ( तै. सं. १-५-११-५ )

७. महीमूषु मातरँसुव्रतानामृतस्य पत्नीमवसे हुवेम । तुविक्षत्रामजरन्ती मुरूचीँसुशर्माणमदितिँसुप्रणीतिम् ॥ ( तै. सं. १-५-११-५ )

इत्यादित्यस्य। [१]"अग्नाविष्णू, [२]अग्नाविष्णू" "[३]अग्नीषोमा सवेदसा" [४]"युवमेतानि," [५]"प्रतत्ते अद्य," [६]"किमित्ते विष्णो" इति त्रिहविषः ॥ ७ ॥

अग्निहोत्रमारप्स्यमानो दशहोतारं मनसानुद्रुत्याहवनीये स्रुग्रहं हुत्वाऽथ सायमग्निहोत्रं जुहोति ॥ ८ ॥

अग्निहोत्रमारप्स्ये तेन यावज्जीवं होष्यामि जीर्णो वा विरमणं करिष्य इति [1]सङ्कल्पः। [क]स्वर्गकामं मीमांसकाः, अबन्धनात्कामस्य। न [ख]काम इत्युपदेशः। यत्रापि बन्धः, तत्राप्यकामहतस्य मुमुक्षोः प्रति-

क. विधिवाक्ये फलाश्रवणादश्रुतफलकेषु विश्वजिन्न्यायेन स्वर्गस्यैव फलत्वेन कल्पनौचित्यादिति मीमांसकसिद्धान्तादिति।

ख. सूत्रकारेण फलस्यानुक्तत्वात् नास्त्येव फलम्। एवञ्च नित्यत्वं सिध्यतीति। मीमांसकास्तु "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति वाक्यमुदाहृत्य, अत्र फलस्यश्रवणात् स्वर्गार्थत्वम्। "यावज्जीवमग्निहोत्रं जुहोति" इति यावज्जीवश्रुतिबलाच्च नित्यत्वम्। अतश्चोभयरूपत्वमग्निहोत्रस्येति वदन्ति।

1. O. Ms. reads करिष्यामीति सङ्कल्पः, see आण्डपिल्लै also.

१. अग्नाविष्णू महि तद्वां महित्वं वीतं घृतस्य गुह्यानि नाम। दमे दमे सप्तरत्ना दधाना प्रति वां जिह्वा घृतमाचरण्येत् ॥

२. अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा। दमे दमे सुष्टुतीर्वावृधाना प्रति वां जिह्वा घृतमुच्चरण्येत् ॥ ( तै. सं. १-८-२२. )

३. अग्नीषोमा सवेदसा सहूती वनतं गिरः। सन्देवत्रा बभूवथुः ॥ ( तै. सं. २-३-१४. )

४. युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्। युवꣳ सिन्धूꣳरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान् ॥

५. प्रतत्ते अद्य शिपिविष्ट नामार्यः शꣳसामि वयुनानि विद्वान्। तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके ॥ ( तै. सं. २-२-६८, )

६. किमित्ते विष्णो परिचक्ष्यं भूत्प्रयद्ववक्षे शिपिविष्टो अस्मि। मा वर्पो अस्मदपगूह एतयदन्यरूपस्समिथे बभूथ ॥ ( तै. सं. २-२-६८. )

आश्वलायनस्त्वत्रान्या अन्या एवर्चो याज्यापुरोनुवाक्यात्वेनोक्तवान्। See आश्व. सू. २-१ P. ४१-५१ An. ed.

षिध्यते फलम्। [क]व्यासमनाच। [ख]नापामुपस्पर्शनं 'होष्यन्नप उपस्पृशेत्' इति होमे पुनर्विधानात्। अन्येषु च क्रतुषु यक्ष्यमाणो वा इष्ट्वा वा

क. 'युक्तः कर्मफलं त्यक्त्वा' (भ. गी. ५-१२) 'त्यक्त्वा कर्मफलासङ्गम्' (भ. गी. ४-२०) 'कामात्मता न प्रशस्ता' इत्यादिव्यासवचनैर्मुमुक्षोः फलेच्छात्यागपूर्वकमेव कर्मानुष्ठानावगमादिति। अत्रेदं विचारणीयम्-कर्मणां फलानभिसन्धिपूर्वकमनुष्ठितानां चित्तशुद्धिसम्पादनद्वारैव मोक्षोपयोगित्वम्? उत ब्रह्मज्ञानवत् साक्षादेव मोक्षसाधनता? ततश्च ज्ञानकर्मसमुच्चयपक्ष एव श्रेयानिति। अत्र ज्ञानकर्मसमुच्चयपक्षपातिन एव याज्ञिका इति प्रतीयते स्पष्टम्। एतदुपष्टम्भनायाऽत्रत्यो रामाण्डारग्रन्थसन्दर्भस्तथैवोद्ध्रियते-' ननु "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" "नास्त्यकृतः कृतेन" इत्यादिभिर्बहुभिः श्रुतिस्मृतिवाक्यैः कर्मणो मोक्षसाधनत्वं प्रतिषिध्यते। "तमेव विदित्वाऽतिमृत्युमेति ब्रह्मवित् ब्रह्मैव भवति" "तमेवं विद्वानमृत इह भवति" इत्यादिभिः ज्ञानस्य साधनत्वमवगम्यते। तथाच "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इत्यादिभिः कर्मणो विद्यायाश्च फलभेदो दृश्यते। अतो न समुच्चिते ज्ञानकर्मणी साधनं मोक्षस्य। नैतत्सारम्; श्रुतिस्मृतिनियन्त्रणामसहमानानां स्वैराचारसमुत्सुकानां वैदिकगर्भतया वेदवाक्यानि अयथातथमुदाहरतां परलोकभयरहितानामिदं मतम्। तथाहि--यत्तावत् कर्मणो मोक्षसाधनत्वप्रतिषेधकानि वाक्यानि तानि केवलकर्मविषयाणि, विद्यासहितस्यैव वीर्यवत्तरत्वात्। "यदेव वीद्यया करोति तदेव वीर्यवत्तरम्" इति श्रुतेः। "यज्ञेन यज्ञमयजन्त देवाः, ते ह नाकं महिमानस्सचन्ते, एष त्वेव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषति" इत्यादिभिश्च कर्मणस्साधनत्वावगतेः। "हिरण्मयश्शकुनिर्ब्रह्म नाम। येन सूर्यस्तपति तेजसेद्धः, पिता पुत्रेण पितृमान् योनियोनौ, नावेदविन्मनुते तं बृहन्तं, सर्वानुभुमात्मानँ साम्पराये" इति ब्रह्म प्रशस्य ब्रह्मणस्सायुज्यँ सलोकतां यन्ति य एतदुपयन्ति ओमिति" विश्वसृजामयनस्य ब्रह्मप्राप्तिसाधनत्वदर्शनाच्च। तस्यैवात्मा पदवित्तं विदित्वा, न कर्मणा लिप्यते पापकेन" इति च प्रत्युत विद्यायाः भगवतोक्ता विद्याकार्यत्व गम्यते। अतो यथा वा एष रथोऽन्यतरेण चक्रेण न वर्तते यथा ह वा पक्षी पक्षेणैकेन एवं वा विद्याकर्मणो पुरुषस्य" इति ताण्ड्यायनिश्रुत्या परस्परव्याघातपरिहाराय च समुच्चिते एव विद्याकर्मणी। स्मृतिरपि-इयाज सोऽपि च बहून् यज्ञान् ज्ञानव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्तुं विद्यामविद्यया इति। तथा च भगवतोक्तं मतान्तराण्युपन्यस्य ' कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्' इति। अयमर्थः तर्कैरपि कर्कशतां प्रापितोऽस्माभिस्तत्र तत्रेत्यलमतिविस्तरेण' इति॥

ख. सङ्कल्पानन्तरं 'तदिदं सर्वयज्ञेषूपस्पर्शनं भवति' (आप. श्रौ. ४-१-७) इति विहितं "विद्युदसि" इति अपामुपस्पर्शनमग्निहोत्रसङ्कल्पानन्तरं न कर्तव्यम। तत्र 'विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमीति होष्यन्नप उपस्पृश्य' (आप. श्रौ. ६-९-३.) इति विशिष्य विधानात्। इतरक्रतुषु तु आद्यन्तयोरिति।

1. 'क' reads मनसा-सम्प्रहृः

इत्याद्यन्तयोः। तस्मिन्नेवाऽऽश्वपदिके [क]दशहोता सग्रहो [1]मनसा हूयते। [ख]अमावास्याधाने नक्षत्राधाने च यत्र सम्भवोऽजस्राणाम्। सोमाधानेऽप्यमावास्यायां कृते यत्र नाऽजस्राः पूर्यन्ते, तत्र तस्मिन्नैवाश्वपदिके दशहोताऽग्निहोत्रहोमश्च। उपदेशो मनसा होता ग्रह उपांशु। अन्ये तु मनसा [1]ग्रहमुक्त्वा पुनर्होतॄणां ग्रहाणाञ्चोपांशु कुर्वन्ति ॥ ८ ॥

**व्याहृतीभिरुपसादयेत् ॥ ९ ॥**

[ग]उपप्रेतप्रत्याम्नायो व्याहृतिभिरुपसादनं सायंहोम एव ॥ ९ ॥

**[घ]संवत्सरे पर्यागत एताभिरेवोपसादयेत् ॥ १० ॥**

संवत्सरे परिपूर्णेऽपि सायंहोम एव। उपदेशो होमद्वयेऽपि ॥ १० ॥

क. "चित्तिः स्रुक्, चित्तमाज्यम्, वाग्वेदिः, आधीतं बर्हिः, केतो अग्निः, विज्ञातमग्निः, वाक्पतिर्होता, मन उपवक्ता, प्राणो हविः, सामाध्वर्युः" इति दशहोता। "वाचस्पते विधे नामन्, विधेम ते नाम विधेस्त्वमस्माकं नाम, वाचस्पतिस्सोमं पिबतु, आस्मासु नृम्णं धात्स्वाहा (तै. आ. ३-२) इति ग्रहाः।

ख. पवमानहवींषि अनुनिर्वाप्याण्यैन्द्राग्नादीनि च परिसमाप्य तानग्नीन् अनिर्वाप्य तथैव द्वादशरात्रपर्यन्तं धारयेत्। तदिदमजस्रधारणव्रतं व्यन्तरिते सूत्रे सूत्रकारो विधास्यति। यदाऽमावास्यायामाधानं क्रियते, यदा वा तेषु तेषु नक्षत्रेष्वाधानौपयिकेषु आधानं क्रियते, तत्रोभयस्मिन् पक्षेऽजस्रधारणंसम्भवति। अग्निमपूर्णिमायामेव दर्शपूर्णमासारम्भात्। अतस्तदाऽजस्रधृतेऽश्वपादाहित एवाऽऽहवनीये दशहोत्रादिकम्। न तदर्थं पृथक्प्रणयनम्। एवं सोमपूर्वाधानमपि अमावास्यायां यदा क्रियते, तदाऽप्येवमेव कर्तव्यम्। परन्तु तत्र सोमसमाप्त्यनन्तरं क्रियमाणोदवसानीयेष्ट्यर्थं पृथक् प्राजहितस्यारणिसमारोपणं कृत्वा ततो मथित्वा तत्रोदवसानीयेष्टिः कर्तव्येति। पौर्णमास्याधाने तु नेदम्। तत्र सर्वं सद्यस्कालमिति विधानात् इति। See आप. श्रौ. १३-२४-३ for उदवसानीया। See आप. श्रौ. for प्राजहित

ग. See आप श्रौ. ६. ८. ११ for उपप्रेत।

घ. श्रुतिवाक्यस्यैवानुकरणमिदम् (See तै. सं. १, ६, १०, )

1. B. Ms reads होतॄनुक्त्वा for ग्रहमुक्त्वा.

द्वादशाहमजस्रेष्वग्निषु यजमानः स्वयमग्निहोत्रं जुहुयादप्रवसन्नहतं वासो बिभर्ति ॥ ११ ॥

इति द्वाविंशी कण्डिका

अजस्रा [1]नित्यधारणाः, आश्वलायनस्याऽऽधानात् द्वादशरात्रमजस्रास्सर्वत्र[क]। नाजस्रेषु धृष्टयादानाभिमन्त्रणबोधनानि विहरणार्थत्वात्। यजमानस्स्वयमिति वचनादेधोदकान्यपि स्वयमेवाहरति । अन्यत्र वसतिः प्रवासः । हुत्वा नान्यत्र वसतिं कुर्यात्[1] । अहतमनिवसितम्, नद्धोमे बिभर्ति ॥ १० ॥

यां प्रथमामग्निहोत्राय दोग्धि तां दक्षिणां ददाति ॥ १॥

या प्रथमा दुह्यते अग्निहोत्रहोमार्थं सा दीयते ॥ १ ॥

अथैकेषाम्—अग्नीनाधाय हस्तावविनिज्य संवत्सरमग्निहोत्रं हुत्वाऽथ दर्शपूर्णमासावारभते ताभ्यां संवत्सरमिष्ट्वा सोमेन पशुना वा यजेत तत ऊर्ध्वमन्यानि कर्माणि कुरुते ॥

यो होमं करिष्यति स हस्तावविनिज्य तूष्णीम् । केचित् 'विद्युदसि' इति । अग्निहोत्रमेव संवत्सरं नान्यत् फलवदिति । पूर्वप्रवृत्तत्वात् पिण्डपितृयज्ञः क्रियते । आग्रयणं [ख]स्तम्बभक्षणेन वा, यवाग्वा वा । [ग]दर्शपूर्णमासौ नवैः । उत्तरत्र सोमस्य पशोर्वा नित्यस्यैव प्रवृत्तिः ततः फलवतामाग्रयणादीनाम् ॥ २ ॥

क. आश्वलायनमते पौर्णमास्याममावास्यायाञ्चोभयत्राजस्रधारणम् । तस्याविशेषेणैव श्रवणादिति । See आप. श्रौ. ६. १. १; २ for धृष्टयादान, अभिमन्त्रण and बोधन । आधानात् द्वादशरात्रमजस्राः' इत्यविशेषेणाऽजस्रधारणविधानात् सर्वदा द्वादश पर्यन्तं यजमान एवाग्निऽहोत्रं जुहुयादिति ।

ख. See आप. श्रौ. ६-३०-१४-१५ for स्तम्बभक्षण and यवागू ei आग्रयणानुकल्प ।

ग. See आप. श्रौ. ६-३०-१३ for दर्शपूर्णमास ।

1. 'घ' 'ब' read अजस्रस्य धारणा.

1. 'ङ' 'ब' read नान्यत्र कुर्याद्वसतिम्.

त्रयोदशरात्रमहतवासा यजमानस्स्वयमग्निहोत्रं जुहु-याद्प्रवसन्नत्रैव सोमेन पशुना वेष्ट्वाऽग्नीनुत्सृजति यथा सूयवसान् कृत्वा प्राज्यात्तादृक्तदिति शाट्यायनिब्राह्मणं भवति ॥ ३ ॥

चतुर्दशेऽहनि सोमः पशुर्वा तेष्वेवाजस्राग्निषु अजस्रोत्सर्गार्थत्वाच्च। सुयवसान् यवसेन सुप्रीतान् यथा प्राज्यात् कालयेत् कृषिसिद्ध्ये बलीवर्दान् । एवमेवाग्नीन् सुप्रीतान् हव्यवहनाय कालयतीति लिङ्गात् । नाऽत्यन्तत्यागः । पुनश्च नित्यस्सोमः पशुर्वा । उपदेशस्त्याग आत्यन्तिक इति । प्रातर्होमं हुत्वाऽजस्रोत्सर्गः ॥ ३ ॥

"पूर्णा पश्चात्" "यत्ते देवा अदधु"रिति सारस्वतौ होमौ हुत्वाऽन्वारम्भणीयामिष्टिं निर्वपति ॥ ४ ॥

आग्नावैष्णवमेकादशकपालं सरस्वत्यै चरुं सरस्वते द्वादशकपालम् । अग्नये भगिनेऽष्टाकपालं यः कामयेत भग्यन्नादस्स्यामिति ॥ ५ ॥

नित्यवदेके समामनन्ति ॥ ६ ॥

उभयत्र सारस्वतान्वारम्भणीया चतुर्होतारोऽन्वाधानञ्च पौर्णमा-स्यामेव कर्त्तव्यम्, प्रधानकालासत्तेः । [क]उपदेशो हिरण्यकेशिमतिश्च सारस्वतान्वारम्भणीये । चतुर्दश्यां पौर्णमास्यां चतुर्होतारोऽन्वाधानञ्च । तस्य प्रातःकालनियमात् । 'निवेशनी'[1] 'अग्नीषोमा'[2]वित्येतावपि लभ्येते

क. "यथा सूयवसान्" इत्यर्थवादे बलीवर्दसादृश्यकथनात् पुनःकार्यार्थं प्रहणप्रतीतेः नात्यन्तत्याग इति पूर्वमतम । उपदेशमतं तु–तस्य केवलार्थवादत्वेन प्रशंसार्थत्वात् तदनुरोधेन नात्यन्तत्यागो विधिप्राप्तो बाधितुं शक्यते । अतोऽत्यन्तत्याग एवेति ।
'पौर्णमास्यां तु पूर्वस्य पर्वण औपवसथ्येऽह्नि अग्नीनन्वाधाय सेष्ट्यपवृज्य तदानीमेव चतुर्होतारं सारस्वतौ होमावन्वारम्भणीयाञ्च कुरुते' इति हिरण्यकेशिसूत्रादिति ।

१. निवेशनी सङ्गमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती । सहस्रपोषꣳसुभगा रराणा सा न आगन् वर्चसा संविदाना ॥

२. अग्नीषोमौ प्रथमौ वीर्येण वसून्रुद्रानादित्यानिह जिन्वतम् । माध्यꣳहि पौर्णमासं जुषेथां ब्रह्मणा वृद्धौ सुकृतेन सातावथाऽस्मभ्यꣳ सहवीराꣳ रयिं नियच्छतम् ॥ (तै. सं ३-५-१-१)

सारस्वतौ। दर्शपूर्णमासावारप्स्ये, ताभ्यां यावज्जीवं यक्ष्ये, स्वर्गं लोकमवाप्नवानीति सङ्कल्पः। ततः सारस्वतान्वारम्भणीया चतुर्होतारः पुनः पुनःप्रणीतेऽग्नौ। न पौर्णमासार्थे सर्वप्रयोगाङ्गत्वात् ॥ ६ ॥

**नानातन्त्रमेके ॥ ७ ॥**

**त्वद्विश्वा सुभग सौभगान्यग्ने वियन्ति वनिनो न वयाः। श्रुष्टीरयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरीड्यो रीतिरपाम्। त्वं भगो न आहि रत्नमिषे परिज्मेव क्षयसि दस्म वर्चाः। अग्ने मित्रो न बृहत ऋतस्यासिं क्षत्ता वामस्य देवभूरेः इति याज्यानुवाक्ये ॥ ८ ॥**

इति त्रयोविंशी कण्डिका ॥

नानातन्त्रेऽपि भगिनि मिथुनौ गावौ दक्षिणा जयाश्च। अग्नये भगिने, अग्ने भगिन्, अग्निं भागिनम्, अग्नेर्भगिनः, अग्निर्भगीदम्, उक्ते याज्यानुवाक्ये ॥ ८ ॥ २३ ॥

**[1]"चित्तञ्च चित्तिश्चे"ति पुरस्तात् स्विष्टकृतो जयान् जुहोति ॥ १ ॥**

**"चित्ताय स्वाहा, चित्यै स्वाह"त्येके समामनन्ति ॥ २ ॥**

चित्ताय स्वाहा, चित्यै स्वाहा, आकूताय स्वाहेति, चतुर्थ्या विभक्त्या सर्वे होमाः ॥ १, २ ॥

ङ. "निवेशनी सङ्गमनी वसूनाम, अग्नीषोमौ प्रथमौ वीर्येण" इति मन्त्रद्वयं पठित्वाऽनन्तरं "दर्शपूर्णमासावालभमान एतौ होमौ पुरस्ताज्जुहुयात्साक्षादेव दर्शपूर्णमासावालभते" ( तै. सं. ३-५-१-३ ) इत्येतन्मन्त्रकरणकहोमयोरप्येतत्प्रकरणे विधानात् तयोरप्यत्र विकल्पेन प्राप्तिरिति ।

१. चित्तं च, चित्तिश्चा, कूतं चाकूतिश्च विज्ञातं च विज्ञानं च मनश्च शक्वरीश्च दर्शश्च पूर्णमासश्च, बृहच्च रथन्तरञ्च ( तै. सं. ३-४-४ )

[1]"प्रजापतिर्जयान्" इति त्रयोदशीम् ॥ ३ ॥

अविकृता त्रयोदशी । तथोत्तरा ॥ ३ ॥

"अग्ने बलद सह ओजः क्रममाणाय मेदाः । अभिशस्तिकृतेऽनभिशस्तेन्यायास्यै जनतायै श्रैष्ठ्याय" इति चतुर्दशीं यः कामयेत चित्रं जनतायां स्यामिति चित्रं भवति शबलं त्वस्य मुखे जायते ॥ ४ ॥

चित्रं [क]विस्मापनीयं, जनानां समूहो जनता । समूहे य आत्मानं विस्मापयितुमिच्छति । शबलं श्वित्रं कुष्ठम् ॥ ४ ॥

मिथुनौ गावौ दक्षिणा । सिद्धमिष्टिस्सन्तिष्ठते ॥ ५ ॥

मिथुनौ पुमान् स्त्री च ॥ ५ ॥

दर्शपूर्णमासावारप्स्यमानश्चतुर्होतारं मनसाऽनुद्रुत्याहवनीये सग्रहं हुत्वाऽथ दर्शपूर्णमासावारभते ॥ ६ ॥

व्याहृतीभिर्हवींष्यासादयेत् संवत्सरे पर्यागत एताभिरेवाऽऽसादयेत् ॥ ७ ॥

व्याहृतिभिरासादनं प्रथमायामेव पौर्णमास्यां पूर्णे च संवत्सरे, "दर्शपूर्णमासौ चातुर्मास्यान्यालभमानः[ख]" इति श्रुतेः । अमावास्यायामपीत्युपदेशः ॥ ७ ॥

क. जनसमूहे य आत्मानं विस्मापयितुमिच्छति–अहो अयमित्थंभूत इति आश्चर्यं स्वविषये जनयितुमिच्छति स इति ।

ख. आलभमानः आरभमाणः । एवञ्च व्याहृतीभिरुपसादनस्याऽऽरम्भाङ्गत्वात्पौर्णमास्यामेवारम्भस्य कृतत्वात् तदानीमेवोपसादनं कर्तव्यम्, नामावास्यायामिति । उभयोरेकफलत्वात् अमावास्याया अपि प्रथमानुष्ठानस्यारम्भरूपत्वादित्युपदेशमतम् ।

१. प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशस्समनमन्त सर्वास्स उग्रस्स हि हव्यो बभूव ॥ (तै. सं. ३-४-४.)

अमावास्यायामादधानस्यैतत् । पौर्णमास्यां तु पूर्वस्मिन् पर्वणि सेष्टि सान्वारम्भणीयमाधानमपवृज्य ॥८॥

इति चतुर्विंशी कण्डिका

अमावास्यायामादधानस्य कर्तुरेतत् व्रतम्–यथाऽजस्रता, अहतधारणम्, अप्रवासः, [1]स्वयंहोमदानम्, अनन्तरकर्मणां क्रमेण प्रयोग इति । अन्ये त्वाहुः–अमावास्यायामाद्यानस्य पवमानहविषां संवत्सरादूर्ध्वो विधयः । पौर्णमास्यां तु सेष्टेरपवर्गः । सर्वेषामप्युभयत्र । पुरुषधर्मत्वाच्च - [क]प्रायश्चित्ताधाने न क्रियन्ते । अग्निहोत्राङ्गत्वे सति सोमाधाने सोमादुत्तरकाले प्रवृत्तेऽग्निहोत्रे द्वादशाहादीनि न क्रियेरन् । आधानाङ्गत्वे पुनः आधाने पुनराधेये च । अतः कर्तृनियमात्, श्रुत्या कर्तृसंयोगात् नेत्वमावास्याधान एव [2]भवन्ति, वचनात् । नक्षत्राधानेऽप्येवं भवन्ति । श्रुत्यन्तरात् [ख]अर्वाग्यत्राजस्रास्सम्भवन्ति पौर्णमास्यः । पौर्णमास्याधाने तु नैव भवन्ति । [ग]अपवृज्येति वचनात् । [3]यत्तु आधानकर्तुर्व्रतं नोपदिष्टं कर्माङ्गत्वेनैव चोद्यते । यथा दशहोता व्याहृत्याऽऽसादयं

क. त्रिविधमाधानम्–प्रथमाधानम्, पुनराधानम्, प्रायश्चित्ताधानमिति । प्रथममग्निसिद्ध्यर्थं क्रियमाणमाधानं प्रथमाधानम् । प्रजापश्वादिफलार्थं पुनः क्रियमाणमाधानं पुनराधानम् । अग्निनाशादौ दोषनिर्घातार्थं क्रियमाणं प्रायश्चित्ताधानम् यदरण्योः, यस्या भार्यानुगनौ (आप. श्रौ. ९-१८-१२-१३.) इति सूत्रद्वयेन विहितम् । तत्र पूर्वोक्तानां नियमानां नानुष्ठानम्, तेषां पुरुषधर्मत्वात् । पुरुषोद्देशेन विधीयमानाः पुरुषधर्माः । आहिताग्नित्वपुरस्कारेण विहितत्वात्ते आहिताग्निधर्माः । न तु ते आधानाङ्गम् आहिताग्नित्वस्य च प्रथमाधानेनैव सिद्धत्वात् न पुनः क्रियमाणे प्रायश्चित्ताधाने तद्धर्माणमनुष्ठानम् । आधानाङ्गत्वाभावात् । अजस्रादिविधानसूत्रेऽग्निहोत्रपदसमभिव्याहारात्तेषामग्निहोत्रधर्मत्वमेव यदीष्येत तर्हि सोमोत्तरकालं प्रवृत्ते तस्मिन् तेषामननुष्ठानम् । आधानाङ्गत्वपक्षे तु प्रथमाधान एव ते कर्तव्याः, न द्वितीयादिवारं क्रियमाण आधाने, पुनराधाने वा कर्तव्यास्ते कर्तृसंस्कारकत्वादेवेति । अतश्चामावास्यायामादधानस्येति शानचा कर्तुरुक्तत्वेन तद्धर्मत्वावगमात् तत्रैव तेषां प्राप्तिरेतद्वचनबलादिति ।

ख. अर्वागित्यादि पौर्णमास्या इत्यन्तः श्रुतेराकारः ।

ग. तस्मिन्नेव समाप्तिविधानान्न द्वादशरात्रादेस्सम्भव इति ।

1. O. Ms. reads स्वयं होमादनन्तरम् कर्मणां क्रमेण; B. Ms. reads स्वयं होमो, दानं, कर्मणाम्.
2. B. Ms. reads न भवन्ति for भवन्ति.
3. O. Ms. reads यत्र for यत्तु.

सारस्वतान्वारम्भणीया चतुर्होत्रिति तत् । सर्वस्याप्याधानस्य भवति, नाऽमावस्यायामेव कर्माङ्गत्वात् । अजस्राः कात्यायनाश्वलायनाभ्यामविशेषेणोक्ताः—आधानात् द्वादशरात्रमजस्रा इति । पौर्णमास्याधाने पौर्णमास्याः पूर्वमुपक्रमः सर्वकर्मभ्यः । [क]मध्येऽग्निहोत्रहोमः । आमावास्याधाने नक्षत्राधाने चाग्निहोत्रहोमः पूर्वम् । ऋत्वादीनामतिक्रमे सोमपूर्वत्वम् । [ख]केचिदमावास्यायामादधानस्यैतदग्निहोत्रपूर्वत्वं भवतीत्येतावदाहुः । पूर्वं [ग]पर्व चतुर्दश्येत्युपदेशः । सहेष्टिभिः परिसमासेऽग्न्याधेयेऽग्नित्यागः । [घ]सारस्वतान्वारम्भणीयाचतुर्होतृषु पुनः पुनः परित्यज्य चतुर्होत्रर्थं वाऽन्वाधानम् ॥२४॥

## श्वोभूते पौर्णमासेन यजते ॥ १ ॥

पौर्णमास्यां पौर्णमासेन यजेत, [ङ]यागं प्रतिपद्यत इत्युपदेशः पौर्णमास्यामुपक्रमणम् । येषां तु पौर्णमासी पूर्वं पर्व तेषां तत्राग्न्यन्वाधानमपि कृत्वा श्वोभूते प्रतिपदि पौर्णमासेन यागः ॥ १ ॥

## अनन्तरमाधानादाहिताग्निव्रतानि ॥ २ ॥

क. आधानानन्तरमग्निविहरग्निहोत्राकरणे च " त्रिरात्रमहूयमानोऽग्निर्लौकिकस्सम्पद्यते " इतिश्रुतेरग्निरक्षणस्य ऽप्यग्निहोत्रार्थं वा तदर्थं मध्येऽग्निहोमः कार्यः । दशहोता च प्रतिपद्यपराह्ण इति । नक्षत्राधानादौ अग्निहोत्रपूर्वकत्वात् पूर्वेनैवाऽग्निहोत्रहोमः प्राप्नोति । तत्राविकार प्राप्तः अग्निरक्षणार्थश्चेति द्विविधोऽपि होमस्तन्त्रेण कर्तव्यः, अनन्तरं स्वकाले पौर्णमासीयाग इति ।

ख. अमावास्याधाने सोमपूर्वत्वाभावात् अग्निहोत्रस्य प्राप्तकालत्वात "अग्निहोत्रप्रायणा यज्ञाः" इति श्रुतेः अग्निहोत्रपूर्वत्वमात्रमनेन सूत्रेण विधीयते । नक्षत्राधाने च वचनान्तरेण विधानमिति केषाञ्चिन्मतम् ।

ग. पूर्वस्मिन् पर्वणि चतुर्दश्यामित्युपदेशमतम् । चातुर्मास्येषु साकमेधपर्वणि ' ततश्चतुर्षु-मासेषु पूर्वस्मिन् पर्वणि ' ( आप. श्रौ. ८-९-१ ) इत्यत्र पूर्वपर्वशब्देन चतुर्दश्या अभिधानादिति ।

घ. सारस्वतहोमयोः, अन्वारम्भणीयेष्टेः ( आप. श्रौ. ९-२३-४ ) चातुर्मास्यानां च पृथक्पृथक् प्रणयनमग्नेः । एवञ्चैकैकापवर्गेऽग्नीनुत्सृज्य, पुनः प्रणीयहोमादिकमिति । अन्ते चतुर्होत्रर्थं प्रणीत एवाग्नावन्वाधानमिति ।

ङ. यजेत इत्यस्य यागं प्रतिपद्यत इत्यर्थः । एवञ्च पौर्णमास्यां यागमुपक्रम्य प्रतिपदि समाप्तिः कर्तव्येत्युपदेशमतम् ।

[क]अनान्याहिताग्नेष्वग्निषु यद्यपि संवत्सरे पवमानेष्टयः ॥ २ ॥

[ख]नाऽनृतं वदेत् ॥ ३ ॥

नाऽस्य ब्राह्मणोऽनाश्वान् गृहे वसेत् ॥ ४ ॥

अनाश्वान् अनशितवान् वसेत् ॥ ४ ॥

सूर्योढमतिथिं वसत्यै नाऽपरुन्धीत ॥ ५ ॥

सूर्योढः सूर्येऽस्तमिते आगतः तस्य देया वसतिः ॥

नर्बीसपक्वस्याऽश्नीयात् ॥ ६ ॥

अनग्निज ऊष्मा [ग]ऋबीसः तत्पक्वस्य प्रतिषेधः ॥ ६ ॥

क्लिन्नं दारु नाऽऽदध्यात् ॥ ७ ॥

क्लिन्नम् [1]उदकोक्षितम् ॥ ७ ॥

अन्तर्नाव्यपां नाऽश्नीयात् ॥ ८ ॥

अन्तर्नावि या आपः । उपदेशोऽ[2]न्तर्नाविस्थोऽपामशनं न कुर्यात् ॥ ८ ॥

स्वकृत इरिणे नाऽवस्येत् ॥ ९ ॥

इरिणमतृणं यत्स्वयं कृतं तत्र न तिष्ठति अग्निभिस्सह ॥ ९ ॥

पुण्यस्स्यात् ॥ १० ॥

पुण्यकर्मा च स्यात् ॥ १० ॥

क. 'तस्मादाहिताग्निर्नानृतं वदेत्' इत्याहिताग्नित्वस्यैव व्रतधारणहेतुत्वश्रवणादिति । (See पू. मी. ९-३-९ अधिकरण)

ख. इदमग्रिमसूत्रं च श्रुत्यनुकरणरूपम्

ग. यत् तिरोहितस्याऽग्नेरूष्मणा पक्वम्, न प्रत्यक्षाग्निना, तत् ऋबीसपक्वमिति रुद्रदत्तः ।

1. B2 reads उदके क्षितम् ।

2. O. Ms. of B2 read अन्तनीविसंस्थः

हिङ्कृत्य वाग्यतः स्त्रियमुपेयात् ॥ ११ ॥

स्त्र्युपगमनं हिङ्कारं कृत्वा ॥ ११ ॥

व्याहरेद्वा ॥ १२ ॥

न सायमाहुतावहुतायामश्नीयात् ॥

एवं प्रातः ॥ १४ ॥

आहिताग्नेर्गृहे न सायमहुते भोक्तव्यं तथा प्रातरित्यन्येषां व्रतम् ॥ १५ ॥

अन्येषामाहिताग्निगृहवासिनां व्रतम् ॥

नक्तं नान्यदन्नाद्दद्यात् । दद्यादित्येके ॥

नाऽन्यदन्नाद्ददामि इति [क]सङ्कल्पः ॥ १६ ॥

अन्नन्तु ददन्नदयीत ॥ १७ ॥

[1]प्रयच्छन्नन्नम् आतृप्तेर्दद्यात् ॥ १७ ॥

नैतस्मिन् संवत्सरे पशुनाऽनिष्ट्वा मांसं भक्षयेत् ॥ १८ ॥

एतस्मिन्नेव संवत्सरे [ख]नित्यस्य पशोः प्रवृत्तिः । न च तेनाऽनिष्ट्वा मांसभक्षणम् ॥ १८ ॥

"मनसाग्निभ्यः प्रहिणोमि भक्षं मम वाचा तं सह भक्षयन्तु । अप्रमाद्यन्नप्रमत्तश्चरामि शिवेन मनसा सह

क. एतद्विषयकस्सङ्कल्पः पूर्वमेव कर्तव्यः यथा प्रजापतिव्रतेष्विति । (See पू. मी. ४-१-३.)

ख. नित्यो निरूढः पशुः ।

1. B. Ms. reads प्रयच्छन्नन्नमातृप्तेरन्नं दद्यात्

भक्षयत" इति यद्यादिष्टो[क] भक्षयेदेतं मन्त्रमुक्त्वा भक्षयेत् ॥ १९ ॥

इति पञ्चविंशी कण्डिका

आदिष्टः श्रुतिवचनात् यदा भक्षयेदार्त्विज्ये एतं मन्त्रमुक्त्वा स्वेन मन्त्रेण भक्षयेत् ॥ १९ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

पञ्चमप्रश्ने सप्तमः पटलः

अष्टमः पटलः

पुनराधेयं व्याख्यास्यामः ॥ १ ॥

तस्याग्न्याधेयवत्कल्पः ॥ २ ॥

अग्नीनां विधानेन [1]सम्भारेषु स्थापनमग्न्याधेयम् । पुनर्विधानान्तरेण स्थापनं पुनराधेयं तस्यैव गुणविकारः । आधानाङ्गमिष्टय उभयत्र ॥ १, २. ॥

अग्नीनाधायैतस्मिन् संवत्सरे यो नर्ध्नुयात् स पुनरादधीत प्रजाकामः पशुकामः पुष्टिकामो ज्यायान्त्यां पुत्रमर्त्यायां स्वेष्वारुध्यमानेषु यदा वाङ्गेन विधुरतां नीयात् ॥ ३ ॥

अनृद्धिर्यदास्योपचयो न भवति । [2]अप्यृद्धिकामः पुनराधत्ते "योऽग्न्याधेयेन नर्ध्नोति स पुनराधेयमाधत्त" इति । प्रजाकामाद्योऽन्यस्मिन्नपि संवत्सरे लभ्यन्ते । यदा प्रजाकामो यदा पशुकाम इति तस्य

क. आदिष्टः आर्त्विज्यार्थं प्रेरितः, तस्यैव नित्यमश्वनिज्यायामपि मन्त्रपूर्वकं भक्षविधानादिति ।

1. B. Ms. reads सम्भारेषु विधानेन.
2. O. Ms. 1,2 read अथर्धिकामः

सर्वत्रानुषङ्गात् । पुष्टिः धनवृद्धिः । ज्यानिर्हानिः । पुत्रमत्यै पुत्रमरणम्। स्वे ज्ञातयः । तेषां ग्रहणमारोधनं राजादिभिः । अङ्गविधुरता अङ्गवैकल्यम्, [1]तद्यदाऽऽप्नुयात्। उपदेशः [क]पत्नी यज्ञाङ्गम्, तन्मरणेऽङ्गविधुरतेति। [ख]केचिदङ्गविधुरतायामेवाऽन्यस्मिन् संवत्सर इच्छन्ति । प्रजाकामादयस्तस्मिन्नेव संवत्सर इति। तेषां चानृद्धिरुपद्रवः। उत्सर्गेष्ट्यादौ सङ्कल्पः-अग्नीन् पुनराधास्ये, ऋध्यासम्, प्रजावान् भूयासमिति ॥३॥

आग्न्येयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालं वारुणं दशकपालमग्नयेऽप्सुमतेऽष्टाकपालं मैत्रञ्चरुमग्निमुद्वासयिष्यन् ॥ ४ ॥

"या त अग्न उत्सीदतः पवमाना प्रिया तनूः। तया सह पृथिवीमा विश रथन्तरेण साम्ना गायत्रेण च छन्दसा॥ या ते अग्ने पावका या मनसा प्रेयसी प्रिया तनूः। तया सहान्तरिक्षमाविश वामदेव्येन साम्ना त्रैष्टुभेन च छन्दसा। ततो न ऊर्जमाकृधि गृहमेधं च वर्धय॥ या ते अग्ने सूर्ये शुचिः प्रिया तनूः। शुक्रेऽध्यधि सम्भृता। तया सह दिवमाविश बृहता साम्ना जागतेन च छन्दसा ततो नो वृष्ट्याऽवत । यास्ते अग्ने कामदुघा विभक्तीरनु

क. अस्यायं विषयः--अनेकभार्यस्याऽऽहिताग्नेः ज्येष्ठायां विद्यमानायां कनिष्ठामरणे-

द्वितीयां वै तु यो भार्यां दहेद्वैतानिकाग्निना ।
जीवन्त्यां प्रथमायां तु सुरापानसमं हि तत् ॥

इति वैतानिकाग्निभिर्दाहनिषेधात् तन्मरणे उत्सर्गेष्टिपूर्वकं पुनराधानोपदेश इति रामाण्डारः ।

ख. 'अग्नीनाधायैतस्मिन् संवत्सरे' इत्युक्तत्वात् अनृद्धिकामः प्रजाकामो वा तस्मिन्नेव संवत्सरे पुनरादधीत । अङ्गवैकल्ये परं वत्सरान्तरेऽपि । तत्रैव यदाशब्दोपबन्धादिति वदन्ति तेषां मतेऽनृद्धिशब्दार्थे उपद्रवो वेदितव्यः । उपचयाभावस्य ज्यानिशब्देनैवोक्तत्वादिति ।

1. B. Ms. reads तद्यदात्मनः प्राप्नुयात्.

सम्भृताः । ताभिर्नः कामान् धुक्ष्वेह प्रजां पुष्टिमथो धनम् ॥ यास्ते अग्ने सम्भृतीरिन्द्रः सूकर आभरत् । तासु शोचिषु सीदेह भस्म वैश्वानरस्य यत् ॥ ५ ॥

इति षड्विंशी कण्डिका

"ये ते अग्ने वानस्पत्यास्सम्भारास्सम्भृतास्सह । तेभिर्गच्छ वनस्पतीन् स्वां योनिं यथायथम् । आगन्नग्निर्यथा लोकमसदत्सदने स्वे । अवीरहत्यं देवेपूपागां मनसा सह" इति पुरस्तात् स्विष्टकृतस्सप्ताहुतीर्जुहोति ॥ सिद्धमिष्टिस्सन्तिष्ठते ॥ १ ॥

**सर्वत्राग्निर्वैश्वानरो [क]वाक्यशेषान्मन्त्रलिङ्गाच्च । [ख]उपदेशो वैश्वानर एवेति । 'अग्नयेऽप्सुमते, अग्नेऽप्सुमन्, अग्निमप्सुमन्तम्, अग्नेरप्सुमतः, अग्निरप्सुमानिदम्' । "अग्निर्मूर्धा, भुवः" [१]"वैश्वानरो न ऊत्या" [२]"पृष्ठो दिवि" [३]"अव ते हेड" [४]"उदुत्तमम्" [५]"अप्स्वग्ने" [६]गर्भो अस्यो-**

क. यत्र "वैश्वानरं द्वादशकपालं निर्वपेदि" ति विधिः तत्र सर्वत्रापि अग्निर्वैश्वानरः प्रत्येतव्यः । तदीयार्थवादे "संवत्सरो वा अग्निर्वैश्वानरः" ( तै. सं. २-२-२४ ) इत्यग्निवैश्वानरस्यैव स्तवनात् तदीययाज्यापुरोनुवाक्यासु "पृष्टो दिवि पृष्टो अग्निः, जातो यदग्ने, त्वमग्ने शोचिषा, अस्माकमग्ने" ( तै. सं. १-५-११, ४४, ४५ ) इत्यग्नेः श्रवणादिति ।

ख. पूर्वमीमांसायां दशमाध्याये 'विधिशब्दस्य मन्त्रत्वे भावस्स्यात्तेन चोदना' ( पू. मी. १०-४-१२ ) इत्यधिकरणे विधिवाक्यगतस्यैव शब्दस्यान्यूनानतिरिक्तस्य देवतात्वमिति सिद्धान्तात् अत्र च "वैश्वानरम्" इत्येव विधिशब्दात् तावन्मात्रस्यैव देवतात्वं नाग्निविशिष्टस्येति । परन्त्वाश्वलायनोऽग्निं वैश्वनरमेव देवतामुक्तवान् (See आश्व. श्रौ. २-१२-६.)

ग. मन्त्रे "सम्भारास्सम्भृतास्सह" इति निर्देशादसम्भारपक्षे तदसङ्गतेरिति ।

१. वैश्वानरो न ऊत्याप्रयातु परावतः । अग्निरुक्थेन वाहसा ॥

२. पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश । वैश्वानरस्सहसा पृष्टो अग्निस्स नो दिवा स रिषः पातु नक्तम् ॥ ( तै. सं. १-५-११ )

३. अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनांसि शिश्रथः कृतानि ( तै. सं. १-५-११. )

४. उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ ( तै. सं. १-५-११. )

५. अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । गर्भे सञ्जायसे पुनः ॥ ( तै. सं. ४-२-३ .)

६. गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥ ( तै. सं. ४-२-३.)

षधीनाम् ' ' "अयं मित्रः" ' "अनमीवासः" इति याज्यानुवाक्याः। येन त्वसम्भारपक्षः कृतोऽग्न्याधेये तस्य " ये ते अग्ने वानस्पत्या " इत्यृचो लोपः ॥ १ ॥

## पौर्णमासीमिष्ट्वा ज्वलतोऽग्नीनुत्सृजति ॥ २ ॥

पौर्णमासीमिष्ट्वा उत्सर्गेष्ट्येष्ट्वा[क]ऽग्नीनुत्सृजति तस्या ब्राह्मणभोजनान्ते। उपदेशः—कृत्वोत्सर्गेष्टिं पौर्णमासीमिष्ट्वा ब्राह्मणभोजनान्ते उत्सर्गो ज्वलतामग्नीनाम्। [1]केचित् ब्राह्मणभोजनान्ते पुनर्विहृत्य ज्वलतोऽग्नीनायतनेभ्यः परित्यजन्ति। [ख]द्विहविरप्युत्सर्गेष्टिर्लभ्यते। [2]एषु निमित्तेष्वाग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन् इति। नास्यामुपहोमाः। नापि [ग]ज्वलतामुत्सर्गे[3] नियमः। केचिद्विनापि निमित्तेनैतयोत्सृजन्ति। तदयुक्तम्; अमावास्ययेष्ट्वा पौर्णमास्यामुत्सर्गेष्टिः हिरण्यकेशिनः ॥ २ ॥

## संवत्सरं पराध्यर्मुत्सृष्टाग्निर्भवति ॥ ३ ॥

पराध्यर्म् परतः कालम् संवत्सरः।'तस्यातिक्रमे कृते पुनराधेये सर्वप्रायश्चित्तम्। यावज्जीवश्रुतानि च यान्यकृतानि। ससहोताऽग्निहोत्राक्रियायाम्। पथिकृद्वैश्वानरो दर्शपूर्णमासाक्रियायाम्। सोमाक्रियायां

क. मया त्यक्ता अग्नय इति सङ्कल्पं करोतीति रामाण्डारः। बुध्या उपेक्षते न रक्षतीत्यर्थ इति रुद्रदत्तः।

ख. तैत्तिरीयशाखायाम्—"आग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्" ( तै. सं. २-२-२-५ ) इत्यग्न्युद्वासननिमित्ते हविर्द्वयविधानात् उद्वासनस्यापलक्षणार्थत्वमङ्गीकृत्य पूर्वोक्तनिमित्तेषु द्विहविष्का सापि पक्षे प्राप्नोति इति।

ग. तत्रास्मच्छाखोक्ताया इष्टेस्सन्निधौ पूर्वोक्तोपहोमानामविधानात् 'ज्वलत' इत्यकथनाच्चेति।

1. 'घ' reads केचित्तु.
2. 'घ' 'ब' 'ङ' read एतेषु.
3. Ad reads उत्सर्गनियमः for उत्सर्गे नियम :

१.
२.
अश्वलायनस्तु अन्या अन्या ऋचो गृहीतवान्।

सप्तदशोऽग्निष्टुत् । यस्त्वविधानेन त्यजति तस्याप्येवम् । [1]यस्य नानी-तस्संवत्सरः न तस्यैवम् । न [2]चारम्भार्थानि पुनराधेये प्रायश्चित्ताधाने च । उपदेशः—पुनराधेये [क]दशहोतृचतुर्होत्रादीनि व्याहृतीभिरुपस्थानान्तानि पुनः पुनः क्रियन्ते [3]अग्न्याधेयवत्कल्प इति । [ख]प्रायश्चित्ताधाने तु यद्यनन्तरं दोषात्क्रियते नाऽऽरम्भार्थो दशहोता । [4]अलुप्ते होमे अलुप्ते च पर्वणि न सारस्वतहोमादीनि । अर्वाक् त्रिरात्रान्न पुनराधेयम् । उत्सर्गे कृते हिरण्यकेशिमतात् ॥

## रोहिणी पुनर्वसू अनुराधा इति नक्षत्राणि ॥

## वर्षासु शरदि वाऽऽदधीत ॥ ५ ॥

रोहिण्यादौ नक्षत्रे [ग]कृष्णपक्षे वर्षासु शरदि वा ॥ ४, ५ ॥

## कृताकृतास्सम्भारा यजूंषि च भवन्ति ॥ ६ ॥

यदि क्रियन्ते सम्भारास्तदाऽग्न्याधेये यजूंषि चाऽऽधानार्थानि [घ]नित्यानि[5] ॥ ६ ॥

क. See P. for दशहोता and P. for चतुर्होता ।

ख. यदरण्योस्समारूढो नश्येत्, यस्य वोभावग्नी अनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः' ( आप. श्रौ. ९-१९-१२-१३ ) इति विहितं पुनराधानं प्रायश्चित्ताधानम । तत्र निमित्तोत्पत्त्यनन्तरमेव क्रियमाणत्वात् न तत्र दशहोता आरम्भार्थः ।

ग. पौर्णमासीमिष्ट्वा उत्सर्गविधानात् दर्शपूर्णमासयोरुभयोरेवैकप्रयोगपूर्वसाधनत्वात् पुनराधानानन्तरममावास्यानुष्ठानप्राप्त्यर्थं कृष्णपक्षग्रहणम्—कृष्णपक्ष एव पुनराधानं कर्तव्यमिति ।

घ. न सम्भृत्यास्सम्भारा न यजुः कर्तव्यमिति, अथो खलु सम्भृत्या एव सम्भाराः कर्तव्यं यजुः '' ( तै. सं. १-५-२-४, तै. ब्रा. १-३-१-५ ) इति सम्भाराणां यजुषाञ्च सहैव प्रवृत्तिनिवृत्त्योर्विधानादसम्भारपक्षे यजुषामपि निवृत्तिरिति । सम्भारशब्देन सिकतोषादिमृद्विशेषास्सप्त विवक्षिताः यजुश्शब्देन सर्पराज्ञीप्रभृतय आधानमन्त्रा विवक्षिताः ।

1. 'ङ' reads यस्य तु नानीतः
2. *Ibid* नाप्यारम्भार्थानि.
3. *Ibid* पुनः पुनः कर्तव्यावि.
4. B. Ms. reads अलुप्तेऽग्निहोत्रे for अलुप्ते होमे.
5. B. Ms. adds पुनः between नित्यानि and पञ्चविधानात.

**आपि वा पञ्च पार्थिवान् सम्भारानाहरति एवं वानस्पत्यान् ॥**

पुनः पञ्चविधानात् सप्त न लभ्यन्ते। भूयांसोऽपि न लभ्यन्ते। [क]केचिदयजुःपक्षेऽपि पञ्चेच्छन्ति। यस्याग्न्याधेये न कृताः सम्भाराः, तस्य [ख]नियताः। 'इह 'कृतयजु'रिति लिङ्गात् ॥ ७ ॥

**आयतनेषु पुराणान्दर्भान् संस्तीर्य "भूमिर्भूम्ना" इति सर्पराज्ञीभिर्गार्हपत्यमादधाति ॥ ८ ॥**

सम्भाराहरणान्ते पुराणदर्भाहरणं, ततो निधानम्। असम्भारपक्षे पुराणदर्भास्सम्भ्रियन्ते साद्यन्ते च तूष्णीम्। रजतानिरसनान्तं कृत्वा पुराणदर्भास्तरणमायतनेषु। असम्भारपक्षे [ग]त्ववोक्षणान्ते। [घ]सर्वानुक्त्वाऽऽधानमन्त्रान् सर्पराज्ञीभिः पौनराधेयिकैराधानम्। [ङ]असम्भारपक्षे तु पौनराधेयिकैरेवाऽऽधानम्। चतस्रः सर्पराज्ञ्यः, इह त्वाधेयेष्वनुवर्तमानस्य यजमानस्य प्राकृतानामेव मन्त्राणाम् ॥ ८ ॥

**मध्यन्दिन इतरान् ॥ ९ ॥**

**सर्वे मध्यन्दिने [च]वाजसनेयिनाम् ॥ ९ ॥**

क. यजुषामभावेऽपि सम्भारपञ्चत्वनियमार्थमेव पुनर्विधानमिति केषाञ्चिन्मतम्।

ख. यस्य यजमानस्य प्रथमाधाने सम्भारा न सम्भृताः, तस्य पुनराधाने सम्भारा अवश्यं कर्तव्याः। पुनराधाने तन्निवृत्तौ आधाने सम्भृतसम्भारत्वस्यैव कारणत्वोक्तेरिति।

ग. "शन्नो देवीरभिष्टय" इत्यद्भिरवोक्षति' ( आप. श्रौ. ५-९-१ ) इति विहितावोक्षणान्तं कृत्वा पुराणदर्भासादनमिति।

घ. 'अग्न्याधेयवत्कल्पः' (आप. श्रौ. ५. २६. २) इति विधानादाधानमन्त्राणां "सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधाति" (तै. सं. १-५-४-२ ) इति पुनराधानप्रकरणे पाठादुभयेषां मन्त्राणां प्राप्तिः।

ङ. सम्भारैस्सह यजुषामपि निवृत्तेरिति। "भूमिर्भूम्ना" "आयं गौः पृश्निरक्रमीत्" "त्रिꣳशद्धाम विराजति" "अस्य प्राणादपानती" इति चतस्र ऋचस्सर्पराज्ञ्यः इत्युच्यन्ते। सर्पराजेन दृष्टत्वात्तन्नाम। सायणाचार्यैस्तु—सर्पाणां राज्ञी भूमिः, तस्या ऋच इत्यभाषिष्ट। (See सा. भा. १-५-५-१ )

च. "आदित्यस्त्वेव सर्व ऋतवः। यदैवोदेति अथ वसन्तः, यदा सङ्गवोऽथ ग्रीष्मः, यदा मध्यन्दिनः, अऽथ वर्षा, यदापराह्णोऽथ शरत्, यदैवास्तमेत्यथ हेमन्तस्तस्माद् मध्यन्दिन एव दधीत" ( श. ब्रा. २-२-३-९ ) इति शतपथब्राह्मणे मध्यन्दिनकालस्यैव सर्वोद्देशेन विधानादिति।

उपोलवैर्दर्भैः परुत्कैः संवत्सरप्रवातैराहवनायं ज्वलन्तमुद्धराति ॥ १० ॥

उपोलवाः आलवेभ्य उत्थिताः । [1]मूलसमीपे लूना वा । परुत्काः पर्ववन्तः । संवत्सरप्रवाताः संवत्सरमाकाशेऽवस्थिताः ते[2] आश्वत्थेऽसम्प्रत्याम्नायाः । तथोपायः क्रियते यथा नानुगच्छत्यग्निः ॥ १० ॥

"[1]यत्वा क्रुद्धः परोवप" इति दक्षिणाग्निम् । "[2]यत्ते मन्युपरोप्तस्य" इतीतरान् ॥ ११ ॥

"[3]मनो ज्योतिर्जुषताम्" इति बृहस्पतिवत्यर्चोपतिष्ठते ॥ १२ ॥

बृहस्पतिवत्योपस्थानमाहितस्याग्नेः शमने कृते [क]भरद्वाजमतिः[3] । उपदेशस्तन्त्रेणोपस्थानमावसथ्य[4]शमनहोमे कृते सर्वेषाम् ॥ १२ ॥

[4]"सप्त ते अग्ने समिधस्सप्त जिह्वा" इत्यग्निहोत्रं जुहोति ॥ १३ ॥

इति सप्तविंशी कण्डिका

अग्निहोत्रहोमो नित्यः। पूर्वाहुतिः "सप्त ते अग्न" इति। प्रातर्होमविकारः। आग्नेयं हविरिति मन्त्रसन्नामः ॥ १३ ॥

क. 'आहितमाहितमुपतिष्ठते' इति भरद्वाजः ।

1. B. Ms. reads आलवसमीपे for मूलसमीपे.
2. B. Ms. reads ते च
3. *Ibid* भारद्वाजमतात्
4. *Ibid* शमने कृते

१. यत्वा क्रुद्धः परोवप मन्युना यदवर्त्या । सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि । (तै. सं. १-५-३-२.)
२. यत्ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे। आदित्या विश्वे तद्देवा वसवश्च समाभरन् ॥ ( ,, ,, )
३. मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳसमिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् ( तै. १-५-३-२. )
४. See आप. श्रौ. टिप्पणी for सप्त ते अग्ने ।

आग्नेयं पञ्चकपालं निर्वपत्यष्टाकपालं वा ॥ १ ॥

यदि पञ्चकपालो गायत्र्यौ संयाज्ये। यद्यष्टाकपालः पङ्क्त्यौ ॥ २ ॥

[1]"यस्याजुषत्" [2]"विद्मा हि त" इति गायत्र्यौ संयाज्ये ॥

सर्वमाग्नेयं भवति ॥ ३ ॥

सर्वमाग्नेयं यदेव विधास्यते ॥ ३ ॥

पञ्चदश सप्तदश वा सामिधेन्यः ॥ ४ ॥

सप्तदशसु पृथुपाजवत्यौ[क] यत्र नोपदिष्टा अन्याः ॥ ४ ॥

सामिधेनीप्रभृत्युपांशु यजत्योत्तमादनूयाजादुच्चैः स्विष्टकृतम् ॥ ५ ॥

स्विष्टकृत्सूक्तवाकयोर्देवताया अप्युच्चैः ॥ ५ ॥

"अग्नाग्नेऽग्नावग्नेऽग्निनाग्नेऽग्निमग्ने इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति ॥ ६ ॥

समिधो अग्नाग्न आज्यस्य वियन्त्विति द्वितीयोऽग्निशब्दः क्रमार्थस्सर्वत्र। [1]तनूनपादग्नावग्न आज्यस्य,[2] इडो अग्निनाऽग्न आज्यस्य, बर्हिरग्निमग्न आज्यस्य ॥ ६ ॥

क. यत्रान्या ऋचो नोपदिष्टास्तत्र "पृथुपाजा अमर्त्यः" "तꣳ सबाधः" इति द्वे ऋचौ सप्तदशत्वसंख्यापूरके इति वेदितव्यमिति।

ख. पूर्वमुपांशुत्वेन प्रयुक्तानामप्यत्रोच्चैस्त्वं विधीयते।

१. यस्याऽजुषन्नमस्विनश्शमीमदुर्मखस्य वा। तं घेदग्निर्वृधाऽवति ॥ (तै. सं. २-६-११-३.)

२. विद्म हि ते पुरा वयमग्ने पितुर्यथाऽवसः। अधा ते सुम्नमीहे ॥ (तै. सं. २-६-११-४.)

1. तनूनपादग्नाग्न आजस्य, इडोऽग्निनाग्न आजस्य, बर्हिरग्निरग्न आज्यस्य 'घ'

2. O. Ms. adds वेतु, वियन्तु, वेतु respectively after आज्यस्य in three मन्त्र.

नोत्तमे ॥ ७ ॥

"प्रयाजानूयाजेष्वेव विभक्तीः कुर्या"दिति पञ्चमेऽपि स्यादन्या विभक्तिः । तथोत्तमेऽनूयाजे, नोत्तम इति प्रतिषिध्यते ॥

विभक्तिमुक्त्वा प्रयाजेन वषट्करोति ॥ ८ ॥

विभक्तिमुक्त्वा [क]प्रयाजेन वषट्करोतीति । उपरिष्टाद्देवतोपलक्षणस्य व्याहृतिभिश्च परतो विभक्तिः । तत्र प्रथमे प्रयाजे ये यजामहे समिधो भूर्भुवस्सुवरग्नौ समिधो अग्न आज्यस्य । ये [1]यजामहे भूर्भुवस्सुवरग्नाग्नौ तनूनपादग्न आज्यस्य । ये यजामहे भूर्भुवस्सुवरग्नावग्निनेडो अग्न आज्यस्य । ये यजामहे भूर्भुवसुस्वरग्निं बर्हिरग्न आज्यस्य ॥ ८ ॥

यं कामयेतर्ध्नुयादिति तस्योपरिष्टाद्येयजामहाद्विभक्तिं दध्यात् पुरा वा वषट्कारात् ॥ ९ ॥

उपरिष्टाद्येयजामहात् पुरस्ताद्देवतोपलक्षणात् व्याहृतिभिश्च । ये यजामहेऽग्नौ भुर्भुवस्सुवस्समिधो अग्न आज्यस्य । ये यजामहेऽग्नौ भूर्भुवस्सुवस्तनूनपादग्न आज्यस्य । ये यजामहेऽग्निना भूर्भुवस्सुवरिडो अग्न आज्यस्य । ये यजामहेऽग्निं भूर्भुवस्सुवर्बर्हिरग्न आज्यस्य । पुरा वा वषट्काराणां विभक्तयः पूर्वं विभक्तीनां च प्लुतिः वियन्त्वग्निना वौ० । वेत्वग्निं वौ० । वियन्त्वग्निना वौ० । वेत्वग्निं वौ० । ऋद्धिकामस्य विधिद्वयम् ॥ ९ ॥

[१]"अग्निं स्तोमेन बोधय" इत्याग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्या भवति । [२]"अग्न आयूंषि पवस" इति सौम्यस्य ॥

क. प्रयाजशब्दो याज्यापरः । श्रुतेरेवानुकरणमिदम् ॥ See ( तै. सं. १-६-२-३ ).

1. इतः प्रभृति सर्वत्राग्रे ये यजामहो न दृश्यते 'घ' पुस्तके

१. अग्निंस्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् ॥ ( तै. सं. ४-१-११-४. )

२. अग्न आयूंषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥

पवमानत्वेन सौम्यस्यानुग्रहात्तेन सौम्य इति। 'अग्नये पवमानायानुब्रूहि' इत्युक्ते "अग्न आयूंषि पवस" इति पुरोनुवाक्या। 'अग्निं पवमानं यज' त्युक्ते 'ये यजामहे अग्निं पवमानं भूर्भुवस्सुवर्जुषाणो अग्निः पवमान आज्यस्य हविषो वे'त्विति याज्या। 'अग्निना पवमानेन यज्ञश्चक्षुष्मान्, अग्नेः पवमानस्याहं देवयज्यया चक्षुष्मान् भूयास'मिति हुतानुमन्त्रणम्। 'अग्निपवमानयोरहं देवयज्यया चक्षुष्मान् भूयास'मिति समस्तम् ॥ १० ॥

"अग्निर्मूर्धे"ति वा सौम्यस्य कुर्यात् ॥ ११ ॥

यदा "अग्निर्मूर्धा" इति सौम्ये[1] तदोभावाग्नेयावाज्यभागौ स्याताम्। अग्नये पवमानायोत्तरः स्यादिति विधिद्वयम्। 'जुषाणो अग्निराज्यस्य हविषो वे'त्विति सौम्यस्याऽऽग्नेयत्वे याज्या। आग्नेयवद्धिहुतानुमन्त्रणमुत्तरस्य। 'अग्न्योरहं देवयज्यया चक्षुष्मान् भूयास'मिति समस्तस्य। भरद्वाजाश्वलायनमतिश्च। उपदेश आज्यभागयोः पुरोनुवाक्यामात्रे विकार इति ॥ ११ ॥

प्रजाकामपशुकामस्य प्रजाव्यृद्धपशुव्यृद्धस्य वा ॥ १२ ॥

यः प्रजाकामः पशुकामस्तस्याप्याग्नेयौ। यस्य म्रियते प्रजा स प्रजाव्यृद्धः।[2] यस्य पशुर्म्रियते स पशुव्यृद्धः ॥

अग्निन्यक्ताः पत्नीसंयाजानामृचो भवन्ति ॥ १३ ॥

अपि वा यथापूर्वमाज्यभागावेवं पत्नीसंयाजाः।

अग्निन्यक्ताः पत्नीसंयाजानामृचो भवन्तीति [3]वचनात्। देवताशब्दस्य परोऽग्निशब्दः[4] तयैव विभक्त्या क्षिप्यते। तेन सर्वाग्नेयत्वम्।

1. 'ङ' reads सौम्यस्य.
2. Ad omits यस्य पशुर्म्रियते स पशुव्यृद्धः
3. 'घ' 'ङ' 'ब' read लिङ्गात्
4. 'ङ' reads परतोऽग्निशब्दः

अन्तो नाध्वर्योर्विकारः । [क]सोमाग्ने वृष्णियम् । अमृताय सोमाग्ने दिवि त्वष्टारमग्निमग्रियम्, देवत्वष्टरग्ने विरराणस्स्यस्व । देवानां पत्नीरग्नि रुशतीरवन्तु । देवपत्नीरग्निरिन्द्राणी । राकामग्निमहम् । यास्ते राकेऽग्ने । सिनीवाल्यग्ने पृथुष्टुके । सिनीवाल्या अग्नये जुहोतन । कुहूमग्निमहम् । कुहूरग्निर्देवानाम् । [ख]उपदेशो देवनाशब्दमपनीयाऽग्निशब्दस्य तथैव विभक्त्या क्षेपः । अग्नीनां पत्नीरिति देवपत्नीषु । उत ग्नावियन्त्वग्निपत्नीरिति ॥ १३, १४ ॥

**[१]"अग्ने तमद्याश्व"मित्यक्षरपङ्क्त्यो याज्यानुवाक्या भवन्ति । द्वे आग्नेयस्य द्वे स्विष्टकृतः ॥ १५ ॥**

आग्नेयस्य नित्यमक्षर[ग]पङ्क्त्यौ अष्टाकपालपक्षे । स्विष्टकृतः [1]पुरोडाशस्याऽनियमः ॥ १५ ॥

**[२]"पुनरूर्जा, "[३]सह रय्या" इत्यभितः पुरोडाशमाज्या-**

क. याः पत्नीसयाजानामृचस्ता अग्निशब्दघटिताः कुर्यात् इति । ऋच इत्युक्तेराध्वर्यवप्रैषादौ नाग्निशब्दघटनम् । (१) "विश्वतस्सोम वृष्णियम्" (२) "अमृताय सोम दिवि" (३) "इह त्वष्टारमग्रियम्" (४) "देव त्वष्टर्विरराण." (५) "देवानां पत्नीरुशतीः" (६) "उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्यग्नायी" (७) "राकामहं सुहवाम्" (८) "यास्ते राके सुमतयः" (९) "सिनीवालि पृथुष्टुके । हविः सिनीवाल्यै जुहोतन" (१०) "कुहूमहं सुवृतम्" (११) "कुहूर्देवानाममृतस्य" इतीमे मन्त्रखण्डाः । तत्र सर्वत्रापि देवतावाचकपदानन्तरं सविभक्तिकोऽग्निशब्दः प्रयोक्तव्यः । स एव प्रकारो दर्शितो भाष्यकारेण ।

ख. सर्वमाग्नेयमिति वचनाद्देवतान्तरसम्बन्धानुपपत्तेस्तेषु तेषु मन्त्रेषु तत्तद्देवतावाचकपदमानीय तत्तद्विभक्त्यन्तमग्निपदमेव प्रयोक्तव्यमित्युपदेशमतम् । तत्र प्रकारविशेषोऽग्निमवाक्याभ्यां प्रदर्श्यते—"अग्ने तमद्य" "अधा ह्यग्ने" "आभिष्टे अद्य" "एभिर्नो अर्कैः" ( तै. सं. ४-४-४-७.) इति चतस्रः" ।

ग. तथैव पूर्वं सूत्रकारेण 'यद्यष्टाकपालः पङ्क्त्यो' ( आप. श्रौ. ९-२८-२. ) इति प्रधानमात्रे नियमितत्वादिति ।

1. O. Ms. reads पुरोडाशस्य नियमः for पुरोडाशस्यानियमः

१. अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् । ऋध्यामा त ओहैः ॥ १ ॥
अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ ॥ २ ॥
आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम । प्र ते दिवो न स्तनयन्ति शुष्माः ॥ ३ ॥
एभिर्नो अर्कैर्भवा नो अर्वाङ् सुवर्णज्योतिः । अग्ने विश्वेभिस्सुमना अनीकैः ॥ ४ ॥ ( तै. सं. ४-४-४-७ )

२. पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाहि विश्वतः ॥

३. सह रय्या निवर्तस्वाऽग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि ॥ ( तै. सं. १-५-३-२ )

हुती जुहोति ॥ "पुनरूर्जा" इति वा पुरस्तात्प्रयाजानां "सह रय्या" इत्युपरिष्टादनूयाजानाम् ॥ १६ ॥

एतद्वा विपरीतम् ॥ १७ ॥

यस्मिन् होमं करिष्यति तत्र "पुनरूर्जा" इति जुहोति। ततः पुरोडाशेज्या। तस्मिन् ततः "सह रय्या" इत्युपरिष्टात्पुरोडाशस्य होमः ॥ १६, १७ ॥

उभयीर्दक्षिणा ददाति ॥ १८ ॥

इत्यष्टाविंशी कण्डिका

आग्न्याधेयिकीः पौनराधेयिकीश्च पुनर्निष्कृतो रथ इत्येताश्शतमानञ्च हिरण्यम् ॥ १ ॥

पुनर्निष्कृतः पुनस्संस्कृतः [क]पुनरुत्स्यूतम् ऊर्ध्वं यस्य सीवनं कृतं पाटितस्य। [1]तत्पुनर्गृह्यते वसनार्थं द्वितीयमुत्स्यूतम्। केचित्पुनश्शब्द-[2]प्रयोगात्कृत्तम्। [ख]उत्सृष्टो वहनाय समर्थः पुनर्गृह्यते स पुनरुत्सृष्टः। शतमानं हिरण्यम् ॥ १ ॥

तस्माद्रजतं हिरण्यमित्युक्तम् ॥ २ ॥

[ग]रजतं न देयम्, अन्यत्रापि यज्ञकर्मणि। "बर्हिषि" इति यज्ञ-कर्मोपलक्षणात् प्रतिषेधार्थम् ॥ २ ॥

क. दार्ढ्यार्थं सूत्रैरुत्स्यूतं पुनरुत्स्यूतमिति रुद्रदत्तः। छिन्नं सत् सूचीतन्तुभ्यां स्यूतं पुनरुत्स्यूतमिति सायणाचार्याः। (See तै. सं. १-५-२-४ )

ख. अवसन्नो गौरिति रुद्रदत्तः। दौर्बल्येन भारं वोढुमशक्ततया परित्यक्तस्सन् कथञ्चित्पोषणेन शक्तीकृतः पुनरुत्सृष्ट इति सायणाचार्याः। बोधायनोऽपि पुनरुत्सृष्टोऽनड्वानिति अवशीर्णगव एवेषे उक्तो भवतीति।

ग. "तस्माद्रजतं हिरण्यमदक्षिण्यम्। अश्रुजꣳहि यो बर्हिषि ( रजतं ) ददाति पुरास्य संवत्सराद्गृहे रुदन्ति, तस्माद्बर्हिषि न देयम्" ( तै. सं. १-५-१-२ ) इति बर्हिश्शब्देन यज्ञसामान्यमुपलक्ष्य तत्र रजतदाननिषेधादिति।

1. O. Ms. reads पुनर्गृह्यते सीवनार्थं for वसनार्थम्.
2. B. Ms. reads शब्दस्य प्रयोगात् for शब्द प्रयोगात्.

पुनरभिहितो रथः पुनरुत्स्यूतं स्यामूलं पुनः कामस्याऽऽप्त्या इत्येकेषाम् ॥ ३ ॥

[क]पुनरभिहितः पुनरभिप्रेतः । स्यामूलं [ख]कम्बलम् । तत्र दक्षिणाद्वयम् ॥ ३ ॥

यदीतराणि न विद्येरन्नप्यनड्वाहमेव दद्यात् । अनडुहि ह वा एते च कामा अतश्च भूयांस इति पैङ्ग्यायनिब्राह्मणं भवति ॥ ४ ॥

अनड्वाहमेवेत्यवधारणात् आग्न्याधेयिकीनामपि निवृत्तिः पुनरुत्सृष्टेन । [ग]केचित्त्वविशिष्टमनड्वाहम् ॥

'देवे अग्नौ, देवो अग्निः' इति द्वयोरनूयाजयोर्विभक्ती दधाति ॥ ५ ॥

देवे अग्नौ बर्हिर्वसुवने । देवो अग्निर्नराशंसो वसुवने ॥ ५ ॥

नोत्तमे ॥ ६ ॥

उच्चैरुत्तमं सम्प्रेष्यति ॥ ७ ॥

सिद्धमिष्टिस्सन्तिष्ठते ॥ ८ ॥

नोत्तम इति प्रतिषेधो ब्राह्मणे [घ]सामान्यचोदितत्वात्प्रयाजानूयाजेष्विति ॥

क. पूर्वमारूढो विसृज्य-पुनः स्वीकृत इति रामाण्डारः । पुनस्संस्कृत इति रुद्रदत्तः ।

ख. वासोविशेष इति रुद्रदत्तः ।

ग. सूत्रोपात्ते पैङ्ग्यायनिब्राह्मणे निर्विशेषस्याऽनडुह एवोपादानादिति ।

घ. प्रयाजानूयाजेष्वेव विभक्तीः कुर्यादिति सामान्योक्तेस्सर्वेषु पञ्चस्वपि प्रयाजेषु त्रिष्वप्यनूयाजेषु अविशेषेण विभक्तीनां प्राप्तौ अन्तिमप्रयाजेऽन्तिमेऽ( तृतीये ) नुयाजे च तन्निवृत्त्यर्थमुभयत्र प्रतिषेध इति ।

आग्निवारुणमेकादशकपालमनुनिर्वपति सर्वेषामनुनिर्वाप्याणां स्थाने द्विदेवत्यानां वा ॥ ९ ॥

सिद्धमिष्टिस्सन्तिष्ठते। सन्तिष्ठते पुनराधेयम्॥ १० ॥

आग्निवारुणोऽ[क]नुनिर्वाप्यान् सकलानपि गृह्णाति। यदा द्विदैवत्यानां स्थाने तदा कृत्वा पवमानहवींषि आग्निवारुणः, तत आदित्यः, पश्चाद्विष्णवे शिपिविष्टाय। द्वित्वसामान्याद्द्विदेवत्यानां स्थाने। [ख]नाजस्राः नारम्भार्थानि यावज्जीवमेक एवारम्भ इति। कृते पुनराधेये यदागच्छति दर्शः पूर्णमासो वा तदेव पूर्वं प्रयुज्यते। केचित्त्वाहुः—पौर्णमासीमिष्ट्वा कृत उत्सर्गः। अतोऽमावास्यैव पूर्वं प्रयुज्यते, तयोरेकफलत्वादिति ॥ ९, १० ॥

यस्तृतीयमादधीत स एतान् होमान् जुहुयात्[1] "लेकस्सलेकस्सुलेक" इति ॥ ११ ॥

"यः पराचीनं पुनराधेयादि"ति वचनात् द्वितीयमेव तु पुनराधेयम्, [1]तृतीयमा[ग]धानं भवति। तत्र येऽग्नय इति हुत्वा लेकहोमाः सर्वदर्विहोमान्ते। आग्न्याधेयिकानां वा दर्विहोमानां प्रत्याम्नायः

क. पवमानहविरादीनां स्थानापन्नोऽयमनुनिर्वाप्यः तेषां कालानपि गृह्णाति, स्थानापत्तिबलादिति। ऐन्द्राग्नः, आग्नावैष्णवः, अग्नीषोमीय इति द्विदेवत्याः। तेषां यदनुष्ठानं तत्रैवाऽऽग्निवारुणस्यानुष्ठानम्। द्विदेवत्यत्वरूपलिङ्गस्य स्थानापेक्षया प्राबल्यादिति।

ख. अग्निहोत्रमारप्स्यमान इति प्रकृत्याजस्रविधानात् अमावास्याधान एवेति नियमाच्च नाजस्रधारणम्, न वाऽऽरम्भार्थानि दशहोतृचतुर्होत्रादीनीति। यावज्जीवं सकृदेवाऽऽरम्भात् तदर्थं सकृत्कृतैरेव सर्वप्रयोगोपकारसिद्धेरिति।

ग. ब्राह्मणे "यः पराचीनं पुनराधेयादग्निमादधीत स एतान् होमान् जुहुयात्" इति पुनराधेयानन्तरभाविन्येवाऽऽधाने एतद्धोमविधानात् तच्च तृतीयमाधानमेव भवति। प्रथमत आधानम्, द्वितीयं पुनराधानम्, तृतीयमाधानमिति। तत्रैव लेकहोमाः। "लेकस्सलेकस्सुलेकः" "केतस्सकेतस्सुकेतः" "विवस्वाँ अदितिः" (तै. सं. १-५-३-३) इति मन्त्रत्रयेण क्रियमाणास्त्रयो होमाः लेकहोमाः।

1. B. Ms. reads अग्न्याधेयं between पुनराधेयं and तृतीयमाधानम्

१. लेकस्सुलेकस्सुलेकस्तेन आदित्या आज्यं जुषाणा वियन्तु ॥ १ ॥
केतस्सकेतस्सुकेतस्तेन आदित्या आज्यं जुषाणा वियन्तु ॥ २ ॥
विवस्वाँ अतिर्देवजूतिस्तेन आदित्या आज्यं जुषाणा वियन्तु ॥ ३ ॥

सामान्यात्। "त्वन्नो अग्ने" "स त्वन्नो अग्ने" इत्याग्निवारुणस्य याज्यानुवाक्ये। स चाग्नीषोमीयविकारः अन्वाहार्यो [1]दक्षिणा। येषां वा स्थाने सास्य दक्षिणा ॥ ११ ॥

## अरण्योस्समारूढो नश्येत् ॥ १२ ॥

आद्वितीयाद्धोमकालादजायमाने [क]अरण्योर्नाशः। अथाऽत्वरमाणः [2]पुनर्मन्थेदिति पुनर्मन्थनस्यैव विधानात्पुनर्होमो न लौकिकादिषु। एकस्या अप्यरण्या नाशे [ख]क्षये च नष्टः। उभयसाध्यत्वात् मन्थनस्य, प्रजोत्पत्तिवत् ॥ १२ ॥

## यस्य वोभावनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः ॥ १३ ॥

अविहृतेऽग्न्याहवनीये गार्हपत्यानुगमने उभयानुगमनम्, "पश्चाद्धि स तर्हि गत" इति लिङ्गात्। अभिनिम्रोचनमस्तमयः। अनुगमनं विनाशः। [ग]गार्हपत्याहवनीययोरेवाऽनुगमनयोः, [3]तयोः प्रधानत्वात्। गार्हपत्यस्यैवाऽरणिनाशे तस्य नित्यमन्थ्यत्वात्। केचिदविशेषश्रुतेः सर्वत्रेच्छन्ति ॥ १३ ॥

## पुनराधेयमित्याश्मरथ्योऽग्न्याधेयमित्यालेखन आलेखनः ॥ १४ ॥

इत्यकोनत्रिंशी कण्डिका ॥

क. अरणिसमारोपणे कृते पुनर्मन्थने क्रियमाणे यदि कालद्वयं यावन्न जायतेऽग्निः, सोऽग्निनाश इत्युच्यते।

ख. क्षयो मन्थनायोग्यता। प्राग्द्वितीयहोमादरण्योरन्यतराया वा नाशे पक्षहोमादि कृत्वाऽरण्योस्समारूढस्य नाशेऽपि पुनराधानमेव।

ग. यद्यपि सूत्रे 'उभावग्नी अनुगतौ' इत्यविशेषेण श्रवणम्, तथापि गार्हपत्याहवनीययोरेवानुगमनं विवक्षितम्, तयोरेव प्रधानत्वात्—गार्हपत्यस्येतराग्नियोनित्वेन, आहवनीयस्य प्रधानहोमसाधनत्वेन च।

1. Ibid, अन्वाहार्यदक्षिणा.
2. B. Ms. reads उद्धन्मन्थेत् for पुनर्मन्थेत् and अन्वारभमाणः for अत्वरमाणः।
3. B. Ms. omits तयोः

[क]पुनराधेयमित्याश्मरथ्यमतिः । अपि पुनराधानव्यं पुनराधेयमग्न्याधेयोक्तेन विधानेनेत्यालेखनमतिः । पुनरारम्भत्वादुपदेशः । पुनराधेयेऽन्वारम्भणीया विध्यदसि सारस्वतहोमयोः पुरस्ताच्चतुर्होतुः प्रथमायां पौर्णमास्याम् ॥ १४ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिविरचिते

अष्टमः पटलः समाप्तः

पञ्चमप्रश्नश्च समाप्तः ॥

( समाप्तमाधानं पुनराधानं च )

क. पुनराधेयस्य रूढिमङ्गीकृत्य पुनराधानमेव कर्तव्यमित्याश्मरथ्यो मनुते । पुनः आधेयम् अर्थात् आधानमेव पुनः कर्तव्यमित्यालेखनोऽभिप्रैति ।

॥ श्रीः ॥

# आपस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

## षष्ठः प्रश्नः

### प्रथमः पटलः

**अग्निहोत्रं व्याख्यास्यामः ॥ १ ॥**

अग्निहोत्रमिति कर्मनामधेयम् । अग्नेर्यत्र सायमाहुतिः प्रथमेति । [1]तस्य निर्वचनम्–"[क]स एतद्भागधेयमभ्यजायत । यदग्निहोत्रम् । तस्मादग्निहोत्रमुच्यत" इति । तद्वक्ष्याम इत्यधिकारः । तत्साधनेऽप्यग्निहोत्रशब्दः–"यस्याग्निहोत्रं दुह्यमानँ स्कन्दति" इति । "अग्नेर्हुतादजनि" इति गौरप्यग्निहोत्रमुच्यते ॥

क. स इत्यग्निरुच्यते । अयमत्र सङ्ग्रहः–प्रजापतिना सृष्टोऽग्निः अबिभेत्–प्रजापतिरयं हविर्विहनार्थमेव मां प्राप्नोति, न तु मह्यं किञ्चिद्ददाति हविः । भागरहितोऽहं कथं जीवेयम् ? कथं वा कार्यकरणसमर्थो भवेयम् ? इति । एवं भीतस्स पुनः प्रजापतिशरीरमेव प्रविष्टवान् । स्वशरीरे प्रविष्टमग्निं प्रजापतिरब्रवीत्–जायस्वेति । भागं विना कथमुत्पद्येय, कथं वा जीवेयम् इत्यग्निनोक्तः प्रजापतिः इदमग्निहोत्राख्यं हविस्तुभ्यमेव हूयेत इत्यब्रवीत् । ततस्सोऽग्निस्तदभिलक्ष्यैवोत्पन्नः प्रजापतिशरीरात्पुनः । यस्मादग्निमुद्दिश्य हूयते तस्मादग्निहोत्रमुच्यते इति । तदिदम् – "सोऽग्निरबिभेत्" (तै. ब्रा. २-१-२-९) इत्यारभ्य "तस्मादग्निहोत्रमुच्यते" इत्यन्तेन भागेन निरूपितं ब्राह्मणे । अग्नौ होत्रं होमो यस्मिन् कर्मणि तदग्निहोत्रमिति बहुव्रीहिसमासेनाग्निहोत्रशब्दः कर्मनामधेयम् । तत्र "अग्निहोत्रप्रायणा यज्ञाः किं प्रायणमग्निहोत्रमुच्यते" (तै. ब्रा. २-१-९-१) "असंस्थितो वा एष यज्ञः । यदग्निहोत्रम्" इत्यादि प्रमाणम् । तत्साधनीभूते द्रव्येऽप्यग्निहोत्रशब्दः प्रयुज्यते–यथा धर्मो वा एषोऽशान्तः अहरहः प्रवृज्यते यदग्निहोत्रम्" इति । अग्निहोत्रार्थं पयोदोहनार्था गौरप्यग्निहोत्रशब्देनोच्यते । यथा–"अग्नेर्हुतादजनीति । गौर्वा अग्निहोत्रम्" इति । (तै. ब्रा. २-१-६-३) अत्र त्रिष्वप्यर्थेषु प्रयुज्यमानोऽग्निहोत्रशब्दोऽन्तोदात्त एवोपलभ्यते । तत्कथमिति न ज्ञायते, समासभेदे स्वरभेदस्यावश्यकत्वादिति ।

1. B. Ms. omits तस्य.

अधिवृक्षसूर्य आविस्सूर्ये वा "धृष्टिरसि ब्रह्म यच्छ" इत्युपवेषमादाय गार्हपत्यमभिमन्त्रयते "सुगार्हपत्य" इति ॥ २ ॥

वृक्षाणामुपर्येव सूर्यांशवो न पृथिव्याम्, सोऽधिवृक्षसूर्यः कालः। आविः प्रकाशवाची। प्रकाशो यत्र सूर्यो दृश्यते रश्मिभिरनभिभूत[1]-मण्डलः स आविस्सूर्यः कालः। तस्मिन् काले धृष्ट्यादानादि। उपवेषशब्द उद्धाटनार्थे काष्ठे वर्तते [2]सद्यः कृत्त एव, न संस्कृते। मिश्रयोरप्यग्न्यो[क]र्गार्हपत्याभिमन्त्रणम्। उपदेशो धृष्टिनिवृत्त्यर्थे गार्हपत्यग्रहणम् ॥

अथैनं बोधयति "उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते स ँसृजेथामयञ्च। अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत" इति ॥ ३ ॥

[ख]उद्धाटितस्यापि मन्त्रेण बोधनञ्च नित्यवत्। अतो निर्मथितेऽग्नौ लौकिके च कृत उपावरोहणे न निवर्तते। उपदेशः—अर्थात्स्थापितस्योद्धाटनं बोधनञ्च। अतस्तद्द्वयमुद्धाटिते निवर्तते। धृष्टयादानं तूद्धरणार्थत्वात्क्रियते। अन्यार्थमुद्धृत आहवनीये धृष्टयादानादि सर्वं निवर्तते ॥ ३ ॥

उद्धरेत्येव सायमाह यजमानः। उद्धरेति प्रातः ॥ ४ ॥

क. सत्यप्यग्न्यन्तरमिश्रणे गार्हपत्यबुध्यैवाभिमन्त्रणं कर्तव्यमिति। दर्शपूर्णमासवत् धृष्टेरभिमन्त्रणं मा भूदित्येतदर्थं गार्हपत्यग्रहणमित्युपदेशमतमिति।

ख. भस्मादिभिरप्रच्छन्नस्य स्वत एव ज्वलतोऽप्यग्नेरुद्दीपनं मन्त्रेण कर्तव्यमेव, नित्यतया विधानादिति।

1. B. Ms. 1, omits रश्मिभिरनभिभूत: O. Ms.2, reads only अनभिभूतः

2. B. Ms. 1, omits सद्यः कृत एव

[1]उद्धरेत्येवेत्यवधारणात् कालद्वयेऽप्युच्यते–[2]यदापि प्रातः अग्निमुपावरोहेदिति । एवं स्वयंहोमे च । इतरथा [3]न प्रदीयेताऽऽत्मनोऽनुज्ञा ॥ ४ ॥

सहस्रं तेन कामदुघोऽवरुन्धे ॥ ५ ॥

कामदुघाः यद्यदिच्छन्ति तत्तद्दुहन्ति, तासां लाभोऽवरोधः । अर्थवाद इति न्यायः । इतरथा मन्त्रानित्यता स्यात् । [क]उपदेशः–कामनायामनित्या प्रातरनुज्ञा ॥ ५ ॥

"वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाऽध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि" इति गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरति ॥६॥

उद्धरति उद्गृह्णाति ज्वलन्तम् ॥ ६ ॥

"भूर्भुवस्सुवरुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान् यच्च विद्वाꣳश्चकार । अह्ना यदेनः कृतमस्ति पापꣳसर्वस्मान्मोद्धृतो मुञ्च तस्मात्" इत्युद्ध्रियमाणमभिमन्त्रयते यजमानस्सायम् । "रात्रिया यदेनः कृतमस्ति पापꣳसर्वस्मान्मोद्धृतो मुञ्च तस्मात्" इति प्रातः ॥ ७ ॥

सर्वो मन्त्रः प्रातरपि । 'रात्रिया यदेन' इत्येतावान् विकारः ॥ ७ ॥

"अग्निपतयेऽग्नये मे विध्यग्निपतयेऽग्नये मे मृड । अमृताहुतिममृतायाञ्जुहोम्यग्निं पृथिव्याममृतस्य जित्यै । तयाऽनन्तं काममहं जयानि प्रजापतिर्यं प्रथमो जिगायाग्निमग्नौ स्वाहा" ॥

इति प्रथमा कण्डिका

क. 'उद्धरेत्येवाह यजमानः' इत्येतावतैव कालद्वयेऽप्यनुज्ञायां सायं ग्रहणेन तत्रैव नियमः । प्रातस्तु कामनावत एवेत्येतदर्थं गुरुसूत्रकरणमित्युपदेशमतमिति ।

1. B. Ms. 1. adds उद्धरणार्थत्वात before उद्धरत्येव
2. B. 2 reads यदा च न प्रातरग्निमुप नावरोहेत् ।
3. Ad. reads प्रतीयेत for प्रदीयेत

"अग्ने सम्राडजैकपादाहवनीय दिवः पृथिव्याः पर्यन्तरिक्षांल्लोकं विन्द यजमानाय। पृथिव्यास्त्वा मूर्धन्त्सादयामि यज्ञिये लोके। यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामि" इति पुरस्तात्परिक्रम्योदङ्मुखः प्रत्यङ्मुखो वा सायमायतनेऽग्निं प्रतिष्ठापयति प्राङ्मुखः प्रातः ॥ १ ॥

पुरस्तादाहवनीयस्य गत्वा प्रत्यङ्मुख उदङ्मुखो वा स्थापयति। न तु पुरस्ताद्गच्छति प्रातः ॥ १ ॥

स्वयं यजमान इध्मानाहरति–"विश्वदानीमाभरन्तो नातुरेण मनसा। अग्ने मा ते प्रतिवेशा रिषाम" इत्येतया ॥ २ ॥

यजमान एव [क]स्वयमाहरति [1]इध्मानग्न्यायतनम्, न नेदिष्ठी। उपदेशः–[2]अध्वर्युपत्नीभ्यामाहरणप्रतिषेधः ॥ २ ॥

"[१ख]यदग्ने यानि कानि चे"त्येताभिः पञ्चभिः प्रतिमन्त्रमग्निषु महत इध्मानादधाति आहवनीये वर्षिष्ठम् ॥३॥

क. अग्न्यगाराद्गृहीत्वा विहारदेशानयनमेवात्र विवक्षितम्। नारण्यादाहरणम्, अशक्यत्वादस्मिन् काल इति।

ख. "यदग्ने यानि कानि" "यदत्त्युपजिह्विका" "रात्रिंरात्रिमप्रयावम्" "नाभा पृथिव्याः समिधानं" " यास्सेना अभित्वरीः " इति पञ्चर्चः (तै. सं. ४-१-१०-१-५)

1. O. Ms. omits from अग्न्यायतनम् to the end. B.Ms. reads wrongly.
2. B. Ms. 2 reads अध्वर्युपत्नी प्रतिषेधः।

१. यदग्ने यानि कानि चाते दारूणि दध्मसि। तदस्तु तुभ्यमिद्घृतं तज्जुषस्व यविष्ठ्य ॥ १ ॥
यदत्त्युपजिह्विका यद्वम्रो अति सर्पति। सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥ २ ॥
रात्रिंरात्रिमप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै। रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम ॥ ३ ॥
नाभा पृथिव्याः समिधानमग्निं रायस्पोषाय बृहते हवामहे। इरम्मदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम् ॥ ४ ॥
यास्सेना अभीत्वरीराव्याधिनीरुगणा उत। ये स्तेना ये च तस्करास्तांस्ते अग्नेऽपिदधाम्यास्ये ॥ ५ ॥
( तै. सं. ४-१-१०-१ )

एकैकस्मिन्नेवं [1]मन्त्रेणाऽऽदधाति । 'आहवनीये वर्षिष्ठम्' इत्येकवचनात् । इतरथा वर्षिष्ठानित्येव ब्रूयात् । वर्षिष्ठो गुरुतरस्सर्वतो विस्तीर्णः । उपदेशो बहवः, "[क]दारूणि" इति लिङ्गात् ॥ ३ ॥

**यथाऽऽहितास्तेनाऽऽनुपूर्व्येणाऽऽहवनीयाद्वा प्रक्रम्य ॥**

प्रक्रम आरम्भः । आहवनीयात्प्रक्रमेऽपि यथाऽऽहितास्तथेतरेषां क्रमः । केचित् पश्चिमात्, प्रतिमन्त्रमेकैकस्मिन् ॥ ४ ॥

**तथाऽग्निः ॥ ५ ॥**

[ख]तथाऽग्निः कर्तव्यो बलवान् ॥ ५ ॥

**आधेयो यथाहुतिर्न व्यवेयात् ॥ ६ ॥**

आधेयश्चाऽच्छिद्र इध्मः, तस्मिन् यथाऽऽहुतिर्हुता भित्त्वाऽग्निं भूमिं न प्राप्नोति ॥ ६ ॥

**नान्तराग्नी सञ्चरति ॥ ७ ॥**

'पूर्वोऽनुगन' इत्युत्तरत्र वचनात् गार्हपत्याहवनीययोरन्तरा गमने प्रतिषेधः । उपदेशस्सर्वत्र प्रतिषेधः, अविशेषवचनात् । "[ग]पश्चाद्धि स तर्हि गतः" इति हेतुवचनात् ॥ ७ ॥

क. "यदग्न" इति प्रथममन्त्रे "दारूणि दध्मसि" इति बहुवचनश्रवणाद्बहुत्वं काष्ठानामित्युपदेशः । एवञ्च प्रथमया ऋचा गार्हपत्ये एकां समिधमादधाति । द्वितीयया दक्षिणाग्नावेकाम् । तृतीययाऽऽहवनीये वर्षिष्ठामेकाम् । चतुर्थ्या सभ्य एकाम्, पञ्चम्याऽऽवसथ्य एकामिति ।

ख. 'तथाऽग्निः' इत्येतावदेकं सूत्रम् । तत्र कर्तव्यो बलवानित्यध्याहारः । 'आधेयो यथाहुतिर्न व्यवेयात्' इत्यपरम् । तस्य भाष्यम्—'आधेयश्च' इत्यादि । निबिडतयाऽग्नौ इध्ममादध्यात् येनाहुतीनां तं भित्वा भूमिगमनं न स्यादिति । रुद्रदत्तस्तु—अन्यथा व्याख्यात्यैकसूत्रतामङ्गीकृत्य—तथाऽग्निरुन्नुन्नार्चिः कर्तव्यो यथेध्मस्योपरि दत्तामाहुतिमिध्मो न व्यवदध्यादिति ।

ग. स पूर्वः पूर्वभागे स्थित आहवनीयादिरग्निः, पश्चात् गार्हपत्यं स्वयोनिं प्राप्तः । अत्र पूर्वपदेन नाऽऽहवनीयमात्रं गृह्यते । किन्तु दक्षिणाग्न्यादीनां सर्वेषां ग्रहणम् । अतश्च ययोः कयोश्चिदग्न्योरन्तराले न गन्तव्यमिति उपदेशमतम् ।

1. B. Ms. 1, reads मन्त्रेणाग्नावादधाति.

## यदि पूर्वोऽनुगतस्सञ्चर्यम् ॥ ८ ॥

## पश्चाद्धि स तर्हि गतः ॥ ९ ॥

[ख]यत्रावक्षाणेभ्यो मन्थनं तत्राऽऽहवनीयो गार्हपत्यं न गच्छति। तत्राऽनुगमनेऽपि न सञ्चार्यम्। सञ्चरणे सर्वप्रायश्चित्तं यत्र [ग]नान्यत् प्रत्यक्षम् ॥ ८, ९ ॥

## कामं हुते सञ्चर्यमित्येके ॥ १० ॥

हुते लौकिकत्वादग्नेः [1]कर्मानङ्गत्वान्न नियमः। अनत्यवायस्सञ्चरणे। वर्जिते त्वभ्युदयः। तस्यातिक्रमे प्राणायामः, '[ग]नियमातिक्रमे चान्यस्मिन्' इति ॥ १० ॥

## नक्तमाहवनीयं धारयति ॥ ११ ॥

[2]होमद्वयार्थं प्रणेष्यामीत्युक्त्वा[3] सङ्कल्पं नक्तधारणम्। विकल्पश्चायम्। 'प्राङ्मुखः प्रातः' इति वचनात् ॥ ११ ॥

क. ज्वलनार्थमग्नौ प्रक्षिप्तानां काष्ठानां मध्ये दग्धावशिष्टानि काष्ठानि अवक्षाणानीत्युच्यन्ते। See commantary of रुद्रदत्त on the sutra of ९-९-११ ) यदि गार्हपत्य आहवनीयो वाऽनुगच्छेत्, तेभ्य एवावक्षाणेभ्योऽधिमन्थितव्यः इति सूत्रकारेणावक्षाणमथनविधिरुक्तः। तस्मिन् पक्षे पूर्वाग्नेरपराग्निगमनं नास्ति, तस्य स्वयोनित्वाभावात्। तदा सञ्चारोऽन्तरा न कर्तव्य इति।

ख. यत्र सञ्चरणविशेषे प्रायश्चित्तविशेष उपदिष्टः। यथा–यस्य सान्नाय्येऽधिश्रिते हविषि वा निरुप्ते पुरुषः श्वाऽनो रथो वाऽन्तराग्नी व्रीयात् दुर्वराहैडको वा तदत्राऽपोऽन्वतिषिच्य गामन्वत्याऽऽवर्तयेत्' ( आप. श्रौ. ९-१०-१९ ) इत्यादिः तादृशानि स्थलानि वर्जयित्वाऽन्यत्र सर्वप्रायश्चित्तमेवेति।

ग. पुरुषार्थप्रतिषेधेऽयं पर्यवस्यति। तदतिक्रमे धर्मशास्त्रोक्तं प्रायश्चित्तम्। यथोक्तमापस्तम्बेन 'आतमितोः प्राणमायच्छेदित्येके' ( आप. ध. २-१२-१८ ) इत्युक्त्वा 'नियमातिक्रमे चाऽन्यस्मिन्' ( आप. ध. २-१२-१८ ) इति प्राणायामस्यैवातिदेशादिति।

1. B. Ms. reads कर्माङ्गत्वान्नायं नियमः
2. B. Ms1, reads wrongly प्रातर्होमद्वयार्थम्
3. O. Ms2. reads कृत्वा सङ्कल्पम्

नित्यो गतश्रियो धार्यते ॥ १२ ॥

गतश्रिय आश्वपदिक एवाऽऽहवनीयो धार्यते । दक्षिणाग्निसभ्यावसथ्याः पुनः पुनः यद्यपि मथित्वाऽऽहिता [क]इत्युपदेशः । नित्यधारणं सभ्यावसभ्ययोरिति भरद्वाजमतिः हिरण्यकेशिमतिश्च । आश्वलायनमतिस्तु सर्वेषु पक्षेष्वाधानप्रभृति सर्वे गतश्रियो धार्या इति ॥ १२ ॥

नित्यं गार्हपत्यम् ॥ १३ ॥

तथाऽन्वाहार्यपचनं यदि मथित्वाऽऽहितोभवति ॥

पुनर्नित्यवचनाद्गतश्रियोऽपि गार्हपत्यस्य नित्यधारणम् । दक्षिणाग्नेश्च मथित्वाऽऽहितस्य । धार्याणामनुगतानामवक्षाणेभ्यो मन्थनम् । भस्मना अरणी [1]संस्पृश्य वा । अनुगमनेन योनिं गच्छन्ति । नित्यधार्या यावज्जीवम् । योनित [ख]उत्पत्तिरितरेषां धार्याणामपि । 'यदि गार्हपत्य आहवनीयो वा' इति द्वयोरेव नियमात् ॥ १३, १४ ॥

यद्याहार्योऽहरहरेनं दक्षिणत आहरन्ति ॥ १५ ॥

अहरहस्सायं प्रातः दक्षिणस्मादेशादाहरन्ति लोके यजमानाः । [ग]नक्तधारणे आहवनीये दक्षिणाग्न्यादीनामाहार्याणां धारणम्, एककर्मत्वात् । केचिदाहवनीयस्यैव वचनात् ॥ १५ ॥

क. अयमभिसन्धिः–' तथा (नित्यं) अन्वाहार्यपचनं यदि मथित्वाऽऽहितो भवति ' इत्युत्तरत्र सूत्रकारो वक्ष्यति । तेन दक्षिणाग्नेर्नित्यधारणे आधानकाले मथित्वाऽऽधानं हेतुरुक्तो भवति । यदि स एव हेतुस्सभ्यावसथ्ययोस्स्यात तर्हि तयोरपि नित्यधारणे प्राप्ते तस्याऽऽहवनीयमात्रे नियमनात् इतरेषां त्रयाणां मथित्वाऽऽहितानामपि न नित्यधारणम्, किन्तु तदा तदा स्वयोनित एवोत्पादनामिति उपदेशमतमिति ।

ख. इतरेषां गार्हपत्याहवनीयव्यतिरिक्तानां त्रयाणाम् । धार्याणामपि तेषां योनित एवोत्पादनम नावक्षाणेभ्यो मन्थनम् । तद्विधायकसूत्रे ' यदि गार्हपत्य आहवनीयो वाऽनुगच्छेत् ' (आप. श्रौ. ९-९-११) इति द्वयोरेव तयोरुपादानादिति ।

ग. यदि नक्तमाहवनीयो धार्यते तदा इतरेषामप्यग्नीनामाहार्याणां धारणं कर्तव्यम् । प्रणयनस्यैकत्वात्, तस्य च सर्वार्थत्वादिति ।

1. ध्रियत इति रुद्रदत्तीयः पाठः
2. B. Ms1, adds मथितव्यं after संस्पृश्य

उपवसथ एवैनमाहरेयुर्नवावसान एवैनमाहरेयुरिति वाजसनेयकम् ॥ १६ ॥

इति द्वितीया कण्डिका

उपवसथेऽन्यन्वाधानकाले पक्षे । अवसानं स्थापनम् । नवमवसानं नवावसानम् । [1]अवसानान्तरेऽन्यस्याहरणम् ॥ १६ ॥

परिसमूहनेनाग्नीनलङ्कुर्वन्ति ॥ १ ॥

परिसमूहनं सर्वतस्समूहनम्, शोधनमित्यर्थः । मण्डनमलङ्करणम् । कुर्वन्तीति बहुवचनाद्यजमानः पत्नी चाध्वर्योस्सहायावलङ्करणे मन्त्रवर्जम् ॥ १ ॥

पुरस्तादलङ्कारास्सायमुपरिष्टादलङ्काराः प्रातः ॥

पुरस्ताद्धोमादलङ्कारा येषां त इमे पुरस्तादलङ्काराः । अस्मिन्नेव काले । उपरिष्टादलङ्कारा 'दीदिहि' इत्युपसमिन्धनात्परतः, पूर्वतुल्यत्वात् ॥ २ ॥

एतद्वा विपरीतम् । उभयतोऽलङ्कारास्सायं तथा प्रातरित्येके ॥ ३ ॥

"अग्ने गृहपते शुन्धस्व" इति गार्हपत्यम्, अग्ने वह्ने शुन्धस्व" इति दक्षिणाग्निम्, "अग्ने सम्राट्च्छुन्धस्व" इत्याहवनीयम्, "अग्ने सभ्य शुन्धस्व" इति सभ्यम्, "अग्ने परिषद्य शुन्धस्व" इत्यावसथ्यम् ॥ ४ ॥

उदगग्रैः प्रागग्रैश्च दर्भैस्तृणैर्वाऽग्नीन् परिस्तृणात्यग्निमग्नी वा ॥ ५ ॥

1. B. Ms1, reads अवसानान्तरेण

सर्वेषां [क]परिस्तरणम्, न सभ्यावसथ्ययो रित्युपदेशः ॥ ५ ॥

खादिरस्स्रुवो वैकङ्कत्यग्निहोत्रहवणी बाहुमात्र्यरत्निमात्री वा ॥ ६ ॥

पुनस्स्रुवविधानादन्य एवाग्निहोत्रार्थः स्रुवः ॥ ६ ॥

प्रसृताकृतिरार्यकृताऽग्निहोत्रस्थाल्यूर्ध्वकपालाऽ[ख]चक्रवर्ता भवति ॥ ७ ॥

प्रसृताकृतिः हस्ताग्रतुल्याकृतिः ऊर्ध्वकपाला यस्या ऊर्ध्वानि कपालानि न वक्राणि । अचक्रावर्ता, चक्रेण त्ववरिवर्ता ॥ ७ ॥

दक्षिणेन विहारमग्निहोत्री तिष्ठति तां यजमानोऽभिमन्त्रयते—"इडासि व्रतभृदहं नावुभयोर्व्रतं चरिष्यामि सुरोहिण्यहं नावुभयोर्व्रतं चरिष्यामीड एहि मयि श्रयस्वेर एह्यदित एहि गौरेहि श्रद्ध एहि सत्येन त्वा ह्वयामि" इति ॥

अग्निहोत्री धेनुरग्निहोत्रार्था । [1]सा च सुष्ठु रोहिणी, मन्त्रलिङ्गात् ॥ ८ ॥

अथ वेदिदेशमभिमृशति "इयमसि तस्यास्तेऽग्निर्वत्सः सा मे स्वर्गञ्च लोकममृतञ्च धुक्ष्व" इति ॥ ९ ॥

"पूषासि" इति दक्षिणतो वत्समुपसृज्य प्राचीमावृत्य दोग्ध्युदीचीं प्राचीमुदीचीं वा ॥ १० ॥

क. सभ्यावसथ्ययोर्होमाभावेऽपि परिस्तरणं कर्तव्यमेव, 'अग्नीन् परिस्तृणाति' इत्यविशेषवचनात् । तेन सर्वाग्निव्यापिपरिस्तरणस्यैव कर्माङ्गत्वावगतेरिति । उत्तरकार्यार्थत्वात्संस्काराणाम् उत्तरत्र कार्याभावे संस्काराणामप्रवृत्तेः न सभ्यावसथ्ययोः परिस्तरणमित्युपदेशमतमिति ।

ख. चक्रभ्रमणेन या निर्मीयते सा चक्रवर्ता सा न भवति किन्तु हस्तेनैव कृतेत्यर्थः ।

1. Ms1, reads सा च सुरोहिणी मन्त्रलिङ्गात्

दक्षिणतो गोर्वत्सो विमुच्यते । प्रदक्षिणमावर्तयित्वा पुनः प्राची स्थाप्यते ॥ ९, १० ॥

**न शूद्रो दुह्यात् । असतो वा एष सम्भूतो यच्छूद्रः ॥ ११ ॥**

असतः [1]अधः प्रदेशात् पादतः ॥ ११ ॥

**दुह्याद्वा ॥ १२ ॥**

**यदेव गार्हपत्येऽधिश्रयति पवयत्येवैनत् ॥ १३ ॥**

**अग्निहोत्रस्थाल्या दोहनेन च दोग्धि ॥ १४ ॥**

इति तृतीया कण्डिका ॥

स्थाल्या दोहनेन च दुह्यते ॥ १४ ॥

**[क]पूर्वौ दुह्याज्ज्येष्ठस्य [ख]ज्यैष्ठिनेयस्य यो वा गतश्रीः स्यात् । अपरौ दुह्यात्कनिष्ठस्य कानिष्ठिनेयस्य यो वाऽऽनु[ग]-जावरो यो वा बुभूषेत् ॥ १ ॥**

**न स्तनान् सम्मृशति ॥ २ ॥**

[घ]प्रस्नवनार्थस्तनस्पर्शनं प्रतिषिध्यते । अशक्यत्वाद्दोग्धुमनुपस्पृशता ॥ २ ॥

**यथोपलम्भं नित्ये कल्पे दोग्धि ॥ ३ ॥**

यथोपलम्भमनियमेन पूर्वापराविति नियमो नास्ति दोहनस्य ॥ ३ ॥

क. These two sutras are repetition verses of तै. ब्रा. २-१-८-१ ।

ख. ज्येष्ठभार्यायाः पुत्रो ज्यैष्ठिनेयः । पूर्वापरशब्दौ स्तनवाचिनौ ।

ग. See footnote on sutra 2-29-3 for आनुजावर ।

घ. दोहनार्थमुन्मुखीकरणं प्रस्नवनम् । ‘ शोरप्पु ’ इति द्राविडभाषायाम् ।

1. O. Ms. reads अधमप्रदेशात्.

पूर्ववदुपसृष्टां दुह्यमानां धाराघोषञ्च यजमानोऽनुमन्त्रयते ॥ ४ ॥

अस्तमिते दोग्धि ॥ ५ ॥

अस्तमिते नियमः । अस्तमित उद्धरणप्रायश्चित्तविधानात् प्रागस्तमयादुद्धरणम् । मध्यवर्तिनः समिदाधानादेस्त्वनियमः–अस्तमितेऽनस्तमिते वा ॥ ५ ॥

अम्नरस्तमिते होतव्यम् ॥ ६ ॥

अम्नरस्तमिते ईषदस्तमिते होमः कार्यः ॥ ६ ॥

समुद्रो वा एष यदहोरात्रस्तस्यैते गाधे तीर्थे यत्सन्धी तस्मात्सन्धौ होतव्यमिति शैलालिब्राह्मणं भवति ॥ ७ ॥

समुद्रतुल्योऽहोरात्रः, तस्य गाधे तीर्थे यत्सन्धी, तयोरशक्यमवस्थातुम् । तदन्यदगाधम्, गाधे हुतं न नाशमुपयाति । तस्मात्सन्धौ होमः कार्यः । शैलालिनो नाम शाखिनः ॥ ७ ॥

नक्षत्रं दृष्ट्वा प्रदोषे निशायां वा सायम् ॥ ८ ॥

एकमपि नक्षत्रं दृष्ट्वा द्वितीयो होमकालः । प्रदोषस्सर्वेषूदितेषु । निशा यस्यां निशेरते भूतानि । एते चत्वारस्सायंहोमकालाः ॥ ८ ॥

उषस्युपोदयं समयाविषित उदिते वा प्रातः ॥ ९ ॥

उषा यस्यां प्रकाशो भवति तमोहानिः । समीप आदित्योदयस्य स उपोदयः कालः । समयाविषितः अर्धोदितः । तदाऽङ्गानि पूर्वम् । उदयादारभ्य यावत्सङ्गवम् । सङ्गच्छन्ते गावो यदा दोहनार्थं तृणादानाय गताः स सङ्गवः । सङ्गवान्तः प्रातःकालः, आश्वलायनमतात् ॥९॥

यदुदिते जुहोत्यग्निष्टोमं तेनावरुन्धे यन्मध्यन्दिने जुहोत्युक्थ्यं तेनावरुन्धे यत्पूर्वरात्रे जुहोति प्रथमं तेन

रात्रिपर्यायमाप्नोति यन्मध्यरात्रे जुहोति मध्यमं तेन रात्रिपर्यायमाप्नोति यदपररात्रे जुहोति जघन्यं तेन रात्रिपर्यायमाप्नोति ॥ १० ॥

यदुदिते सङ्गवात् पश्नो जुहोतीत्यापद्धोमकालः । ये [क]रात्रिपर्यायास्त्रयोऽतिरात्रे तानाप्नोति ॥ १० ॥

स न मन्येत सर्वेष्वेतेषु कालेषु होतव्यमापदि हुतमित्येव प्रतीयादिति विज्ञायते ॥ ११ ॥

एतेषु यज्ञाभिहितेषु होमं कुर्वन्नार्तो धा न कर्म त्यजतीति । स यज्ञलाभं न चिन्तयेदेतेषु कालेषु [ख]स्वस्थ [1]एव । यदाऽऽर्तो वाऽऽपदि जुहोति तदा हुतमित्येव प्रत्यवगन्तव्यम् । न तदाऽग्निहोत्रकालातिपत्तिप्रायश्चित्तम् ॥ ११ ॥

यो होमकालस्तोऽङ्गानाम् ॥ १२ ॥

इति चतुर्थी कण्डिका

होमकालस्सङ्कल्पयितव्यः कर्मादौ । अङ्गानामपि स एव कालो विहरणवर्जानाम् । उपदेशस्समिदाधानपरिस्तरणदोहनानि सायंहोमे होमकाले न कृतानीति प्रातर्होमेऽप्येषामनियम [2]एवेति ॥ १२ ॥

इति आपस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते षष्ठप्रश्ने

प्रथमः पटलः

क. रात्रौ भवाः पर्यायाः रात्रिपर्यायाः । ते चाऽतिरात्रसंस्थायां विहिताः । तत्र हि होतृचमसमुख्यैश्चतुर्भिश्चमसगणैः प्रचारे कृते एकः पर्यायः । एवं पर्यायत्रयं तत्र । तस्य विधिः 'षोडशिना प्रचर्य रात्रिपर्यायैः प्रचरति ' ( आप. श्रौ. १४-३-९. ) इत्यादिना ' एवं विहितो द्वितीयस्तृतीयश्च ' ( आप. श्रौ. १४-३-१६. ) इत्यन्तेन सूत्रगणेन निरूपितस्तत एवावगन्तव्यः ।

ख. स्वस्थस्यापीमे उदितादयः काला विधीयन्त इति न मन्तव्यम् । तस्य तु षष्ठादिसूत्रचतुष्टयोक्ता एव कालाः । आर्तस्याऽऽपन्नस्य वा इमे कालाः । तेषु करणेऽपि कृतत्वसम्पत्तिः, न कालातिपत्तिप्रायश्चित्तमिति ।

1. B. Ms. 2 reads स्वस्थ एतेषु कालेषु न कुर्यात् । पूर्वेष्वेव कुर्यात् after एव ।
2. B. Ms. 1 omits एव.

## द्वितीयः पटलः

**पत्नीवदस्याग्निहोत्रं भवति ॥ १ ॥**

पत्नी यस्मिन् विद्यते तदिदं पत्नीवत्। अस्य यजमानस्याग्निहोत्रं भवतीति वचनादवियोगोऽग्निहोत्रेण पत्न्याः। इतरथा स्व आयतने पत्न्युपविशतीत्यनेनैव सिद्धं पत्नीवत्त्वम्। अस्येति वचनात् न [क]नेदिष्ठी-(ष्ठि) पत्नी। मृतपत्न्येव कर्म करोति ॥ १ ॥

**स्व आयतने पत्न्युपविशति ॥ २ ॥**

स्वमायतनं पत्न्या दर्शपूर्णमाससिद्धम्—'देशाद्दक्षिणत उदीची'ति। केचित्तु पश्चाद्गार्हपत्यस्य प्राचीमुपवेशयन्तीह, 'तस्मात्पश्चात् प्राची पत्न्यन्वास्ते' इत्यनुवादात् ॥ २ ॥

**अपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्योपविश्य यजमानो "विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमि मयि श्रद्धा" इत्यप आचामति ॥**

आचामति भक्षयत्यप उपविष्टः ॥ ३ ॥

**"ऋतं त्वा सत्येन परिषिञ्चामि" इति सायं परिषिञ्चति। "सत्यं त्वर्तेन परिषिञ्चामि" इति प्रातः। आहवनीयमग्रेऽथ गार्हपत्यमथ दक्षिणाग्निमपि वा गार्हपत्यमाहवनीयं दक्षिणाग्निं यथा वाऽऽहिताः ॥ ४ ॥**

---

क. अयमाशयः—यो यजमानस्तस्यैव पत्नी, नान्याऽधिकरोति। अन्यस्याः कथं प्राप्तिरिति चेत्-इत्थम्, "यदि सत्राय दीक्षितानां प्रमीयेत योऽस्य नेदिष्ठी स्यात् तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन्" इत्यनेन सत्रे सम्भूय यजतां मध्ये यदि कश्चिन्म्रियेत तस्य स्थाने तन्निकटबान्धवं कञ्चन दीक्षयित्वा तेन सह यागं कुर्युरितरे इति विहितम्। एवं सति कुण्डपायिनामयने सत्रे यद्येवं सम्भवेत् तदा तत्र "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति" इति विहिते प्रसिद्धाग्निहोत्रधर्मके कर्मणि पूर्वं लब्धाधिकाराया मृतपत्न्याः अनन्तरं प्राप्ताधिकाराया नेदिष्ठपत्न्या वा प्राप्तिरस्ति। तयोरुभयोरपि निषेधार्थम् 'अस्ये'तिवचनमिति। रुद्रदत्तस्तु—यजमानस्यैव साम्यम्, न तु पत्न्या इति ख्यापनार्थम् अस्येति कथनमिति व्याचख्यौ।

न सभ्यावसथ्ययोः परिषेकः, त्रयाणामनुक्रमणात् ॥

" यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्ततिमनुसन्तनोमि" इति गार्हपत्यात् प्रक्रम्य सन्ततामुदकधारां स्रावयंत्याहवनीयात् ॥ ५ ॥

[क]अस्यामपि धारायामादिसंयोगो मन्त्रेण ॥ ५ ॥

" धृष्टिरसि ब्रह्म यच्छ " इत्युपवेषमादाय " भूतकृतस्थाऽपोढं जन्यं भयमपोढास्सेना अभीत्वरीः " इति गार्हपत्यादुदीचोऽङ्गारान्नि[1]र्वृत्य व्यन्तान् गार्हपत्येन कृत्वा सगरास्स्थेत्यभिमन्त्र्य जपति " अग्नय आदित्यं गृह्णाम्यह्ने रात्रिम् " इति सायम्। " आदित्यायाग्निं गृह्णामि रात्रिया अहः " इति प्रातः ॥ ६ ॥

व्यन्ताः अपेताः। आयातनात् [ख]बहिरपोह्योदक् स्थापयित्वा। अग्नये सूर्यायादित्यं गृह्णाम्यह्ने रात्रिम्। आदित्यायाग्नयेऽग्निं गृह्णामि रात्रिया अहः " इत्येवं केचित् [ग]संसृष्टहोमे। तदनुपपन्नम्; सूर्याग्निमित्यपरिपाठात्। परत्र च 'जातवेदो हविरिति गार्हपत्याभिधानात्। अतो नोहः ॥ ६ ॥

क. 'आधारे धारायां चादिसंयोगः' (आप. श्रौ. २४-२-२) इति परिभाषासूत्रे आधारसाहचर्यात् होमीयधारायामेव मन्त्रादिना संयोगः, नोदकधारायामिति भ्रमनिवृत्त्यर्थमस्यामपीत्युक्तमिति।

ख. " यन्मध्येऽग्नेरधिश्रयेत् रुद्राय पत्नीमपिदध्यात्। प्रमायुका स्यात् " ( तै. ब्रा. २-१-३-१ ) इति मध्येऽग्नेरधिश्रयणनिषेधात् बहिरपोहनमङ्गाराणाम्।

ग. अग्निसूर्ययोरुभयोरप्येकैकस्मिन् काले यो होमः क्रियते स संसृष्टहोमः, उभयोरप्युभयदेवताकत्वात्। तत्र मन्त्रे सायंकालिके सूर्यायेति पदं, प्रातःकालिके चाग्नय इति पदं संयोज्य पठन्ति केचित्। तदयुक्तम्; मन्त्रे सूर्यपदस्याऽपाठात्। उत्तरसूत्रगतमन्त्रेऽधिश्रयणार्थे जातवेदःपदस्य गार्हपत्यवाचकत्वेन देवतावाचकत्वाभावात्। अतो न देवतावाचकपदस्योह इति। आण्डपिल्लै तूहमिच्छति संसृष्टहोमे।

1. निरूह्य A. S. B. पाठः

"इडायाः पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व। ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानामिह रन्तिरस्तु। रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय" इति तेष्वग्निहोत्रमधिश्रयति ॥

इति पञ्चमी कण्डिका

रेतो वा अग्निहोत्रम्। न सुशृतं कुर्याद्रेतः कुलयेन्नोऽशृतमन्तरेवैव स्यात् ॥ १ ॥

कुलयेत् दहेद्रेतः। नोऽशृतं अन्तरा इवैव स्यात् ॥ १ ॥

समुदन्तं होतव्यम् ॥ २ ॥

समुदन्तं समुद्गतान्तम्। मध्ये यदा नोत्तिष्ठति फेनः एवंलक्षणं शृताशृतम् ॥ २ ॥

उदन्तीकृत्य प्रतिषिच्यम् ॥ ३ ॥

उदन्तीकृत्य उद्गतान्नमेव कृत्वा प्रतिषेकोऽपि कार्यः तृणावेक्षणं कृत्वा ॥ ३ ॥

अप्रतिषेक्यं स्यात्तेजस्कामस्य ब्रह्मवर्चसकामस्य पाप्मानं तुस्तूर्षमाणस्याथो सर्वेभ्यः कामेभ्योऽथो यः कामयेत वीरो म आजायेतेति ॥ ४ ॥

तुस्तूर्षमाणः पाप्मानं यः पश्चान्नेतुमिच्छति। [क]अप्रतिषेके कामाः। आज्येन तण्डुलैरोदनेनेति तस्य काम्यानि वाचनिकानि ॥ ४ ॥

अम्नरधिश्रितं वा ॥ ५ ॥

ईषदधिश्रितं वा प्रतिषिध्यते ॥ ५ ॥

क. योऽत्र तेजःप्रभृतीनि फलान्यभिवाञ्छति, न तेन प्रतिषेकः कर्तव्य इति।

" अदृब्धेन त्वा चक्षुषावेक्षे " इति तृणेन ज्वलताऽवेक्षते ॥ ६ ॥

तृणेन ज्वलतोपरि द्योतयते यथा दीप्तिः प्राप्नोति हविः। "क॰ अभिद्योतयति, अभ्येवैनद्धारयति " इति श्रुतेः । [1]अवेक्षते हविः ॥ ६ ॥

दोहनसंक्षालनं स्रुव आनीय " हरस्ते मा विनैषम् " इति तेन प्रतिषिञ्चत्यपां वा स्तोकेन ॥ ७ ॥

यदाप्यपां स्तोकेन तदापि स्रुवेणैव प्रतिषेकः ॥ ७ ॥

उद्भवस्थोदहं प्रजया प्र पशुभिर्भूयासꣳ हरस्ते मा विगादुद्यन् सुवर्गो लोकस्त्रिपुलोकेषु रोचये"ति पुनरेवावेक्ष्य अन्तरितꣳ रक्षोऽन्तरिता अरातयोऽपहता व्यृद्धिरपहतं पापं कर्माऽपहतं पापस्य पापकृतः पापं कर्म यो नः पापं कर्म चिकीर्षति प्रत्यगेनमृच्छ " इति त्रिः पर्यग्नि कृत्वा " घर्मोऽसि रायस्पोषवनिरिहोर्जं दृꣳह " इति वर्त्म कुर्वन् प्रागुद्वासयत्युदक् प्रागुदग्वा ॥ ८ ॥

न वर्त्म करोतीत्येके ॥ ९ ॥

वर्त्म मार्गः । यथा न वर्त्म तथोत्क्षिप्योद्वास्यते ॥ ९ ॥

" इह प्रजां पशून् दृꣳह " इति त्रिर्भूमौ प्रतिष्ठाप्य " सुभूतकृतस्स्थ प्रत्यूढं जन्यं भयं प्रत्यूढास्सेना अभीत्वरीः " इति गार्हपत्येऽङ्गारान् प्रत्यूह्य ॥ १० ॥

इति षष्ठी कण्डिका ॥

क, अनेनाऽभिधारणसंस्तवात् ज्वालाया हविस्सम्बन्धः कार्य इति ।

1. B. Ms. reads अभ्यवेक्षते हविः for अवेक्षते

त्रिः प्रतिष्ठाप्यते [क]यत्रोन्नयनं करिष्यति । पुनः प्रक्षेपः प्रत्यूहनम् ॥ १० ॥

" देवस्य त्वा सवितुः प्रसव " इति स्रुक्स्रुवमादाय " प्रत्युष्टꣳरक्षः प्रत्युष्टा अरातय " इत्याहवनीये गार्हपत्ये वा प्रतितप्य " अरिष्टो यजमानः पत्नी च " इति सम्मृश्य " हिरण्ययष्टिरस्यमृतपलाशा स्रोतो यज्ञानाम् " इत्यग्निहोत्रहवणीमभिमन्त्र्य " ओमुन्नेष्यामि हव्यं देवेभ्यः पाप्मनो यजमान"मिति सायमाह । " ओमुन्नयामि " इति प्रातः ॥ १ ॥

देवस्य त्वेत्येकवचनात् प्रतिद्रव्यं मन्त्रावृत्तिः । स्रुक्स्रुवयो [ख]स्सहादानमुपदेशः । प्रतितपनसम्मर्शने युगपत् ॥ १ ॥

" हविर्देवानामासि मृत्योर्मेऽभयꣳस्वस्ति मेऽस्त्वभयं मे अस्तु " इत्युपांशूक्त्वा " ओमुन्नय " इत्युच्चैरनुजानाति ॥ २ ॥

अपचारे यजमानस्य स्वयमात्मानमनुजानीयात् ॥ ३ ॥

अपचारः [1]कर्मण्यभावः । स्वयं होमेऽप्यात्मानं याचते, अनुज्ञाप्यते च; [2]संस्कारार्थत्वात् । नान्यावबोधनार्थम् ॥ ३ ॥

उन्नीयमान उभौ वाचं यच्छत आ होमात् ॥ ४ ॥

क. ' अपरेण गार्हपत्यमुन्नयनदेशे ' ( आप, श्रौ. ६-६-४ ) इति सादनविधौ सिद्धवदनुवादात् गार्हपत्यस्य पश्चिमभाग उन्नयनस्थानम् , देशान्तरस्याविधानात् ।

ख. ' स्रुक्स्रुवमादाय ' इत्येव सूत्रोक्तत्वात् तयोस्सहादानप्रतीतेरिति ।

1. B. Ms 1 adds अपविधिः before कर्मण्यभावः

2. O. ms1, reads पुरुषसंस्कारार्थत्वात्

न चाभिमीलते तिष्ठति च यजमानः ॥ ५ ॥

न चाभिमीलते [क]आहोमादेव यजमानः । स्थानं तु यावदुन्नयन-मेव ॥ ५ ॥

उन्नीत उपविशति ॥ ६ ॥

चतुरुन्नयति ॥ ७ ॥

यं कामयेत पुत्राणामभयमृध्नुयादिति तं प्रति पूर्ण-मुन्नयेत् ॥ ८ ॥

यस्य पुत्रस्यर्धिमिच्छति तं पुत्रं चित्ते कृत्वा पूर्णः स्रुव उन्नीयते ॥८॥

यदि कामयेत ज्येष्ठतोऽस्य प्रजार्धुका स्यादिति पूर्णं प्रथममुन्नयेत्तत ऊनतरमूनतरं कनिष्ठत इत्येतद्वा विपरीतम् । सर्वे समावद्वीर्या इति समम् ॥ ९ ॥

ज्येष्ठतः ज्येष्ठादारभ्य । ज्येष्ठस्य महत्यृद्धिः ऊनतर ऊनतरोऽन्ये-षाम् । अस्य यजमानस्येति, [ख]व्यपदेशात् । अध्वर्युकाम इत्युपदेशः । यजमानं पुत्रं कामयमानमध्वर्युरनुकामयत इति [ग]न्यायः । [2]विपरीते त्वन्त्यं पूर्णम् । [घ]समावद्वीर्याः तुल्यवीर्याः ॥ ९ ॥

क. उत्तरावधेरकथनात् अभिमीलनस्य होमसमाप्तिरेव स इत्यवगन्तव्यम् । स्थितिस्तु उन्नयनपर्यन्तमेव, ' उन्नीत उपविशति ' इत्युत्तरत्र विधानादिति ।

ख. अस्य पुत्राणाम् इति व्यधिकरणविभक्तिनिर्देशात् 'अस्य' शब्देन यजमान एव गृह्यते, न पुत्र इति ।

ग. मम पुत्र एवंभूयादिति प्रथमं यजमानः कामयेत । तमनुसृत्य तमेव काममध्वर्युः कामयेत । कुतः ? यजमानगामित्वात्फलस्य । " यां काञ्चन यज्ञे ऋत्विज आशिषमाशासते यजमा-नस्यैव सा " इति वचनाच्चेति ।

घ. यदि यजमानमनुकामयेताऽध्वर्युः—अस्य पुत्रास्सर्वे समानवीर्या भवेयुरिति तर्हि सर्वं सममुन्नयेदिति ।

1. B. Ms. omits पुत्रस्य and पुत्रम्

2. B. Ms.1, reads wrongly विपरीतेत्वन्त्यादिपूर्णः

यथोपलम्भं नित्ये कल्पे उन्नयाति ॥ १० ॥

इति सप्तमी कण्डिका

यथोपलम्भं यथाकाममनियमेन ॥ १० ॥

" अग्नये च त्वा पृथिव्यै चोन्नयामि " इति प्रथमम् " वायवे च त्वान्तरिक्षाय च " इति द्वितीयम् " सूर्याय च त्वा दिवे च " इति तृतीयम्, " चन्द्रमसे च त्वा नक्षत्रेभ्यश्च " इति चतुर्थम् ॥ १ ॥

"अद्भ्यश्चौषधीभ्यश्च" इति पञ्चमं जमदग्नीनाम् ॥२॥

" भूरिडा भुवरिडा सुवरिडा करदिडा पृथगिडा " इति वा प्रतिमन्त्रम् ॥ ३ ॥

अजामदग्नीनामपि भूरिडादि विकल्पः ॥ ३ ॥

" पशून्मे यच्छ " इत्यपरेण गार्हपत्यमुन्नयनदेशेऽभितरां वा सादयित्वा गार्हपत्ये हस्तं प्रताप्य सम्मृशति " सजूर्देवैस्सायं यावभिस्सायंयावानो देवास्स्वस्ति सम्पारयन्तु पशुभिस्सम्पृचीय प्रजां दृꣳह " इति सायम् । सजूर्देवैः प्रातर्यावभिरिति प्रातः ॥ ४ ॥

अभितरां गार्हपत्यस्यातिसन्निकृष्टाम् ॥ ४ ॥

[1]दशहोत्रा चाभिमृश्य पालाशीं समिधं प्रादेशमात्रीमुपरि धारयन् गार्हपत्यस्य समयार्चिर्हरति ॥ ५ ॥

समयार्चिः समीपेनार्चिषः ॥ ५ ॥

1. Su. for दशहोता P. of this part

"उर्वन्तरिक्षं वीहि" इत्युद्द्रवति ॥ ६ ॥

[1]"उर्वन्तरिक्षं वीहि" इति गमनमन्त्रः ॥ ६ ॥

उद्द्रवन् दशहोतारं व्याचष्टे ॥ ७ ॥

समं प्राणैर्हरति ॥ ८ ॥

"स्वाहाग्नये वैश्वानराय" इति मध्यदेशे नियच्छति ॥

मध्यदेशे विहारस्य नीचैर्यच्छति। केचिद्भूमिं [क]प्रापयन्ति "इयं वा अग्निर्वैश्वानर" इति ॥ ९ ॥

"वाताय त्वा" इत्युद्गृह्णाति ॥ १० ॥

"उपप्रेत संयतध्वं मान्तगात भागिनं भागधेयात्सप्तर्षीणाꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्युपप्रत्नमुपभूर्भुवस्सुवरायुर्मे यच्छ" इत्यपरेणाहवनीयं दर्भेषु सादयाति ॥ ११ ॥

इत्यष्टमी कण्डिका

दर्भेषु सादनं [2]कूर्चे उपसादनीये तस्य धारणम्। उन्नयनदेशे उपावहरणीयं कूर्चम्। न वा उन्नयनदेशे दर्भेषु सादनम्। 'दर्भेषु सादयन्ति' इत्यवचनात् ॥ ११ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

षष्ठप्रश्ने द्वितीयः पटलः

क. मन्त्रे वैश्वानरग्रहणात् "इयं वा अग्निर्वैश्वानर" इति भूमेरेव वैश्वानरस्तवनात् भूमिप्रापणमेव विधेरभिमतमिति ।

1. B. Ms. reads उर्वन्तरिक्षमन्विहि
2. B. Ms. omits कूर्चे

तृतीयः पटलः

[क]यस्याग्नावुद्ध्रियमाणे हूयते वसुषु हुतं भवति । निहितो धूपायञ्च्छेते रुद्रेषु । प्रथमामिध्ममर्चिरालभत आदित्येषु । सर्व एव सर्वश इध्म आदीप्तो भवति विश्वेषु देवेषु । नितरामर्चिरुपावैति लोहिनीकेव भवतीन्द्रे हुतं भवति । अङ्गारा भवन्ति । तेभ्योऽङ्गारेभ्योऽर्चिरुदेति । प्रजापतावेव । शरोऽङ्गारा अध्यूहन्ते । ततो नीलोपकाशोऽर्चिरुदेति । ब्रह्मणि हुतं भवति ॥ १ ॥

[ख]उध्द्रियमाणे नाहवनीयः प्रतिष्ठाप्यते । धार्यते त्वन्येनाहवनीयायतमस्योपरि । [1]शुन्धनपरिस्तरणलोपः । सर्वमन्यत् । धूपायञ्च्छेते धूमायन्नास्ते, न ज्वलति । मन्त्रक्रमेणेध्माः प्रक्षिप्यन्ते । यः प्रथमं प्रक्षिप्त इध्मः, तमर्चिरालभते, गृह्णाति । उपदेशः प्रथममेकमिध्मं यदार्चिर्गृह्णाति तदा होमः । सर्व एवेध्मस्सर्वेषु च प्रदेशेषु प्रदीप्तः नितरां

क. "यदग्निमुद्धरति । वसवस्तर्ह्यग्निः । वसुष्वेवास्याग्निहोत्रँ हुतं भवति" ( तै. ब्रा. २-१-१० ) इत्यनुवाकस्य किञ्चिद्विपरिणमय्यानुवादः क्रियतेऽत्रसूत्ररूपेण । अतो यथाश्रुतार्थोऽस्य तत एवावगन्तव्यः ।

ख. अयमाशयो भाष्यकारस्य—गार्हपत्यादग्निमुद्धृत्याहवनीयायतनेऽग्निं प्रतिष्ठाप्य ज्वालनपर्यन्तं सप्तावस्था भवन्ति । उद्धरणं गार्हपत्यात्प्रथमावस्था । आयतने निहितस्य धूमविशिष्टताऽवस्थितिर्द्वितीया । तत इध्मकाष्ठ प्रथमोर्चिस्सम्बन्धस्तृतीया । ततस्सर्वेध्मकाष्ठव्याप्तिश्चतुर्थी । ततो ज्वालाधिक्याल्लोहितीभवनं पञ्चमी । ततोऽङ्गारीभावश्शान्तायामर्चिषि । ततोऽङ्गाराणामुपरि ज्वालायाश्चाल्पमात्रेणावस्थितिः । ईषद्भस्मग्रहणञ्च सा सप्तमी । तत्र प्रथमावस्थाया देवता वसवः । एवं रुद्राः, आदित्याः, विश्वे देवाः, इन्द्रः, प्रजापतिः, ब्रह्म इति क्रमशोऽवस्थासु देवताः । तस्यां तस्यामवस्थायां ताभ्यस्ताभ्यो देवताभ्यो होमः कर्तव्यः । स एव ब्राह्मणवाक्यानुवादपूर्वकं सूत्रकारेण विहित इति । रुद्रदत्तस्तु—नास्य सूत्रस्य होमविधायकत्वमङ्गीकरोति । अवस्थानां स्तवनमात्रमित्यभिप्रैति । सायणाचार्यैरपि एतत्सूत्रमूलभूतश्रुतिवाक्यानां स्तावकत्वमेव स्पष्टीकृतम् ॥

1. O. Ms. reads शोधन

नीचैस्तरामर्चिरुपावैति उपागच्छति। लोहिनीकेव, इवेत्यवधारणम्। शरो भस्म तदध्यूहन्ते गृह्णन्ति तस्मिन् नीलोपकाशो नीलवर्ण उत्तिष्ठति ॥ १ ॥

यदङ्गारेषु व्यवशान्तेषु लेलायद्दीव भाति तद्देवानामास्यम्, तस्मात्तथा होतव्यं यथाऽऽस्येऽपिदधात्येवं तदिति विज्ञायते ॥ २ ॥

[1]व्यवशान्तेषु अर्चिर्भिर्विरहितेषु लेलायत् दीप्यमानमिव विभाति तद्देवानामास्यं मुखम्। तथाभूतेऽग्नौ होतव्यं यथा मुखे क्षिपति। एवं लक्षणं तस्मिन् हुतम् ॥ २ ॥

"विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमि" इति होष्यन्नप उपस्पृश्य पालाशीं समिधमादधात्येकां द्वे तिस्रो वा ॥ ३ ॥

"होष्यन्नप उपस्पृशेत्" इति [क]ब्राह्मणोपदिष्टस्य कालनियमः सर्वास्समिधः पालाश्यः पुनर्विधानात्। एकैवोपरि धार्यते धारणकाले, सर्वासामविधानात्। अतो धारणं [ख]हविस्संस्कारः ॥ ३ ॥

एषा ते अग्ने समिदिति। "हिरण्ययं त्वा वंशं स्वर्गस्य लोकस्य सङ्क्रमणं दधामि" इति द्वितीयाम्। "रजतां त्वा हरितगर्भामग्निज्योतिषमक्षितिं कामदुघां स्वर्ग्यां स्वर्गाय लोकाय रात्रिमिष्टकामुपदधे तया देवतयाऽङ्गिरस्वद्ध्रुवा

क. "विद्युदसि" इत्यपामुपस्पर्शनस्यादौ प्राप्तस्येदानीं कर्तव्यतानियम इति।

ख. हविस्संस्कारत्वादेव चैकसमिद्धारणेनैव गतार्थत्वम्। अन्यथा समित्संस्कारकत्वाङ्गीकारे प्रतिप्रधानं गुणावृत्तिन्यायेन प्रतिसंस्कारप्राप्त्या तिसृणां संस्कारः प्राप्नुयादिति।

1. Ad omits व्यवशान्तेषु अर्चिर्भिर्विरहितेषु; B. Ms. reads अर्चीरहितेषु

सीद इति सायं तृतीयाम् । हरिणीं त्वा रजतगर्भां सूर्यज्योतिषमक्षितिं कामदुघां स्वर्ग्यां स्वर्गाय लोकाया-हरिष्टकामुपदधे इति प्रातः ॥ ४ ॥

इति नवमी कण्डिका

यजुषा समिदनुग्रहाद्यदा तूष्णीमुत्तराहुतिः, तदा नियता द्वितीया समित् । उत्तराहुतिश्च तस्याम् । [1]समिन्नये सर्वासु पूर्वाहुतिः । केचि-त्सोमयाजिनो द्वितीया, अग्निचितस्तृतीयेत्याहुः ॥ ४ ॥

समिधमाधाय प्राण्यापान्य निमील्य वीक्ष्य हुत्वा ध्यायेद्यत्कामस्स्यात् ॥ १ ॥

प्राणनमुच्छ्वासः । ऊर्ध्वो वायुः । अपाननं [2]निश्वासः । निमीलनं स्थगनमक्ष्णोः । विविधमीक्षणं वीक्षणम् । गृहीत्वा स्रुचमेतानि करोति आश्रुतप्रत्याश्रुतानि । एतानि [क]कृत्वाऽभिक्रमणं व्याहृतिजपो होष्यतः । ततः प्रधानाहुतिः । ध्यानं यत्कामो यजमानः ॥ १ ॥

हुत्वा महदभिवीक्षते ॥ २ ॥

[ख]महदाकाशः, "अस्मिन् महत्यर्णवे" इति लिङ्गात् । तस्य वीक्षणम् । ततो लेपनिमार्गादि । हुत्वेति पुनर्वचनात् समन्य हुत्वा भूर्भुवस्सुवरित्युपस्थानं वीक्षणं कृत्वा क्रियते ॥ २ ॥

क. यद्यप्यभिक्रामव्याहृतिजपौ अनन्तरं वक्ष्येते ( See आप. श्रौ. ६-१०-६-७ ) तथापि ध्यानात्पूर्वमेव तावुभावपि कर्तव्यौ इत्येतदर्थमत्र कथनम् ।

ख. रुद्रदत्त Comments महत् भूयिष्ठम् । महादेव says महत् ब्रह्म, 'तस्माद्ब्रह्मैव महच्छब्दवाच्यं व्यापकदृष्ट्या ध्येयम्' इति ।

1. O. Ms. reads समित्त्रयेऽपि
2. B. Ms.1. omits निश्वासः

आदीप्तायां जुहोति श्यावायां वा यदा वा समतीतार्चिर्लेलायतीव । धूपायत्यां ग्रामकामस्य, ज्वलत्यां ब्रह्मवर्चसकामस्य, अङ्गारेषु तेजस्कामस्य ॥ ३ ॥

आदीप्ता ज्वलिता, श्यावा श्यामभावमापन्ना । गतार्चिर्वा समित् । ज्वलत्यां नित्ये कामाः ॥ ३ ॥

व्यङ्गुले मूलात् समिधमभिजुहोति ॥ ४ ॥

मूलादारभ्य व्यङ्गुले ॥ ४ ॥

अभिक्रामं सायं जुहोत्यवक्रामं प्रातः ॥ ५ ॥

अभिक्रामं अभिक्रम्याभिक्रम्याहवनीयसमीपम् । अवक्रामम् अवक्रम्यावक्रम्य पश्चात्सरणम् ॥ ५ ॥

उभयत्र वाऽभिक्रामम् ॥ ६ ॥

उभयत्र वाऽभिक्राममुभयोः कालयोः ॥ ६ ॥

भूर्भुवस्सुवरिति होष्यन् जपति ॥ ७ ॥

होष्यन्निति पुनर्वचनमर्थकृत्यप्रतिषेधार्थम् ॥ ७ ॥

"अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहा" इति सायमग्निहोत्रं जुहोति । "सूर्यो ज्योतिर्ज्योतिस्सूर्यस्स्वाहा" इति प्रातः ॥ ८ ॥

संसृष्टहोमं वा—"अग्निर्ज्योतिर्ज्योतिस्सूर्यस्स्वाहा" इति सायम् । सूर्यो ज्योतिर्ज्योतिरग्निस्स्वाहा" इति प्रातः ॥ ९ ॥

"इषे त्वा" इति स्रुङ्मुखादवाचीनं सायं लेपमवमार्ष्टि "ऊर्जे त्वा" इत्यूर्ध्वं प्रातः ॥ १० ॥

अवाचीनं पश्चिमापवर्गम् । अवमार्ष्टि गृह्णाति । हुतशेषादधोमुखेन हस्तेन, ऊर्ध्वं प्रागपवर्गमुत्तानेन हस्तेन । यदा त्वन्यैर्द्रव्यैर्होमः, तदा [1]पार्श्वाद्बिलाद्गृह्णाति ॥ १० ॥

"ओषधीभ्यस्त्वौषधीर्जिन्व" इति बर्हिषि लेपं निमृज्य "वर्चो मे यच्छ" इति स्रुचं सादयित्वा, "अग्ने गृहपते मा मा सन्ताप्सीरात्मन्नमृतमधिषि प्रजा ज्योतिरदब्धेनत्वा चक्षुषा प्रतीक्षे" इति गार्हपत्यं प्रतीक्ष्य "भूर्भुवस्सुवः" इत्युत्तरामाहुतिं पूर्वार्धे समिधि जुहोति तूष्णीं वा ॥ ११ ॥

बर्हिष्युपसादनीये क्षिपति । तस्मिन्नेव स्रुक्सादनम् । प्रतीक्षणं गार्हपत्याभिमुखेन । पूर्वस्मिन् भागे समिधि यदैका समित् समिन्नयं वा । समिद्द्वयपक्षे उत्तराहुत्यर्था द्वितीया पूर्वाहुतिः प्रथमायाम् ॥ ११ ॥

न समिद्भिर्होतव्येत्येके ॥ १२ ॥

इति दशमी कण्डिका

न वा समिद्भिर्होतव्या । पूर्वस्मिन्नेवाग्नेर्भाग आहुतिः ॥ १२ ॥

वर्षीयसीमुत्तरामाहुतिं हुत्वा भूयो भक्षायावशिनष्टि ॥ १ ॥

वर्षीयसी बह्वी पूर्वस्याः । भक्षार्थन्तु तस्या अपि बहु ॥

1. B. Ms.1, reads बिलाद्वा

य कामयेत पापीयान् स्यादिति भूयस्तस्य पूर्वं हुत्वोत्तरं कनीयो जुहुयात् ॥ २ ॥

कनीयोऽल्पीयः पूर्वस्माद्धोमात् ॥ २ ॥

हुत्वा स्रुचमुद्गृह्य "रुद्र मृडानार्भव मृड धूर्त नमस्ते अस्तु पशुपते त्रायस्वैनम्" इति त्रिस्स्रुचाग्निमुदञ्चमतिवल्गयति ॥ ३ ॥

हुत्वेति पुनर्वचनं सर्वार्थम्। इतरथा भूयस्यामेव पूर्वाहुतौ स्रुच उद्ग्रहणं स्यात्। ऊर्ध्वमुत्क्षेपणमुद्ग्रहणम्। अतिवल्गनमतिकम्पनम्। यथाऽग्निरुद्गच्छति तथा कम्पयति ॥

पूर्ववल्लेपमवमृज्य प्राचीनावीती "स्वधा पितृभ्यः पितॄन् जिन्व" इति दक्षिणेन वेदिं भूम्यां लेपं निमृज्य "प्रजां मे यच्छ" इति स्रुचं सादयित्वा "वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम्" इति हुत्वाऽप उपस्पृश्यान्तर्वेदि स्रुक्। अथाङ्गुल्यापादाय "पूषासि" इति लेपं प्राश्नात्यशब्दं कुर्वन्नतिहाय दतः ॥ ४ ॥

ले[क]पावमार्गेऽपि प्राचीनावीती, पित्रर्थत्वात्। निमार्गे प्राचीनावीतं सिद्धम्। पूर्ववत् पूर्वेण तुल्यम्। यथा सायं काले प्रातश्च पूर्वाहुतौ कृतो निमार्गः। दक्षिणेन वेदिदेशाददूरेण दक्षिणतः। [ख]उपदेशो

क. "तावतीरोषधयोऽजायन्त। ता जाताः पितरो विषेणालिम्पन्" (तै. ब्रा. २-१-१-१) इत्यारभ्य "तेभ्य एतद्भागधेयं प्रायच्छन्, यद्धुत्वा निमार्ष्टि" इति ब्राह्मणवाक्येन लेपमार्गस्य पित्रर्थतावगमात् प्राचीनावीतमिति।

ख. 'अपरपक्षे पित्र्याणि प्राचीनावीतिना' (आप. गृ. १-१-३) इति सामान्यपरिभाषयैव लेपनिमार्गे प्राचीनावीते सिद्धेऽत्र पुनः प्राचीनावीतग्रहणं क्रमार्थम्। एवञ्च लेपनिमार्गानन्तरमेव प्राचीनावीतिता, ततः पूर्वमुपवीतमेवेत्युपदेशमतम्।

यज्ञोपवीत्येव लेपनीमार्गं कृत्वा प्राचीनावीती दक्षिणेन वेदिं निमार्ष्टि । हुत्वेति पुनर्वचनात् "भवतं न" इत्युपस्थानम्, वारुण्यर्चा होमा एकहायनी दक्षिणेति । एतानि कर्माणि वृष्ट्यन्ने । अन्नर्वैव्यवस्थितायां स्रुचि एकयाऽङ्गुल्या गृह्णाति । अतिहाय दन्तः परित्यज्य दन्तान् प्राश्नाति ॥ ४ ॥

अप आचम्यैवं पुनः प्राश्याऽऽचम्य बर्हिषोपयम्योदङावृत्योत्सृप्य "गर्भेभ्यस्त्वा गर्भान् प्रीणीह्याग्नेय२हविः प्रजननं मे अस्तु । दशवीर२सर्वगण२स्वस्तये । आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि वृष्टिसनि । अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धेहि । रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा" इत्युदग्दण्डया प्राग्दण्डया वा स्रुचाऽऽचामति ॥ ५ ॥

इत्येकादशी कण्डिका

[क]अपामाचमनं भक्षणम् । शौचार्थं पश्चादाचमनम् । पुनश्च प्राशनं लेपस्य । [1]प्राशनं चापां शौचार्थश्च पश्चात् । [2]बर्हिषां तृणान्यपाकृतान्यधस्ताद्धार्यन्ते । उदङ्मुखः पर्यावर्तते । प्रसव्यमुत्सृप्य तत्र उदग्गत्वा "गर्भेभ्यस्त्वा" इति भक्षयति स्रुचैव ॥ ५ ॥

"सौर्य२हविः" इति प्रातर्मन्त्रं सन्नमति ॥ १ ॥

सौर्य२ हविस्सूर्यः प्रजामिति सन्नमति । आग्नेय२ सौर्य२ हविस्सूर्योऽग्निः प्रजामिति संसृष्टहोमे । अग्निः प्रजामित्यविकार इत्युपदेशः ॥ १ ॥

क. सूत्रे यत्राचमनं विधीयते तत्र सर्वत्रापां भक्षणमभिप्रेतम् । ततश्शौचार्थमाचमनम् । ततः प्राशनम्, पुनश्शौचार्थमाचमनम् । अयमेव क्रमस्सर्वत्रावगन्तव्यः ।

1. B. Ms. reads आचमनं च
2. O. Ms. reads बर्हिषि for बर्हिषां

द्भिः स्रुचं निर्लिह्याऽद्भिस्स्रुचं पूरयित्वो"च्छिष्टभाजो जिन्व" इति पराचीनं निनीयाऽऽचम्याऽग्रेणाऽऽहवनीयं दर्भैरग्निहोत्रहवणीं प्रक्षालयाति ॥ २ ॥

भक्षयित्वा द्विर्जिह्वया लेहनम् उच्छिष्टभाज इत्युच्छिष्टम् । पराचीनमनिवर्तयन् पुरस्तान्निनयति । पश्चादाचामति । प्रक्षाल्य दर्भैः पुनराचमनम् ॥ २ ॥

न मांसधौतस्य देवा भुञ्जत इति विज्ञायते ॥ ३ ॥

मांसधौतम् हस्तधौतम्, तदन्यत्रापि प्रतिषिध्यते । निवर्तमानः प्रदक्षिणमेति ॥ ३ ॥

अद्भिस्स्रुचं पूरयित्वा " सर्पेभ्यस्त्वा सर्पान् जिन्व" इति प्रतिदिशं व्युत्सिच्य " सर्पान् पिपीलिका जिन्व सर्पेतरजनान् जिन्व सर्पदेवजनान् जिन्व" इति तिस्रस्स्रुच उत्सिच्य चतुर्थीं पूरयित्वा "पृथिव्याममृतं जुहोमि स्वाहा" इत्यपरेणाहवनीयं निनीय शेषं पत्न्या अञ्जलौ "गृहेभ्यस्त्वा गृहान् जिन्व" इति ॥ ४ ॥

व्युत्सेको हस्तेन स्रुचा वा प्रतिदिशम् । उत्सेकः ऊर्ध्वं सेकः । गृहपतेर्मुख्याया अञ्जलौ निनयनम् । प्रतिपत्त्युपदेशः ॥

यदि पत्नी नानुष्या"देवानां पत्नीभ्योऽमृतं जुहोमि स्वाहा" इति पत्न्यायतने निनयेत् ॥ ५ ॥

[क]यदि पत्नी न भवेत्, [ख]पत्नीनामायतनं पत्न्यायतनम् । देव-

क. आर्तवादिना सन्निहिता न भवेदित्यर्थः ।

ख. सूत्रस्थपत्न्यायतनशब्दस्य पत्नीनामायतनं पत्न्यायतनमिति विगृह्य देवपत्नीनामायतनं यत्रोपविश्य पत्नीसंयाजा दर्शपूर्णमासयोः क्रियन्ते तत्र गार्हपत्यस्य पश्चिमभागे निनयेदिति । मन्त्रे तथा दर्शनात्–" यत्पश्चात् प्राच्यन्वासीत, देवानां पत्निया समदं दधात " इति गार्हपत्यस्य पश्चाद्भागे पत्न्या उपवेशे तत्स्थानावस्थिताभिर्देवपत्नीभिस्सह कलहापत्तेः कथनाच्च देवपत्न्यायतनं ग्राह्यमिति ।

पत्नीनामपरेण गार्हपत्यम्, तत्र निनयनम्। "देवानां पत्निया समदं दृषीत" इति। यजमानपत्न्या इत्युपदेशः॥ ५॥

अपरं स्रुच्यानीय "विप्रुषा२ शान्तिरसि" इत्युन्नयनदेशे निनीयाहवनीये स्रुचं प्रताप्य हस्तोऽवधेयो हस्तो वा प्रताप्य स्रुच्यवधेयः॥ ६॥

हस्तः क्षेप्तव्यः चि प्रतप्तायाम्। प्रताप्य वा हस्तं स्रुचि क्षिपति॥६॥

तयोदगुद्दिशाति "सप्तर्षिभ्यस्त्वा सप्तर्षीन् जिन्व" इति॥ ७॥

इति द्वादशी कण्डिका॥

तया हस्तसंमृष्टया स्रुचा [1]सव्यावृदुदङ्मुख उद्दिशाति। तमूष्माणं "सप्तर्षिभ्यस्त्वा" इति स्रुचा। तेन सप्तर्षीणां हि तृप्तिः। पश्चात्प्रदक्षिणमावर्तते। "दक्षिणा पर्यावर्तते" इति श्रुतेरन्यत्राप्यनेनैव [2]दर्शनेन॥ ७॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

षष्ठप्रश्ने तृतीयः पटलः॥

चतुर्थः पटलः

"अग्ने गृहपते परिषद्य जुषस्व स्वाहा" इति स्रुवेण गार्हपत्ये जुहोत्येकां द्वे तिस्रश्चतस्रो वा॥ १॥

"अग्नये गृहपतये रयिपतये पुष्टिपतये कामायान्नाद्याय स्वाहा" इत्येतामेके समामनन्ति॥ २॥

1. B. Ms.1, reads सव्यावृत्तः
2. B. Ms.1, has दर्शनात् for दर्शनेन; O. Ms. reads निदर्शनेन

समभ्युच्चयवदेके ॥ ३ ॥

प्रथमेन द्वितीयेन वा गार्हपत्ये होमः। यदा समुच्चयः तदा प्रथमेन होमद्वयम्, तथा द्वितीयेन ॥ १-३. ॥

"अग्नेऽदाभ्य परिषद्य जुषस्व स्वाहा" इति स्रुवेणाऽन्वाहार्यपचने जुहोत्येकां द्वे तिस्रश्चतस्रो वा ॥४॥

"अन्नपतेऽन्नस्य नो देहि" इति द्वितीयाम् ॥ ५ ॥

'अन्नपत' इति द्वितीयाऽन्वाहार्यपचने नित्या। पूर्वेण त्वितरा। अन्वाहार्यपचने जुहोत्येकां द्वे तिस्रश्चतस्रो वा। प्रथमेनैव प्रथमा। द्वितीयाऽन्नपत इति नियम्यते। हुत्वाऽन्वाहार्यपचने लेपप्राशनम् ॥ ५ ॥

अप्राश्य वाऽपरयोर्जुहुयात् ॥ ६ ॥

अप्राश्य यदा होमः आहवनीय एव वा होमः तदा प्राशनादि कृत्वा सप्तर्षिभ्यः ॥ ६ ॥

आहवनीये होमो नाऽपरयोः ॥ ७ ॥

यदाऽऽहवनीये हुत्वाऽपरयोर्जुहुयाद्यथा सुवर्गाल्लोकात्प्रत्यवरोहेत् तादृक् तदिति विज्ञायते ॥ ८ ॥

सर्वे वा एते होमार्था आधीयन्ते चतस्रो गार्हपत्ये जुहोति, चतस्रोऽन्वाहार्यपचने, द्वे आहवनीये । दश सम्पद्यन्ते दशाक्षरा विराड्विराजा यज्ञस्सम्मित इति बह्वृचब्राह्मणं भवति ॥ ९ ॥

दीदिहीत्युपसमिन्धनम् । [1]बह्वृचमते चतस्रो [क]नित्या अपरयोः ॥ ९ ॥

"दीदिहि दीदिदासि दीदाये"त्येषोऽग्न्युपसमिन्धन आम्नातः ॥ १० ॥

उपसमिन्धनो मन्त्रः । इन्धनं दीपनम् । क्रियते । दीदिहीति पञ्चानामग्नीनां शाखान्तर आम्नायते ॥ १० ॥

दीदिहि दीदिदासि दीदाय दीद्यासं दीद्यस्वेति वा प्रतिमन्त्रम् ॥ ११ ॥

दीदिहि, दीदिदासि, दीदाय, दीद्यासं, दीद्यस्वेत्येभिर्वा पञ्चभिः प्रतिमन्त्रमेकैकस्याग्नेरिन्धनम् ॥ १० ॥

यथाऽऽहितास्तेनाऽऽनुपूर्व्येणाऽऽहवनीयाद्वा प्रक्रम्य ॥

आहवनीयादपि प्रक्रमे [क]पुनर्गार्हपत्यादि ॥ ११ ॥

अन्तर्वेद्यपो निनीय ॥ १२ ॥

इति त्रयोदशी कण्डिका

वेद्यन्तमन्तर्वेदिदेश इह गृह्यते । तत्रापां निनयनम् ॥

पूर्ववदग्नीन् परिषिञ्चति न धाराम् ॥ १ ॥

धाराप्रतिषेधः परिषेकाङ्गत्वाद्धारायाः । अतो यदाऽग्निना सहाग्निहोत्रेण चानुद्रवणं, तदा कूर्चे स्थापिते आहवनीयस्य कृते परिषेचने धारा क्रियते ॥ १ ॥

क. गार्हपत्यदक्षिणाग्न्योरपि चतस्रश्चतस्रो नित्या आहुतयः कर्तव्या इति । एतेषां सर्वेषां दशानां होमानां प्रधानत्वं मीमांसकमते, दश सम्पद्यन्ते इति वचनाच्च । भाष्यकारमतं तु केवलं प्रथमाहुतेरेव प्राधान्यम् , इतरासां तु अङ्गत्वमेव । " एषा वा अग्निहोत्रस्य स्थाणुः या प्रथमाऽऽहुतिः " इति स्थाणुत्वार्थवादादिति ।

1. B. Ms., reads बह्वृचमतेन

" अपि प्रेरग्ने त्वां तन्नमयाद् द्यावापृथिवी ऊर्जमस्मासु धेहि" इत्यग्निहोत्रस्थाल्यां तृणमङ्क्त्वाऽनुप्रहरति ॥

सा ह्यग्निहोत्रस्य संस्थितिः ॥ ३ ॥

न बर्हिरनुप्रहरेत् । असꣳस्थितो वा एष यज्ञः यदग्निहोत्रमित्युक्तम् ॥ ४ ॥

अग्निहोत्रस्थालीं प्रक्षाल्य " अक्षितमसि अक्षित्यै जुहोमि स्वाहा " इत्युन्नयनदेशे निनयति । अन्तर्वेदि वा ॥ ५ ॥

[क]तृणप्रहरणेन वाग्निहोत्रस्य संस्थितिः परिसमाप्तिः । उदकनिनयनेन वा, [1]अर्थवादात् । यावज्जीवान्ते होमे तृणप्रहरणम् । यदा वा जीर्णो वाजसनेयिमतेन विरमणमग्निहोत्रस्य करोति तत्रान्तिमे तृणप्रहरणम् । 'असꣳस्थितो वा एष यदग्निहोत्रमि'तिहेतुवचनात् । अतो बर्हिःप्रहरणं न कर्तव्यम् यत्र त्वस्य संस्था तत्र कर्तव्यमिति हेतोरर्थवत्ता ॥ २–५ ॥

" वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागामप्सु श्रद्धा " इत्यप आचम्य यजमानोऽन्तर्वेदि मार्जयते " अन्नादास्स्थाऽन्नादो भूयासं यशस्स्थ यशस्वी भूयासं श्रद्धास्स्थ श्रद्धिषीय " इति ॥ ६ ॥

क. तृतीय सूत्रे तृणप्रहरणं विहितम् । तत्रार्थवादः– " साग्निहोत्रस्य संस्थितिः " इति । अनन्तरसूत्रे निनयनं विहितम् । तत्रार्थवादः– ' असंस्थितो वा ' इत्यादिः । तत्र तृणप्रहरणं तु अन्तिमाग्निहोत्र एव । अग्निहोत्रञ्च द्विविधं–यावज्जीवं क्रियते, जीर्णेन वा विरम्यत इति । तत्र मरणाव्यवहितकालिके विरमणाव्यवहितपूर्वकालिकेऽन्तिमेऽग्निहोत्र एव तृणप्रहरणम् । अन्यत्र तु दैनन्दिनेऽग्निहोत्रे निनयनान्तमेव कर्तव्यम् । तदानीमेवासंस्थितत्वहेतोरर्थवत्तेति ।

1. B. Ms.1, reads अथवा for अर्थवादात्

वृष्टिरसीति भक्षणमपाम् । अन्तर्वेदिदेशेऽवस्थितो द्वाभ्यां मार्जनं करोति ॥ ६ ॥

किं पुनस्तत् ?

**"आपो ह श्लेष्म प्रथमꣳ सम्बभूव येन धृतो वरुणो येन मित्रः । येनेन्द्रं देवा अभ्यषिञ्चन्त राज्याय तेनाहं मामभिषिञ्चामि वर्चस" इति शिरस्यप आनयते ॥ ७ ॥**

'वर्चस' इति [क]शिरस्यपामानयनम् । एतन्मार्जनं व्याख्यानम् । [1]उपदेशः कृत्वा पूर्वेण मार्जनमुत्तरेण शिरस्यपामानयनं [2]करोति इतिकरणं पूर्वत्र कृतमिति ॥ ७ ॥

**द्वयोः पयसा पशुकामस्य जुहुयात् ॥ ८ ॥**

**अग्निहोत्रस्थाल्या पूर्वां दोग्धि दोहनेनोत्तराम् ॥ ९ ॥**

[ख]द्वयोः पयसा [1]होमेऽग्निहोत्रस्थाल्या पूर्वां दोग्धि दोहनेनोत्तरामिति क्रमेण दोहनाद्याजमानावृत्तिः । नाभिमन्त्रणवेद्यभिमर्शनयोरूहः । ऊह इत्युपदेशः ॥ ९ ॥

क. अनेन 'आपो ह' इत्यादिना 'वर्चस' इत्यन्तेन मन्त्रेण शिरस्यपामानयनमेव मार्जनम् । तच्च मार्जनान्तरेण सदृशं कर्तव्यमिति । उपदेशमतं तु 'अन्नादास्स्थ' इति पूर्वमन्त्रेण मार्जने कृत्वा 'आपो ह' इत्युत्तरेण मन्त्रेण शिरस्यपामानयनं कर्तव्यम् । पूर्वमन्त्रान्ते इति शब्दप्रयोगात् तेन विनियोगभेदावगमादिति ।

ख. पशुरूपफलापेक्षायां सत्यां द्वयोर्गवोः पयसा जुहुयात् । तत्र प्रथमां गामग्निहोत्रस्थाल्यां दोग्धि, द्वितीयां दोहनपात्रेणेति । द्वयोः पयसोर्मेलनं कृत्वा होमः । तं प्रकारमग्रे वक्ष्यति सूत्रकारः । तत्र दोहनकाले 'इडासि' इति मन्त्रेण गोरभिमन्त्रणम्, 'इयमसि तस्याः' इत्यनेन वेदिदेशाभिमर्शनञ्च (See आप. श्रौ. ६-३-९) यद्विहितं तत्रोभयत्रानूहो द्विवचनान्ततया । दोहनस्य क्रमेणैवाऽनुष्ठेयत्वात्पृथगेव मन्त्रप्रवृत्तेरिति । सकृदेव मन्त्रप्रयोगमाश्रित्य मन्त्रस्य गमनाभिधायकत्वाङ्गीकृत्य समवेतार्थत्वायोहः कर्तव्य इत्युपदेशमतमिति ।

1. B. Ms.1, has उपदेशः for केचित्तु
2, B. Ms.1, reads कुर्वन्ति

अधिश्रित्य पूर्वमुत्तरमानयति ॥ १० ॥

[क]अधिश्रित्याग्निहोत्रस्थालीमुत्तरस्याः पश्चादानीयते। नित्ये त्वग्निहोत्रस्थाल्यां दोहनगतं प्रक्षिप्य सहाधिश्रयणम्। अग्निहोत्रस्थाल्या दोहनेन च दोग्धीति यद्यपि पृथक् ॥ १० ॥

यस्य रुद्रः पशून् शमायेतैतयाऽऽवृता द्वयोः पयसा सायं प्रातर्जुहुयात् ॥ ११ ॥

एतयैवावृता एतयैव क्रियया। इह सायं प्रातर्नियमात् पूर्वत्रैकस्मिन् होमे कामः। पयसैव नित्यमग्निहोत्रम्[ख]। नित्याग्निहोत्र एव कामः। नाग्निहोत्रान्तरम्। एवं [1]सर्वत्र द्रव्येषु कामः ॥ ११ ॥

तच्चेदतिहन्यात् " सजूर्जातवेदो दिवि आपृथिव्या अस्य हविषो घृतस्य वीहि स्वाहा " इति सायं प्रातराज्येन जुहुयात् ॥ १२ ॥

तच्चेदित्यकामकृतमपि हन्यादेव पशून् रुद्रः[2] [ग]पूर्वाधर्माद्यजमानस्य पशूनां चाऽऽयुषः क्षयात्। "सजूर्जातवेदः" इति पूर्वाहुतिः। आग्नेयं

क. पूर्वदुग्धपयसा सहैवाग्निहोत्रस्थालीमधिश्रित्यानन्तरं दोहनपात्रस्थस्य पयसस्तत्रानयनं ( प्रक्षेपः ) नित्याग्निहोत्रे तु न तथा। तत्राग्निहोत्रस्थाल्या दोहनेन च दोग्धि ' (आप. श्रौ. ६-३-१९ ) इति दोहने पात्रभेदश्रवणेऽपि तेष्वग्निहोत्रमधिश्रयति इति सामान्यत एवोपदेशात् सहाधिश्रयणमेव लभ्यत इति।

ख. नात्र फलार्थमग्निहोत्रान्तरं कर्तव्यम्। पयसा क्रियमाणे नित्याग्निहोत्र एव सत्यां कामनायां फलप्राप्तिः। एवं नित्य एवाग्निहोत्रे तैस्तैर्द्रव्यैर्दध्यादिभिरनुष्ठिते ते ते कामा इन्द्रियादयः उत्पद्यन्त इति।

ग. पूर्वसूत्रोक्तविधया कृतेऽप्यग्निहोत्रे यजमानस्य जन्मान्तरीयपापवशात् पशूनां जीवनादृष्टनाशाच्च पुनरपि यदि रुद्रः पशून् हन्यात् तदाऽयमाज्यहोम इति। तदा " आग्नेय॰. हविः प्रजननं मे अस्तु' ( See आप. श्रौ. ६-११-५ ) इत्यत्र " आग्नेयं॰ जातवेदस॰ हविः प्रजननम् " इति, एवं तत्रैव मन्त्रे " अग्निः प्रजां बहुलाम् " इत्यत्र 'अग्निर्जातवेदाः प्रजाम्' इति च सायं प्रातर्होमद्वयेऽप्यूहः कर्तव्य इति।

1. O. Ms. read सर्वद्रव्येषु
2. B. Ms. reads सर्वाधर्मात्

जातवेदसं हविः प्रजननम्। अग्निर्जातवेदाः प्रजाम इत्येवमुभयत्र। अन्यद्विकृतम् ॥ १४ ॥

**अनारमति "अग्ने दुश्शीततनो जुषस्व स्वाहा" इति द्वादशाहमाज्येन हुत्वा तत ऊर्ध्वं न सूर्क्षेत् ॥ १३ ॥**

इति चतुर्दशी कण्डिका

अनारमति रुद्रे "अग्ने दुश्शीततनो" इति पूर्वाहुतिः। आग्नेयमुभयत्र। सायमुपक्रमं प्रातरपवर्गमग्निहोत्रं सूत्रकाराणां मतम्। सायमादि कामो द्रव्यनियमश्च। [क]मीमांसकानां तु कर्मनामैवाऽग्निहोत्रमिति न समुदायस्य। तेषां यस्मिन् कस्मिन् वा होमे आरम्भः। न सूर्क्षेत्, न कुर्यादादरं पुनश्शमनार्थं [ख]कर्म। महानधर्मः पशुक्षयकरः [ग]तीक्ष्णाभिसन्धिर्मया कृत इति। [1]अधर्मफलेनापि शास्त्रलक्षणेन भवितव्यम्। न [घ]कर्मानर्थक्यम्। [2]प्रमादकृतो ह्यधर्मः, अल्पो वा तस्य प्रतिबन्धनं तत्कर्म जात्यन्तरे फलं प्रयच्छति। धर्मोऽपि चेह महताऽधर्मेणाभिभूतो जात्यन्तरे पशूनां मरणं [3]नियच्छति। एवं सर्वत्र काम्येषु। रुद्रो ज्वरः। मारणं शमनम् ॥ १३ ॥

क. अत्रेदं वक्तव्यम्—अग्निहोत्रं जुहोतीति कर्मविधायकं वाक्यम्। तेन चैकमेव कर्म विधीयते। तत्र च सायं जुहोति, 'प्रातर्जुहोति, इति वाक्याभ्यां सायंप्रातःकालौ विधीयेते तेन एकस्यैव कर्मणः सायं प्रातश्चाऽऽवृत्तिः। सायमेव चाऽऽरम्भो होमस्य। तस्यैव प्रथमश्रवणात्। एवंचैकफलसाधनस्यैवाऽग्निहोत्रस्य सायंप्रातरावृत्तिः। कालद्वयेऽनुष्ठितस्य तस्य फलसाधनत्वम्। तत्र प्रातर्होमेऽग्निदेवतासम्बन्धाभावेऽपि सायंहोमे तत्सत्त्वात् एकदेशसम्बन्धमादायाऽग्निहोत्रशब्दप्रवृत्तिः। यथोक्तं वार्तिके तत्प्रख्याधिकरणे—

प्रातर्होमेऽपि तेनैष वह्निर्नैव विधीयते।
एकदेशेऽपि च ज्ञानान्नानुवादोऽपगच्छति ॥

इत्येवमीमांसकमतम्। सति चैवं भाष्यकारेणात्रानूदितं मीमांसकमतं कुत्रत्यमिति न ज्ञायते ॥

ख. कर्म इत्यनन्तरं कर्तुमिति शेषपूरणं कर्तव्यम्।

ग. तीक्ष्णाभिसन्धिरित्यधर्मस्य विशेषणम्। मया पूर्वस्मिन् जन्मनि अस्मिन्नत्युग्ररूपोऽधर्मः कृतः य इदानी केनाऽप्यप्रतिबद्धः पशून् नाशयतीति मत्वा पुनश्शान्त्यर्थकर्मकरणे आदरो न कर्तव्य इति।

घ. यद्येवं सर्वत्र शान्तिकर्मानुष्ठानमनर्थकं स्यादिति न मन्तव्यम्।

1. B. Ms. reads wrongly अधर्मशीलेनापि
2. B. Ms.2. reads प्रमादकृता ह्यधर्मः, अतो जात्यन्तरे फलं प्रयच्छति। for प्रमाद...यच्छति
3. B. Ms. has करोति for नियच्छति

पयसा पशुकामस्य जुहुयात्, दध्नेन्द्रियकामस्य, यवाग्वा ग्रामकामस्यौदनेनाऽन्नाद्यकामस्य, तण्डुलैरोजस्कामस्य बलकामस्येत्येके। मांसेन यशस्कामस्य सोमेन ब्रह्मवर्चसकामस्य, आज्येन तेजस्कामस्य ॥ १ ॥

पयसि नित्ये कामः। इन्द्रियं शुक्रम्। ग्रामो भूमिप्रदेशः। तत्कामः। केचित्तु ग्रामकूटकं [1]ग्राम इत्याहुः। अन्नकामोऽन्नाद्यकामः। केचिद्भोक्तृशक्तिम्[क]। परस्य येन [3]सहते वीर्यं स ओजो गुणः। बलं प्राणः। यशः। ख्यातिः। ब्रह्मणः ख्यातिः ब्रह्मवर्चसम्। तेजो दीप्तिः ॥ १ ॥

प्रतिषेकं यवागूं श्रपयति ॥ २ ॥

प्रतिषेकं प्रतिषिच्य प्रतिषिच्य पुनः पुनरुदकेन यवागूश्रपणम् ॥२॥

श्रृतां यजुषा प्रतिषिञ्चति ॥ ३ ॥

श्रृतां यथालक्षणः पाक उक्तः—"अग्निहोत्रस्य न सुश्रृतं कुर्या-दिति। तथाभूतानामपां स्तोकेन ॥ ३ ॥

एवं मांसम् ॥ ४ ॥

नाऽऽज्यं प्रतिषिञ्चति "हरस्ते मा विनैषम्" इति। द्वे दर्भाग्रे प्रत्यस्यत्येकं वा ॥ ५ ॥

'हरस्त' इति युगपद्द्वे दर्भाग्रे प्रतिषेकप्रत्याम्नायः ॥ ५ ॥

क. अनन्तरम् अन्नाद्यकाम इत्याहुरिति पूरणीयम्।

1. B. Ms. 1 reads ग्रामकामः
2. B. Ms. has भाजनशक्तिः for भोक्तृशक्तिम् B. Ms. 2, adds after भोक्तृशक्तिं, आन्नाद्यमित्याहुः।
3. B. Ms. 1 reads सहते तेज ओजस्स गुणः

न दध्यधिश्रयति । शृतꣳ हि तत् । न प्रतिषिञ्चति प्रतिषिक्तं हि तदातञ्चनेनेति विज्ञायते ॥ ६ ॥

एवं तण्डुलानोदनं सोमं च ॥ ७ ॥

'शृतꣳ हि तदि'ति वचनात् गृहशृतेन दध्ना होमः । क्षिप्त्वाऽऽतञ्चनेन । दध्यादीनां पाकप्रतिषेधादेव पाकवर्तिनामपि निवृत्तौ सिद्धायां प्रतिषेकप्रतिषेधादभिद्योतनपर्यग्निकरणभूमिप्रतिष्ठापनादीन्यदृष्टार्थानि दध्यादिष्वपि कर्तव्यानीति दर्शयति । उक्तं च भरद्वाजेन—'यदन्यदधिश्रयणात् प्रतिषेकाच्च तत्सर्वं भवति' इति । न [क]तथोपदेशः ।

आज्येन तण्डुलैरोदनेन सोमेन वा जुहुयाद्यस्याप्रतिषेक्यं स्यात् ॥ ८ ॥

अप्रतिषेक्यं तेजस्कामादीनाम् । तेषामाज्यादिषु कामः । सायंहोमे द्रव्योत्पत्तिकाले द्रव्यकामः ॥ ८ ॥

आज्येन तेजस्कामस्संवत्सरं जुहुयात् द्वादशाहं वा ॥ ९ ॥

संवत्सरे ह्येककामो द्वादशाहे च ॥ ९ ॥

न राजन्यस्य जुहुयात् । १० ॥

धार्यन्तेऽग्नयः क्षत्रियस्य ॥ १० ॥

होमकाले गृहेभ्यो ब्राह्मणायान्नं प्रहिणुयात्तेनो हैवास्य हुतं भवति ॥ ११ ॥

क. न दध्यधिश्रयतीति अधिश्रयणनिषेधः सर्वेषां पाककर्मणामुपलक्षकः । अतः पाककर्माण्सर्वेऽपि न क्रियेरन्निति ।

होमे च प्रत्याम्नायो गृहपक्वमन्नम्, नान्यत आनीतं दीयते ब्राह्मणार्थम्। तेनास्य हुतं भवति। [क]ऊ, ह, एव, निपाता ब्राह्मणे ॥ ११ ॥

**नित्यमग्न्युपस्थानं वाचयितव्यः ॥ १२ ॥**

[1]यत्पक्षे[ख] पक्षे नान्यद्भवति। यथा प्रथममग्न्युपस्थानं तद्वाचयितव्यो नित्यकालमध्वर्युणा। [ग]समिदाहरणादि मार्जनान्तमित्युपदेशः। उपस्थानमात्रं न्यायः ॥ १२ ॥

**यो वा सोमयाजी सत्यवादी तस्य जुहुयात् ॥ १३ ॥**

उभयगुणस्य तु हूयते ॥ १३ ॥

**अहरहर्यजमानस्स्वयमग्निहोत्रं जुहुयात् ॥ १४ ॥**

अहन्यहनि सायंप्रातः। स्वयं साङ्गमुदकाहरणादिभिस्सह ॥ १४ ॥

**पर्वणि वा ॥ १५ ॥**

पर्वणि वा पर्वसन्धौ। अन्येष्वनियमो होतुः। यो वोत्तरत्रोच्यते ॥ १५ ॥

**ब्रह्मचारी वा जुहुयात् ब्रह्मणा हि स परिक्रीतो भवति। क्षीरहोता वा जुहुयाद्धनेनहि स परिक्रीतो भवति" इति बह्वृच ब्राह्मणम् ॥ १६ ॥**

इति पञ्चदशी कण्डिका

क. 'तेनो हैवास्य। इति सूत्रानूदिते ब्राह्मणवाक्ये ऊ, ह, एव इतीमे निपाता अवगन्तव्या इति।

ख. अग्नीषोमाविम" सुम इति सप्तम्या पूर्वपक्षे ऐन्द्राग्न्या सप्तम्याऽपरपक्षे (आप. श्रौ. ६-१६-५) चतस्रः पुरस्तादग्नीषोमीयायाः पूर्वपक्षे, तथा ऐन्द्राग्न्याऽपरपक्षे (आप. श्रौ. ६-१६-७) इत्यादिं यत्पक्षे पक्षे विधीयते तत्तथैव कर्तव्यम्।

ग. 'स्वयं यजमान इध्मानाहरति' (आप. श्रौ. ६-२-२ इति विहितेध्माहरणप्रभृति 'यजमानोऽन्तर्वेदि मार्जयते' (आप. श्रौ. ६-१४-६ ) इति विहितमार्जनं यावत् तदीयान् मन्त्रान् राजन्यो यजमानोऽध्वर्युणा वाचयितव्यः। होमाभावेन समिदादि निवृत्तावपि मन्त्राणां प्रवृत्तेरनिवार्यत्वात्सर्वयजमानोपलक्षणत्वादुपस्थानशब्दस्येत्युपदेशमतम।

1. B. Ms. reads यत्पक्षे नाऽन्यद्भवति

ब्रह्मचारी [1]यस्याध्ययनं करोति, स जुहोतीति। स हि ब्रह्मणा परिक्रीतः। पर्वण्यपि केचित्। क्षीरहोता यस्याग्निहोत्राय प्रथमं दुग्धा [2]गौः दीयते। [3]अग्निहोत्र शेषक्षीरभृत इति केचित्। [4]अन्येन येन केनचिद्धनेन भृत इति केचित् ॥ १६ ॥

इत्यापस्तम्बीयधूर्तस्वामिभाष्ये षष्ठप्रश्ने चतुर्थः पटलः ॥

पञ्चमः पटलः

## अग्न्युपस्थानं व्याख्यास्यामः ॥ १ ॥

अग्न्युपस्थानाधिकारात् यान्युत्तरत्रोच्यन्ते समिदाधानादीनि तानि तदङ्गम्। नाग्निरुपस्थेय इत्यत्र तेषामप्यक्रिया। उपदेश "[क]उद्धरे" त्येवमादि याजमानमुपस्थानाङ्गम्। तस्योपस्थानप्रतिषेधे प्रतिषेधः। अग्न्युपस्थानं जपतीत्यत्र प्रवसतः सर्वस्य जपः ॥ १ ॥

## उपतिष्ठत इति चोद्यमान आहवनीयमेवोपतिष्ठेत वचनादन्यम् ॥ २ ॥

'उपतिष्ठत' इति सामान्यचोदनायां यत्राऽप्यन्योऽधिकृतः तत्राप्याहवनीयस्य। वचनादन्यस्योपस्थानम्। अन्यत्र त्वन्तरेणापि वचनमेकस्योक्तं सर्वेषां भवति, यथा "अग्नेस्तृणान्यपचिनोति" इति [ख]तृणापचयनं[5] सर्वेषाम् ॥ २ ॥

क. 'उद्धरेत्येव सायमाह यजमानः' (आप. श्रौ. ६-१-४) इति विहितमुद्धरणादिकमारभ्य यद्यत् याजमानमुक्तं तत्सर्वमुपस्थानस्याङ्गम्। अत उपस्थानविधौ तत्सर्वं कर्तव्यम्। उपस्थानप्रतिषेधे च तस्य सर्वस्य प्रतिषेधः। जपविधौ च सर्वमन्त्रजप इति उपदेशमतमिति।

ख. पूर्वमग्नीनां यत्परिस्तरणं कृतं तेभ्यस्तस्यापनयनमत्र तृणापचयनम्। यद्यप्यत्र 'अग्ने' रित्येकवचनं श्रुतम्, तथापि सर्वेभ्योऽग्निभ्योऽपचयनं कर्तव्यमिति।

1. O. Ms. reads यस्याध्यापनं
2. O. Ms. omits गौः
3. B. Ms2 reads अग्निहोत्रशेषक्षीरभृतः
4. O. Ms. adds अग्निहोत्रशेषमात्रस्तुपजीवनार्थं होमं करिष्यति, सधनेन परिक्रीतः before अन्येन
5. O. Ms. reads तृणापनयनम्

**उत्तरामाहुतिमुपोत्थाय कवातिर्यङ्ङिवोपतिष्ठेत ॥ ३ ॥**

उत्तरामाहुतिं हुतां प्रति अग्निसमीपे उपोत्थानमुपस्थानम् । कवातिर्यङ् ईषत्तिर्यङ्ङिव ॥ ३ ॥

**[1]"उपप्रयन्तो अध्वरम्" इति षड्भिः ॥ ४ ॥**

**[2]"अग्नीषोमाविमं सु मे" इति सप्तम्या पूर्वपक्षे । ऐन्द्राग्न्या सप्तम्याऽपरपक्षे ॥ ५ ॥**

**[3]"दधिक्राव्णो अकारिषम्" इत्युभयत्राष्टम्या ॥६॥**

[4]"इन्द्राग्नी रोचना दिवः" इत्यपरपक्षे सप्तमी । 'सप्तम्या' 'अष्टम्या' इति [ख]सङ्ख्याविरोधादष्टाभिरेवोपस्थानम् ॥ ६ ॥

क. "उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते" इति प्रथमा । एवं क्रमेण ऽस्मिन्ननुवाके (तै. सं. १-५-५) पठिताः षडृचः । षण्णामृचां क्रमशः पाठानन्तरम् "अग्नीषोमाविमं सु मे" (तै. सं २-३-१४-२) इतियमृक् सप्तमीत्वेन पठनीया पूर्वपक्षे । अपरपक्षे तु "इन्द्राग्नी रोचना दिवः" (तै. सं. ४-२-११-१) इति सप्तमीत्वेन पठनीयेति । "उभा वामिन्द्राग्नी" इत्यस्या एतत्रोपस्थानप्रकरणे पाठात् सेवा सप्तमीत्वेन ग्राह्या इति रुद्रदत्तः । "दधिक्राव्ण" इति उभयत्राष्टमीत्वेन पठनीया ।

ख. एताभिरष्टाभिरुपस्थानम् । "ममाग्ने" इत्युत्तरसूत्रोक्तानां चतसृणां जप एव । यदि तासामप्युपस्थानान्तर्गतत्वं, तदा "अग्नीषोमाविमं" इत्यस्या एकादशत्वं "दधिक्राव्ण" इत्यस्या द्वादशत्वं च सम्पद्येत । तथा च सति सप्तम्या इति संख्याविरोधस्स्यादिति । "ममाग्ने" इत्यादीनां चतसृणामप्युपस्थानार्थत्वमेवाङ्गीकरोति रुद्रदत्तः । ( See com. of रुद्रदत्त ( of next Sutra. )

१. उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ १ ॥
अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः । पयस्सहस्रसामृषिम् ॥ २ ॥
अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ॥ ३ ॥
अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे ॥ ४ ॥
उभावामिन्द्राग्नी आहुवध्या उभा राधसस्सह मादयध्यै ।
उभा दाताराविषां रयीणामुभा वाजस्य सातये हुवे वाम् ॥ ५ ॥
अयन्ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोहाथा नो वर्धया रयिम् । ( तै. सं. १-५-५ )

२. अग्नीषोमाविमं सुमे शृणुतं वृषणा हवम् । प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥

३. See Page for दधिक्राव्णः । ४. See P. इन्द्राग्नी

"ममाग्ने वर्चो विहवेष्वस्तु" इति चतस्रः पुरस्तादग्नीषोमीयायाः पूर्वपक्षे । तथैन्द्राग्न्या अपरपक्षे ॥७॥

"ममाग्ने वर्च" इति [क]चतस्रो जपति । 'प्रत्यगाशिषो मन्त्रान् जपत्यकरणान्' इति परिभाषितत्वात् । पुरस्ताच्चतसृभिरिति तृतीयया [1]अनिर्देशाच्च नोपस्थानमाभिः ॥ ७ ॥

"अग्न आयूंषि पवस" इति षड्भिस्संवत्सरे संवत्सरे सदा वा ॥ ८ ॥

यदा षड्भिः आग्निपावमानीभिस्संवत्सरे संवत्सरे उपस्थानं तदा संवत्सरान्ते संवत्सरान्त एव तदुपस्थानं नियम्यते वीप्सावचनस्यार्थवत्वाय । यदापि सदा तदापि न [ख]मासनियमः । पूर्वपक्षे अपरपक्षे इति नियमात् ॥ ८ ॥

पवमानहवींषि वा संवत्सरे संवत्सरे निर्वपेदेतासां स्थाने ॥

पवमानहवींष्यन्वाहार्यदक्षिणानि समानतन्त्राण्येतासां स्थाने । केचिच्छतमानदक्षिणानि पूर्ववदिहापि हविषामुक्तत्वात् । एतानि च सदा पक्षे न लभ्यते ॥ ९ ॥

क. "ममाग्ने,वर्चः" "मम देवा विहवे" "मयि देवा द्रविणम्" "मह्यं यजन्तु" ( तै. सं ४-७-१४-१ ) इति चतस्र ऋचः । आसामृचां जप एव । नोपस्थानमाभिः । तृतीयानिर्देशाभावेन करणमन्त्रत्वाभावात् आत्मगामिफलप्रतिपादकानकरणमन्त्रान् जपति ( आप. श्रौ. ४-१-३ ) इति याजमानप्रकरणे परिभाषितत्वाच्च. । रुद्रदत्त refutes this idea and conforms उपस्थानार्थत्व (See com. of this Sutra alsa ( ४-१-३ )

ख. यदा प्रत्यहं तदा संवत्सरान्तवत् न मासान्तउपस्थानम् । तदा पूर्वपक्षे अपरपक्षे इत्येव नियमकरणादिति । "अग्न आयूंषि" "अग्ने पवस्व" "अग्ने पावक" "स नः पावक" "अग्निश्शुचिव्रततमः" "उदग्ने शुचयः" (तै. सं. १-५-५-२,३) इति षडृच उपस्थानप्रकरणोक्ताः ॥

1. O. Ms. reads wrongly निर्देशाच्चोपस्थानमाभिः

१. See P. for ममाग्ने.

[1]"आयुर्दा अग्न" इति सिद्धमाचित्रावसोः ॥१०॥

"[क]आयुर्दा अग्न" इति सिद्धमुभयोः पक्षयोर्नित्यत्वेन ॥

त्रिश्चित्रावसुना सायमुपतिष्ठते, त्रिरर्वाग्वसुना प्रातः, "अर्वाग्वसो स्वस्ति ते पारमशीय" ॥ ११ ॥

'अर्वाग्वसुना प्रातः' इति वचनात् एतदेवोपस्थानं चित्रावसोः स्थानेऽर्वाग्वसुना कृते न प्रातारिति लभ्यते परिपाठादर्वाग्वसोः पुनः। नार्वाग्वसुमात्रं प्रातः। उपदेशो यस्मिन्नर्वाग्वसुः प्रातरवनेक तदेवेदं कृत्वा नियम्यते प्रातरिति ॥ ११ ॥

[2]"इन्धानास्त्वा शतꣳहिमा" इत्युपस्थाय "इन्धानास्त्वा शतꣳहिमाः। अग्निस्सामिदभिशस्त्या मा पाहि सोमस्य समिदसि परस्याम एधि यमस्य समिदसि मृत्योर्मा पाहि" इति चतस्रस्समिध एकैकस्मिन्नाधाय [3]"सन्त्वमग्ने सूर्यस्य वर्चसा गथाः" इत्यनुवाकशेषेणोपस्थाय "वयꣳसोम व्रते तव मनस्तनूषु विभ्रतः। प्रजावन्तो अशीमहि" इति मुखं विमृष्टे ॥ १२ ॥

इति षोडशी कण्डिका ॥

क. आयुर्दा अग्नेऽसि आयुर्मे देहि वर्चोदा अग्नेऽसि वर्चोमेदेहि तनूपा अग्नेऽसि तनुवं पाह्यग्ने यन्मे तनुवा ऊनं तन्म आपृण चित्रावसो स्वस्ति ते पारमशीय" इति समग्रो मन्त्रः।

१. इन्धानास्त्वा शतꣳहिमाः द्युमन्तस्समिधीमहि वयस्वन्तो वयस्कृतं यशस्वन्तो यशस्कृतꣳसुवीरासो अदाभ्यम्। अग्ने सपत्नदम्भनं वर्षिष्ठे अधिनाके ॥

२. सन्त्वमग्ने सूर्यस्य वर्चसागथास्समृषीणाꣳस्तुतेन संप्रियेण धाम्ना। त्वमग्ने सूर्यवर्चा असि सम्मामायुषा प्रजया सृज ( तै. सं. १-५-५-५ )

“ [क]इन्धानास्त्वा ” इत्यादिष्टा सप्तपदा ऋगग्न्याधानेऽपि पुनः। गार्हपत्यादिषु पञ्चस्वपि चतस्रश्चतस्रः द्वितीयाद्याः[1]। अद्भिर्मुखं स्पृशति सर्वतः ॥ १२ ॥

[१]“सम्पश्यामि प्रजा अहम् ” इति गृहान् प्रेक्षते ॥१॥

यजमानगृहे बहुवचनम् ॥ १ ॥

[२]“ अम्भस्थाम्भो वो भक्षीय ” इति गोष्ठमुपतिष्ठते ॥

उपस्थानम् उपस्थितेन सर्वत्र ॥ २ ॥

[३]“ रेवती रमध्वम् ” इत्यन्तराग्नी तिष्ठन् जपति ॥३॥

[४]“ सꣳहितासि विश्वरूपीः ” इति वत्समभिमृशति ॥ ४ ॥

अग्निहोत्रधेनोर्वत्सालम्भो यदि पयसा होमः। इतरथा यं कञ्चित् ॥४॥

“सꣳहितासि विश्वरूपा ” इति वत्साम् ॥ ५ ॥

“विश्वरूपामोर्जा विश” इति वत्सयां विकारः ॥ ५ ॥

“भुवनमासि सहस्रपोषं पुष” इति वा वत्सम् ॥ ६ ॥

क. इन्धानास्त्वा शतं हिमा द्युमन्तः” इत्यारभ्य “वर्षिष्ठे अधिनाके” इत्यन्ता सप्तपदेयमृक् पूर्वंप्रदर्शिता। तथा प्रथममुपस्थानम्। पुनश्च तया अग्नेस्समित् ” इति त्रिभिर्यजुर्भिश्च सूत्रपठितैश्चतस्रश्चतस्रस्समिधो गार्हपत्यादिष्वादध्यादिति।

1. B. Ms. reads यजुर्भिः for अद्भिः

१. सं पश्यामि प्रजा अहमिडप्रजसो मानवीः। सर्वा भवन्तु नो गृहे ॥

२. अम्भस्स्याम्भो वो भक्षीय महस्स्थ महो वो भक्षीय सहस्थ सहो वो भक्षीयोर्जस्स्थोर्जं वो भक्षीय ॥

३. रेवतीरमध्वमस्मिन् लोकेऽस्मिन् गोष्ठेऽस्मिन् क्षयेऽस्मिन् यो नाविहैवस्तेतो मापगात बह्वीर्मे भूयास्त

४. सꣳहितासि विश्वरूपीरामोर्जा विशा गौपत्येनारायस्पोषेण सहस्रपोषं वः पुष्या सं मयि वो रायश्श्रयन्ताम् ॥ ( तै. सं. १-५-५-१ )

[1]"उपत्वाऽग्ने दिवे दिवे" इति तिसृभिर्गायत्रीभिर्गार्हपत्यमुपातिष्ठते [2]"अग्ने त्वन्नो अन्तम" इति चतसृभिश्च द्विपदाभिः ॥ ७ ॥

"स नो बोधि श्रुधीहवमुरुष्याणो अघायतस्समस्मात्" इत्येषा चतुर्थी भवति ॥ ८ ॥

[क]द्विपदास्ववसानं प्रयोगो नास्ति, समस्ता एव । 'उपचरणीयासु द्विपदत्वं नेष्यत' इति छन्दोविचितिवचनात् ॥ ८ ॥

[3]"ऊर्जा वः पश्याम्यूर्जा मा पश्यत" इति गृहान् प्रेक्षते पशून्वा ॥ ९ ॥

"महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य । न हि तेषाममा चन नाध्वसु वारणेष्वा । ईशे रिपुरघशꣳसः । ते हि पुत्रासो अदितेश्छर्दिर्यच्छन्त्यजस्रम् ॥ विदाशुषे वार्याणि इति प्राजापत्येन तृचेनोपतिष्ठते ॥ १० ॥

प्राजापत्येन तृचेनोपस्थानमाहवनीयस्यैव ॥ १० ॥

क. द्विपदास्वेकैकस्यामवसाय प्रयोगो न कर्तव्यः । किन्तु समस्ता एव प्रयोक्तव्याः । तत्र प्रमाणं छन्दोविचितिवचनम् । उपचरणीयासु प्रयोक्तव्यासु "अग्ने त्वं नः" "तं त्वा शोचिष्ठ" "वसुरग्निर्वसुश्रवाः" इति तिस्रोऽस्मच्छाखोक्ताः द्विपदाः । चतुर्थी शाखान्तरीया सूत्रकारेण पठिता ।

1. उपत्वाऽग्ने दिवे दिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥ १ ॥ ( तै. सं. १-५-६-३ )
राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳस्वे दमे ॥ २ ॥
स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नस्स्वस्तये ॥ ३ ॥
2. अग्ने त्वन्नो अन्तमः । उत त्राता शिवो भव वरूथ्यः ॥ १ ॥
तं त्वा शोचिष्ठदीदिवः । सुम्नाय नूनमीमहे सखिभ्यः ॥ २ ॥
वसुरग्निर्वसुश्रवाः । अच्छा नक्षि द्युमत्तमो रयिं दाः ॥ ३ ॥
3. ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यतेडास्थ मधुकृतस्स्योना मा विशतेरामदः । सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्ताम् ।

यं कामयेत स्वस्ति पुनरागच्छेदिति तमेताभिरन्वीक्षेत। स्वस्त्येव पुनरागच्छतीत्ययज्ञसंयुक्तः कल्पः ॥११॥

स्वस्ति पुनरागच्छेदिति सङ्कल्पितेन पश्चात्स्थितेनावेक्षणम् ॥११॥

"मानश्शꣳसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षाणो ब्रह्मणस्पते ॥ यो रेवान् यो अमीवहा वसुवित्पुष्टिवर्द्धनः । स नस्सिषक्तु यस्तुरः ॥ परि ते दूढभो रथोऽस्माꣳ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥१२॥

इति सप्तदशी कण्डिका

"तत्सवितुर्वरेण्यं" [1]"सोमानꣳस्वरणं" [2]"मित्रस्य चर्षणी धृतः" [3]"प्र स मित्र" [4]कदाचन स्तरीरासि [5]"कदाचन प्रयुच्छसि" "परि त्वाग्ने पुरं वयम्," इत्युपस्थाय॥१॥

"[क]मानश्शꣳस" इति दशभिराहवनीयस्यैव ॥ १ ॥

"निमृद्रोऽसि न्यहं तं मृद्यासं योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म" इति दक्षिणस्य पदः पार्ष्ण्या निमृद्नीयाद्यदि पापीयसा स्पर्द्धेत । "प्रभूरसि प्राहं तमभिभूयासं

क. "मानश्शꣳस" इति तिस्रः पूर्वसूत्रोक्ताः । तत्सवितुरित्याद्यास्सप्तैतत्सूत्रोक्ताः । मिलित्वा दश ।

१. सोमानꣳस्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजम् ॥ ( तै. सं. १-५-६-४ )

२. मित्रस्य चर्षणीधृतश्श्रवो देवस्य सानसिम् । सत्यं चित्रश्रवस्तमम् ॥ ( तै. सं. ३-४-११-५ )

३. प्र समित्र मर्तोअस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमꣳहो अश्नोत्यन्तितो न दूरात् ॥ ( तै. सं. ३-४ ११-५ )

४. कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥

५. कदाचन प्रयुच्छस्युभे निपासि जन्मनी । तुरीयादित्य सवनं त इन्द्रियमातस्थावमृतं दिवि ॥ तै. सं. १-४-२२-१

६. परित्वाग्ने पुरं वयं विप्रꣳसहस्य धीमहि। धृषद्वर्णं दिवे दिवे भेत्तारं भङ्गुरावतः॥ (तै. सं. १-५-६-४)

योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म" इति दक्षिणतः पदो निगृह्णीयाद्यदि सदृशेन । "अभिभूरस्यभ्यहं तं भूयासं योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म" इति प्रपदेन यदि श्रेयसा ॥ २ ॥

पार्ष्णिः पादस्यापरो भागः । तया निमर्दनं भूमेः । स्पर्धा परस्परविवादः । दक्षिणतः दक्षिणेन पादभागेन निगृह्णीयात् निपीडयेद्भूमिम् । सदृशस्तुल्यगुणः । प्रपदं पादाग्रम् । तेन निपीडयत्यभिभूरसीति यद्यधिकगुणेन स्पर्धा ॥ २ ॥

"पूषा मा पशुपाः पातु, पूषा मा पथिपाः पातु, पूषा माऽधिपाः पातु, पूषा माऽधिपतिः पातु" इति लोकानुपस्थाय "प्राची दिगग्निर्देवताऽग्निꣳस ऋच्छतु यो मैतस्यै दिशोऽभिदासति । दक्षिणा दिगिन्द्रो देवतेन्द्रꣳस ऋच्छतु यो मैतस्यै दिशोऽभिदासति । प्रतीची दिक् सोमो देवता सोमꣳ स ऋच्छतु यो मैतस्यै दिशोऽभिदासति । उदीची दिङ्मित्रावरुणौ देवता मित्रावरुणौ स ऋच्छतु यो मैतस्यै दिशोऽभिदासति । ऊर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिꣳस ऋच्छतु यो मैतस्यै दिशोऽभिदासति । इयं दिगदितिर्देवताऽदितिꣳस ऋच्छतु यो मैतस्यै दिशोऽभिदासति" इति यथालिङ्गं दिश उपस्थाय ॥ ३ ॥

इत्यष्टादशी कण्डिका

सर्वैर्मन्त्रैर्युगपत्सर्वलोकानामुपस्थानम् । दिशस्त्वेकैकस्या उपस्थानं यथालिङ्गम् ॥ ३ ॥

अग्नीनुपसमाधाय "धर्मो मा धर्मणः पातु विधर्मो मा विधर्मणः पात्वायुश्च प्रायुश्च चक्षुश्च विचक्षुश्च प्राङ्चार्वाङ्चोरुग ऊरुगस्य ते वाचा वयꣳसम्भक्तेन गमेमहि" इत्युपस्थाय "अग्न आयूꣳषि पवस" इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते ॥ १ ॥

अग्नीन् बलवतः करोतीन्धनैः । "धर्मो मे" इत्याहवनीयस्यैव । केचित्सर्वेषामुपस्थानमधिकृतत्वात् ॥ १ ॥

"अग्ने गृहपत" इति च पुत्रस्य नाम गृह्णाति "तामाशिषमाशासे तन्तव" इत्यजातस्य । अमुष्मा इति जातस्य ॥ २ ॥

यत्किञ्चाग्निहोत्री कामयेत तदग्नीन् याचेत । उपैनं तन्नमतीति विज्ञायते ॥ ३ ॥

अग्निहोत्रमस्यास्तीत्यग्निहोत्री स कृत्वोपस्थानमिष्टं कामं याचेत यद्यदिच्छति ॥ ३ ॥

उपस्थेयोऽग्नी३र्नोपस्थेया३ इत्युक्तम् ॥ ४ ॥

[क]मनुष्यायाहरहरन्नमाहृत्य दत्वा पश्चादेनं याचति स एवं क्रोधयति याच्ञया । देवानामन्नं दत्वा क एगानुपस्थानेन याचिष्यति । अतो नोप-

क. इदञ्चोपस्थानविषयकविचारात्मकस्य ब्राह्मणभागस्य भाष्यम् । तस्यैवैकदेशस्सूत्रकारेणोद्धृतः । स इत्थम् उपस्थेयोऽग्नी३र्नोपस्थेया ३इत्याहुः मनुष्यायेन्वै योऽहरहराहृत्याथैनं याचति स इन्वैतमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयः । अथो खल्वाहुराशिषे वै कं यजमानो यजत इति । एषा खलु वा आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः । प्रजापतिः पशूनसृजत ते सृष्टा अहोरात्रे प्राविशन् ताञ्छन्दोभिरन्वविन्दन्यच्छन्दोभिरुपतिष्ठते स्वमेव तदन्विच्छति न तत्र जाम्यस्तीत्याहुर्योऽहरहरुपतिष्ठत" इति (तै. सं. १-५-९-५-७) इदमुपस्थानं ब्राह्मणे विहितप्रतिषिद्धत्वात् वैकल्पिकमिति भाष्यपर्यालोचनया प्रतीयते । रुद्रदत्तोऽप्येवम् । स हि वदति—'एवं विहितप्रतिषिद्धमुपस्थानं वैकल्पिकमिति भावः' इति । एवञ्चोपस्थानं नैव कर्तव्यमित्येकः पक्षः । नक्तमेवोपस्थानमित्यपरः । सायंप्रातः कालद्वयेऽप्युपस्थानमित्यन्यः । अत्र पूर्वयोः पक्षयोः पूर्वपक्षत्वमेवाङ्गीकृत्य कालद्वयेऽप्युपस्थानस्य नित्यकर्तव्यतामभिप्रयन्ति सायणाचार्याः । तस्मात्सायं प्रातश्च वह्निरुपस्थेय एवेति ।

स्थानम् । अन्यत्तु सर्वमुद्धरेत्यादि मार्जनान्तम् । आशिषे आशीरर्थं यजमानो यजते । एषा च निष्ठा । आशीरग्नीनामुपस्थानम् । अत उपस्थानव्यम् । प्रजापतिना पशवस्सृष्टाः ते चाहोरात्रे अनुप्रविष्टाः । ते छन्दोभिरुपस्थानमन्त्रैर्लब्धाः । अन्योऽपि यस्तैरुपस्थानं करोति स्वमेव पित्र्यं प्राजापत्यं पशुजातं याचति । जामि पुनरुक्तदोषः स न तत्रास्ते योऽहन्यहन्युपस्थानं करोति ॥ ४ ॥

नक्तमुपतिष्ठते न प्रातः ॥ ५ ॥

[1]रात्रावेवोपस्थानं करोति । प्रातरुपस्थानवर्जमन्यद्याजमानम् ॥ ५ ॥

न प्रातरग्निमुपचनाऽवरोहेन्न प्रातराहिताग्निश्चन मन्येतेति वाजसनेयकम् ॥ ६ ॥

अथवा प्रातःकाले [क]उपचनावरोहेदग्निनिमित्तम् । अतस्सर्वयाजमाननिवृत्तिरस्मिन् पक्षे । यदाऽप्याहिताग्निरस्मीत्यात्मानं [2]मन्यते, तदा प्रातराहिताग्निव्रतान्यपि करोति—अहुते न भोक्तव्यमित्येवमादीनि ॥ ६ ॥

भूर्भुवस्सुवस्सुप्रजाः प्रजया भूयास ँ सुवीरो वीरैस्सुवर्चा वर्चसा सुपोषः पोषैः" इत्येवोपतिष्ठेतेति वाजसनेयकम् । "भर्तुं वश्शकेयं श्रद्धा मे मा व्यागा"दिति वा ॥ ७ ॥

एवोपतिष्ठेतेत्यवधारणात् सर्वाग्न्युपस्थाननिवृत्तिः । अन्ये त्वाहवनीयस्यैवोपस्थानम् । वात्सप्रस्य सायंप्रातर्वियमात् "भूर्भुवस्सुवः भर्तुं वश्शकेयम्" इत्येताभ्यां सायमेवोपस्थानं, न लभ्यते प्रातराभ्यामुपस्थानमिति । अन्ये त्वाहुः—वात्सप्रेण कृत्वोपस्थानं यदि करोति प्रातः, ततो

क. प्रातः कालेऽग्निहोत्रकरणायाग्निसमीपं वा गच्छेदित्यर्थः ।

1. O. and B2 Mss. omit रात्रावेवोपस्थानं करोति ।

2. B2. Ms. adds 'न' in both places i. e. before मन्येत and before करोति ।

वात्सप्रेणैव कर्तव्यम् । न [क]प्रातरवनेकेन वान्येन वेति । तथोत्तराभ्याम् । यदा तु पुनः पूर्वैरुपस्थानं सायम् । यदि करोति प्रातस्तदा तैरेव प्रातरवनेकेन वा करोति ॥ ७ ॥

**वात्सप्रेणैव सायं प्रातरुपतिष्ठेतेत्येके ॥ ८ ॥**

[ख]दिवस्परीत्यनुवाको वात्सप्रः ॥ ८ ॥

**गोसूक्तेनाश्वसूक्तेन वा ॥ ९ ॥**

इत्येकोनविंशी कण्डिका ॥

गोसूक्तम् " आ गावो [ग]अग्मन् " इति " उपेदमुपपर्चना " न्तम् । अश्वसूक्तम् "यदक्रन्द" इति [घ]त्रयोऽनुवाकाः पञ्चत्रिंशदृचः । "क्रमैरत्यक्रमीत" इति षट्त्रिंशी ॥ ९ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

षष्ठप्रश्ने पञ्चमः पटलः ॥

## षष्ठः पटलः

**प्रातरवनेकेन प्रातरुपस्थेयः ॥ १ ॥**

[ङ]प्रातरवनेको नामधेयमुपस्थानस्य । प्रातःकाले [1]यत्र प्रक्षालनं हस्तयोः तेन प्रातरेवोपस्थानम्, न सायम् ॥ १ ॥

क. प्रातरवनेको वक्ष्यते । उत्तराभ्यां गोसूक्ताश्वसूक्ताभ्याम् । पूर्वैः वात्सप्रात् पूर्वतनैः ।

ख. "दिवस्परि प्रथमं जज्ञे अग्निरस्मत्" (तै. सं. ४-२-१) इति समग्रोऽनुवाकः ।

ग. गवां महिमप्रतिपादिका अष्टावृचः । तत्राद्या ऋक् "आ गावो अग्मन्" इति । अन्तिमा ऋक् "उपेदमुपपर्चनम" इति । मन्त्राष्टकपरिमितमिदं गोसूक्तम् । (तै. ब्रा. २-८-९-११,१२)

घ. "यदक्रन्दः प्रथमं जायमानः, मा नो मित्रो वरुणो अर्यमा, ये वाजिनं परिपश्यन्ति" (तै. सं. ४-६-७.८) इति त्रयोऽनुवाकाः । तत्र प्रथमेऽनुवाके त्रयोदशर्चः । द्वितीये एकादश । तृतीये एकादश । मिलित्वा पञ्चत्रिंशत् । क्रमैरत्यक्रमीत् (तै. सं. ९-७-२४) गोसूक्तम् अश्वसूक्तमिति सामद्वयम् । गोसूक्तिना दृष्टमिति गोसूक्तम् । एवमश्वसूक्तमिति रुद्रदत्तः ।

ङ. शाखान्तरीय उपस्थानविशेषः प्रातरवनेक इत्युच्यते । प्रातरेव कर्तव्यत्वात् अवनेकसम्बन्धाच्च । अवनेको हस्तप्रक्षालनम् ।

1. B. Ms. reads यस्मिन् for यत्र.

अधिश्रित उन्नीयमाने वा "ममाग्ने वर्चो विहवेष्वस्तु" इति चतस्रो जपित्वा "अपां पते योऽपां भागस्स त एष प्रतिषिक्ता अरातयः प्रतिषिक्ता अरातयः प्रतिषिक्ता अरातयः" इति त्रिर्भूमौ प्रतिषिच्य "कालाय वां जैत्रियाय वामौद्भित्रियाय वामन्नाद्याय वामवनेनिजे सुकृताय वाम्। इदमहं दुरब्धन्यां निष्प्लावयामि भ्रातृव्याणां सपत्नानामहं भूयासमुत्तमः। अपां मैत्रादिवोदकम्" इति हस्तौ प्रक्षाल्य "श्रियं धातर्मयि धेहि श्रियो माधिपतिं कुरु विशामीशानो मघवेन्द्रो मा यशसा नयत्" इति जपित्वा "अथर्व्युष्टा देवजूता वीड्वच्छ पथ जम्भनीम्। आपो मलमिव प्राणिजन्नस्मत्सु शपथा अधि" इत्याचम्येन्द्रियावतीमद्याहं वाचमुद्यासं दीर्घप्राणोऽच्छिन्नोऽदब्धो गोपाः। अजस्रं दैव्यं ज्योतिस्सौपर्णं चक्षुस्सुश्रुतौ कर्णौ केशा बर्हिश्शिखा प्रस्तरो यथा स्थानं कल्पयध्वं शं हृदयायादो मा मा हासिष्टेति यथालिङ्गमङ्गानि सम्मृश्य ॥ २ ॥

इति विंशी कण्डिका

"वर्चोऽसि वर्चो मयि धेह्यायुष्कृदायुः पत्नीस्स्वधावो गोप्त्र्यो मे स्थ गोपायत मा रक्षत मात्समदो मे स्थ मा नः कश्चित्प्रधान्नान्मा* प्र मे स्मह्युपप्रत्नमुपभूर्भुवस्सुवस्सुवरायुर्मे यच्छत" इति सर्वानुपस्थायोत्तरेणानुवाकेनाहवनीयं घर्मा जठरान्नादं मामद्यास्मिन् जने कुरुतमन्नादोऽहमद्यास्मिन् जने भूयासमनन्नादस्स योऽस्मान् द्वेष्टि।

* प्रजायान्मा —पाठभेदः।

अवीमातरिश्वाना पशुमन्तं मामद्याऽस्मिन् जने कुरुतं पशुमानहमद्याऽस्मिन् जने भूयासमपशुस्स योऽस्मान् द्वेष्टि। यमाऽङ्गिरसा यशस्विनं मामद्याऽस्मिन् जने कुरुतं यशस्व्यहमद्यास्मिन् जने भूयासमयशास्स योऽस्मान् द्वेष्टि। अग्ने यो नो अन्ति शपति यश्च दूरे समानो अग्ने अरणो दुरस्युः। वैश्वानरेण सयुजा सजोषास्तं प्रत्यञ्चं दह जातवेदः। अग्ने यत्तेऽर्चिस्तेन तं प्रत्यर्च योऽस्मान् द्वेष्टि यं च वयं द्विष्मः। अग्ने यत्ते शोचिस्तेन तं प्रति शोच योऽस्मान् द्वेष्टि यं च वयं द्विष्मः अग्ने यत्ते तपस्तेन तं प्रति तप योऽस्मान् द्वेष्टि यं च वयं द्विष्मः अग्ने यत्ते हरस्तेन तं प्राति हर योऽस्मान् द्वेष्टि यं च वयं द्विष्मः अग्ने यत्ते तेजस्तेन तं प्रति तितिग्धि योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ १ ॥

इत्येकविंशी कण्डिका

अग्ने रुचां पते नमस्ते रुचे रुचं मयि धेहि अर्वाग्वसो स्वस्ति ते पारमशीयाऽर्वाग्वसो स्वस्ति ते पारमशीयाऽर्वाग्वसो स्वस्ति ते पारमशीय। तन्तुरसि ततो माच्छित्था असौ स्वस्ति तेऽस्त्विति पुत्राणां नामानि गृह्णाति त्रिस्त्रिरेकैकस्य। स्वस्ति वोऽस्तु ये मामनुस्थषण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्चोर्क्च सूनृता च। यथाह त्यद्वसवो गौर्यञ्चित् पादिषितामम्मुञ्चता यजत्राः। एवोष्वस्मन्मुञ्चत व्यंहः प्र तार्यग्ने प्रतरं न आयुः। वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा

१. प्रातार्यग्ने प्रतरां न आयुः इति 'क' पाठः, तैत्तिरीयपाठश्च

ऋषयो नाधमानाः । अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मु-
मुग्ध्यस्मान्निधयेव बद्धान् । अग्न आयूꣳषि पवसे
दधिक्राव्णो अकारिषमिति द्वे । ममाग्ने वर्चो विहवेष्व-
स्त्विति चतस्रोऽग्नीषोमाविमं सुम इत्येषा । तत्सवितुर्वृणी-
महे वयं देवस्य भोजनम् । श्रेष्ठꣳ सर्वधातमं तुरं भगस्य
धीमहि । अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम् ।
न मिनन्ति स्वराज्यम् ॥ १ ॥

इति द्वाविंशी कण्डिका

अद्या नो देव सवितः प्रजावत्सावीस्सौभगं परादु-
ष्वप्न्यꣳ सुव । विश्वानि देव सवितर्दुरितानि परासुव ।
यद्भद्रं तन्म आसुव ॥ अनागसो अदितये वयं देवस्य
सवितुस्सवे । विश्वा नामानि धीमहि ॥ स हि रत्नानि
दाशुषे सुवाति सविता भगः । तं भागं चित्रमीमहे ।
वाममद्य सवितर्वाममु श्वो दिवे दिवे वाममस्मभ्यꣳसावीः ।
वामस्य हि क्षयस्य देवभूरेरया धिया वामभाजस्स्याम ॥
दीक्षा तपो मनसो मातरिश्वा बृहस्पतिर्वाचो अस्यास्स-
योनिः । वेदाꣳसि विद्या मयि सन्तु चारवोऽग्नीषोमौ
यशो अस्मासु धत्तम् ॥ अग्निर्येन विराजति सोमो येन
विराजति विराड्येन विराजति तेनाहं विश्वतस्परि त्रिराज्या-
समिहैकवृत्" इत्युपस्थायाऽग्नेस्तृणान्यपचिनोति तेजस्वी
ब्रह्मवर्चसी भवतीति विज्ञायते ॥ १ ॥

इति त्रयोविंशी कण्डिका

"अपां पत" इति प्रतिषिञ्चति सर्वमन्त्रान्तेन संख्यायुक्तत्वात् । केचिन्मन्त्रे मन्त्रे सेकः । द्विवचनत्वान्मन्त्रस्य युगपत्प्रक्षालनं हस्तयोः "कालाय वाम्" इति । "अहर्व्युष्टाम्" इति भक्षणमपाम् । "इन्द्रियावतीम्" इति मुखं स्पृशति यत्र नोच्छिष्टो भवति । "दीर्घप्राण" इति नासिकाम् । "अजस्रम्" इत्यक्षिणी । "सुश्रुतौ" इति कर्णौ । "केशा बर्हिः" इति केशान् । "शिखा प्रस्तर" इति शिखाम् । "यथास्थानम्" इति हृदयम् "वर्चोऽसि" इति सर्वानग्नीन् । उत्तरामाहुतिं हुत्वामुपोत्थायोत्तरेणानुवाकेनाऽऽहवनीयमुपतिष्ठते । "तन्तुरसि ततो माच्छित्थायं देवदत्तः स्वस्ति तेऽस्तु । तन्तुरसि ततो माच्छित्था यज्ञदत्तः स्वस्ति तेऽस्तु" एवमावर्तते पुत्रे पुत्रे तन्तुरादि । [1]स्वस्ति वोऽस्तु ये मामनुस्थ इत्यस्मिन्नप्यनिवृत्तिः । [क]पुत्रद्रव्यगुणत्वाल्लिङ्गस्य । "अग्न आयूꣳषि पवसे" "दधिक्राव्णः" इत्येते [ख]एव द्वे । केचित् [१]"दधिक्राव्णः" [२]"आदधिक्रा" इति द्वे कुर्वन्ति । इहैकवृदित्युपस्थानान्ते तृणापनयनं [ग]यजमानस्येति । यत्करोत्युपस्थानं तस्यान्ते साधमपि । उपदेशः प्रातरवनेक्त [घ]एवेति । अन्यत्राऽध्वर्युणा शोधनैस्सह तैरेव तृणैः परिस्तरणं पुनः पुनः अपचयस्यार्थवत्त्वाय । [2]अन्यैरन्यैरिति न्यायः । परिस्तरणानां [ङ]प्रतिपाद्यत्वादन्तकाले । तेजोऽस्यास्तीति तेजस्वी ॥ १ ॥

इत्यापस्तम्बीयश्रौतसूत्रे धूर्तस्वामिभाष्यसहिते

षष्ठप्रश्ने षष्ठः पटलः

क. मन्त्रस्य पुत्रगतफलाशासनपरत्वात् एकस्मिन्नपि पुत्रे मन्त्रः प्रवर्तेत एवेति ।

ख. द्वे इति दधिक्राव्णः इत्यनेन सम्बध्यते । दधिक्राव्णः इत्यारभ्य द्वे इति । ततश्च दधिक्राव्णः इति तदुपरितनी "आ दधिक्राश्शवसा" इति च लभ्येते इति केचिदिति ।

ग. 'उपस्थायाऽग्नेस्तृणान्यपचिनोति' इति ल्यपा समानकर्तृकत्वावगमादुपस्थानकर्ता यजमान एव तृणापचयनमपि कुर्यादिति ।

घ. तदनन्तरमेवोपदेशादन्यत्रानुपदेशाच्चेति ।

ङ. अग्नीनां परितस्तरणरूपकार्ये उपयुक्तानां परिस्तरणदर्भाणां कृतकार्याणां कर्मणोऽन्ते प्रतिपत्तिरूपसंस्कारसापेक्षत्वात् अपचयनस्य संस्काररूपत्वात् तेन च संस्कृतानां पुनरुपादाने प्रमाणाभावात् पुनःस्तरणप्राप्तावन्यैरेव स्तरणं प्राप्नोतीति ।

1. B. Ms. adds तन्तुरसि after स्वस्तिवोऽस्तु.
2. B. Ms. omits one अन्यैः

१. दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत् प्रण आयूꣳषि तारिषत् ॥

२. आदधिक्राश्शवसा पञ्च कृष्टीस्सूर्य इव ज्योतिषाऽपस्ततान । सहस्रसाश्शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचाꣳसि ॥

सप्तमः पटलः

प्रवत्स्यन् सम्प्रेष्यत्यग्नीन् समाधेहीति ॥ १ ॥

प्रवत्स्यन् प्रवास्यन् । [क]प्रवासं करिष्यामीति सङ्कल्पितवान् सम्प्रेष्यत्यग्निहोत्रहोतारं,–अग्नीन् समाधेहि इति ॥ १ ॥

ज्वलत उपतिष्ठते ॥ २ ॥

"पशून्मेऽशंस्य पाहि तान्नो गोपायास्माकं पुनरागमात्" इत्याहवनीयम् । "प्रजां नो नर्य पाहि तां नो गोपायास्माकं पुनरागमात्" इति गार्हपत्यम् । अन्नं नो बुध्न्य पाहि तन्नो गोपायास्माकं पुनरागमात्" इत्यन्वाहार्यपचनम् ॥ ३ ॥

विहरणं कृत्वा तेन कृतेषु बलवत्सु ज्वलत उपतिष्ठते ॥

अन्तरा तिष्ठन् जपति–"इमान्नो मित्रावरुणा गृहान् गोपायतं युवम् । अविनष्टानविहृतान् पूषैनानभिरक्षत्वास्माकं पुनरागमात्" इति ॥ ४ ॥

पूर्ववद्विराट्क्रमैरुपस्थायाऽशित्वा प्रवत्स्यमेष्यन्नाह—अग्नीन् समाधेहि इति ॥ ५ ॥

विराट्क्रमैरुपस्थायाशनम् । ततो गमिष्यामीत्येवं पुनरुपस्थानं प्रज्वलताम् । केचिदाहुः–यदाऽशित्वा गच्छति तदैवमुपस्थानम् । अनशितस्य तु गच्छतः पूर्वमिति । तदनुपपन्नम्; आगतोपस्थानेऽप्युपस्थानद्वयदर्शनात् । गमनमन्त्रो वाग्यमनञ्च तेषां न प्राप्नोत्यनशितस्य गच्छतः । अत उपस्थायाशनं, पुनरुपस्थानं, गमनम् । गते यजमानेऽग्नीनां त्यागोऽधार्याणाम् ॥ ५ ॥

क. ग्रामान्तरे रात्रिवासः प्रवासः इति रुद्रदत्तः ।

उज्ज्वलत उपतिष्ठते—"प्रजां मे नर्य पाहि तां मे गोपायाऽस्माकं पुनरागमात्" इति गार्हपत्यम्। "अन्नं मे बुध्न्य पाहि तन्मे गोपायाऽस्माकं पुनरागमात्" इत्यन्वाहार्यपचनम्। "पशून् मे शꣳस्य पाहि तन्मे गोपायाऽस्माकं पुनरागमात्" इत्याहवनीयम् ॥ ६ ॥

"[1]मम नाम प्रथमं जातवेद" इति च ॥ ७ ॥

"मम नाम प्रथमं जातवेद" इत्याहवनीयमेव ॥ ७ ॥

वाग्यतोऽभिप्रव्रजति "मा प्रगाम पथो वयं मा यज्ञादिन्द्र सोमिनः। मां तस्थुर्नो अरातयः। उदस्माꣳ उत्तरान्नयाग्ने घृतेनाहुत। रायस्पोषेण सꣳसृज प्रजया च बहून् कृधि" इति ॥ ८ ॥

वाग्यतो भूत्वा "मा प्रगामे" ति प्रतिष्ठते ॥ ८ ॥

आराद्ग्निभ्यो वाचं विसृजते ॥ ९ ॥

इति चतुर्विंशी कण्डिका

आरात् दूरादग्निभ्यः, वाग्विसर्गो यतोऽग्नयस्तदभिमुखः ॥

प्रवसन् काले विहाराभिमुखोऽग्न्युपस्थानं जपति ॥ १ ॥

अग्न्युपस्थानमात्रस्य जपः। [क]सर्वस्येत्युपदेशः। कात्यायनमतिश्च। केचित्–प्रत्यगाशिषमेव, न चोन्नयेति, तस्याध्वर्युणोक्तत्वात्। अन्यत्र

क. नोपस्थेय इति पक्षे सर्वयाजमाननिवृत्तेरुक्तत्वात् उपस्थानविधौ तेन सह सर्वयाजमानप्रवृत्तिरिति। 'प्रवसन् याजमानं कुर्याद्यथाकालम्' (का. श्रौ. ४-१२-१९) इति कात्यायनेनापि विधानादिति।

१. मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे।
तत्त्वं बिभृहि पुनरा मैदतोस्तवाहं नाम बिभराण्यग्ने ॥ (तै. सं. १-५-१०-१)

वसतिः-प्रवासोऽग्निरहितस्य। यदास्य राजपुरुषाः [1]उपस्थानं कर्तुं न प्रयच्छन्ति तदागमनमन्त्रस्यापि लोपः [2]उपस्थानस्य च। एतयैवेत्यवधारणात्। केचिदग्न्युपस्थान[क]प्रत्याम्नायमपि। तदनुपपन्नमेकस्य बह्वर्थत्वम्॥

यद्यनुपस्थाय प्रवसेदेतयैवोपतिष्ठेत॥ २॥

यस्य वाऽद्यैव निवर्तिष्यामीति गतस्य प्रवासः। सर्वानुपस्थाय वसतिः॥ २॥

समिधः कृत्वा प्रत्येति॥ ३॥

समिधः कृत्वा पाणौ प्रतिनिवर्तते॥ ३॥

यथा ह वा इतं पितरं प्रोषिवांसं पुत्राः प्रत्याधावन्त्येवं ह वा एतमग्नयः प्रत्याधावन्ति सशकलान् दारूणि वा हरन्नेति यथैव तत्पुत्रेभ्य आहरन्नेति, तादृक्तदिति विज्ञायते॥ ४॥

यथा इतं आगतं पितरं कुत आगतम्? प्रोषिवांसमागतं पुत्रास्तं प्रत्यागच्छन्ति-दास्यति नो यदनेनानीतमिति। एवमेवाग्नयोऽपि तत उत्पन्ना मृगयन्ते। स यजमानः शकलान् भिन्नान् दारूण्यभिन्नानि छिन्नास्समिधो गृह्यन्ते। दारूणां पृथग्ग्रहणात्। त्रयमेतद्विकल्प्यते। एतदाहरन्नागच्छति। यथा पुत्रेभ्यो वस्त्राद्याहरन्नागच्छति तथाग्निभ्यस्समिधः॥ ४॥

आरादग्निभ्यो वाचं यच्छति॥ ५॥

क. अवधारणबलात् प्रत्याम्नायस्यापि निवृत्तिमिच्छन्ति। तन्न युक्तम्; एकस्योभयनिवृत्तिरूपानेकार्थत्वकल्पनायोगादिति।

1. B. Ms. reads अग्न्युपस्थानं for उपस्थानम्
2. B. Ms. adds एतस्य before उपस्थानस्य

यद्येनं राजा पिताऽऽचार्यो वाऽन्तरेणाऽग्नीन् स्यात् छर्दिर्दर्शे नैनमाद्रियेत ॥ ६ ॥

राजादिग्रहणं[1] प्रदर्शनार्थम् । अन्यस्याऽप्यादरो न कर्तव्यः । अतिपूज्या एतेऽपि तावन्न पूज्यन्ते किं पुनरन्ये जनाः[2] । यत्राऽग्न्यगारस्य [क]छर्दींषि दृश्यन्ते तत्राऽग्नीन् यजमानं चाऽन्तरेण यो भवति तस्याऽनादरः । [ख]वाग्यमनविसर्गयोश्छर्दिर्दर्शनमेव प्रमाणम् ॥ ६ ॥

"विश्वदानीमाभरन्तोऽनातुरेण मनसा । अग्ने माते प्रतिवेशा रिषाम । नमस्ते अस्तु मीढुषे नमस्त उपसद्वने । अग्ने शुम्भस्व तन्वस्सं मा रय्या सृज" इत्यभ्येति ॥ ७ ॥

कृतशौचो 'विश्वदानी' मित्यभ्येति अभिगच्छत्यग्निसमीपम् ॥ ७॥

"अग्नीन् समाधेहि" इति ॥ ८ ॥

ततो निहृत्य सम्प्रैषमाह ॥ ८ ॥

ज्वलत उपतिष्ठते ॥ ९ ॥

"पशून्नश्शꣳस्याजूगुपस्तान्नः पुनर्देहि" इत्याहवनीयमभिप्राण्य "अग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणास्सहस्रमपानाः । त्वꣳसाहस्रस्य राय ईशिषे सहस्र-

क. गृहस्योपर्या च्छादनार्थं प्रसारितानि तृणकटादीनि छर्दींषि ।

ख. 'आरादग्निभ्यो वाचं विसृजते (आप. श्रौ. ६-२४-९) इति विहितो वाग्विसर्गोऽपि तत्प्रमाणक एवायावच्छर्दिर्दृश्यते तावन्न कर्तव्यो वाग्विसर्ग इति ।

1. Ad. omits ग्रहणम्
2. B. Ms. reads अन्यो जनः

धारस्य पयसः । तस्य नो रास्व तस्य ते भक्षीय तस्य ते वयं भूयिष्ठभाजो भूयास्म " इत्याहवनीयम् ॥ १० ॥

इति पञ्चविंशी कण्डिका

" प्रजां नो नर्याऽजुगूपस्तां नः पुनर्देहि " इति गार्हपत्यमभिप्राण्य " अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳसुगृहपतिर्मया त्वं गृहपतिना भूयाः । शतꣳहिमाद्वायू राधाꣳसीत्संपृञ्चानावसंपृञ्चानौ तन्वः " इति गार्हपत्यम् ॥ १ ॥

अभिप्राणनमुपर्युच्छ्वासः[1] । " अग्ने सहस्राक्ष " " अग्ने गृहपते " इत्युपस्थानम् ॥ १ ॥

" अन्नं नो बुध्न्याजुगूपस्तन्नः पुनर्देहि " इत्यन्वाहार्यपचनमभिप्राण्यान्तराग्नी तिष्ठन् जपति यथा प्रवसद्युपस्थाने ॥ २ ॥

" अजुगूपतम् " " अभ्यन्तराक्षीत् " इति मन्त्रं सन्नमति ॥ ३ ॥

"[क]गृहानजुगूपतं युवम्" " पूषैनानभ्यराक्षीदास्माकं पुनरागमात् " इति [2]सन्नामः । अन्यदविकृतम् ॥ ३ ॥

क. "इमां नो मित्रावरुणा गृहानजूगुपतं युवम् । अविनष्टानविहृतान् पूषैनानभ्यराक्षीदस्माकं पुनरागमात्" इति मन्त्र ऊहित्वा पठनीयः (see आप. श्रौ. ६-२४-४) इति ।

1. B. Ms. reads उच्छ्वास for उपर्युच्छ्वासः

2. B. Ms. reads मन्त्रसन्नामः for सन्नामः

[1]"मम नाम तव च जातवेद" इति [क]चतसृभिरा-हवनीयम् ॥

"मम नाम तव च" इत्याहवनीयोपस्थानम् ॥ ४ ॥

"प्रजां मे नर्याऽजुगुपस्तां मे पुनर्देहि" इति गार्ह-पत्यमभ्यपान्य, "अन्नं मे बुध्न्याऽजुगुपस्तन्मे पुनर्देहि" इत्यन्वाहार्यपचनमभ्यपान्य, "पशून् मे शंस्याऽजुगुपस्तान् मे पुनर्देहि" इत्याहवनीयमभ्यपान्य, पूर्ववद्विराट्क्रमैरु-पतिष्ठते । अजूगुप इति मन्त्रं सन्नमति ॥ ५ ॥

[1]अभ्यपाननमुपर्युच्छ्वासः । "[क]अथर्व पितुं मेऽजुगृपोऽन्नम्" "नर्य प्रजां मेऽजुगूपो मूलम्" । एवमितरत्र ॥ ५ ॥

अग्न्युपस्थानवदत्र समिधो दिशां चोपस्थानम् ॥

अग्न्युपस्थानवत् "इन्धानास्त्वा" इति चतस्रश्चतस्र एकैकस्मिन् अग्नौ । दिशामुपस्थानं "प्राची दिक्" इति । एतावदागतोपस्थानम् । उत्तरं सर्वविधिषु तुल्यम्—अतिप्रवासप्रायश्चित्तं गृहाभिगमनञ्च ॥

क. "अथर्व पितुं मे गोपाय" इत्यादिरेको मन्त्रः । "नर्य प्रजां मे गोपाय" इत्यपरः । (see आप. श्रौ. ६-१६-२) तदिदं मन्त्रद्वयमाधानप्रकरणे पठितम् । तत्र मन्त्रद्वयेऽपि "गोपाय" इति पदस्थाने "अजूगुपः" इत्यूहं कृत्वा प्रकृते पाठः कार्य इति ।

1. O. Ms. adds अभ्यपान्य before अभ्यपाननम् ।

१.क मम नाम तव च जातवेदो वाससी इव विवसानौ ये चरावः ।
आयुषे त्वं जीवसे वयं यथायथं विपरि दधावहै पुनस्ते ॥ १ ॥
नमोऽग्नयेऽप्रतिविद्धाय नमोऽनाधृष्टाय नमस्सम्राजे ।
अषाढो अग्निर्बृहद्वया विश्वजित्सहन्त्यश्श्रेष्ठो गन्धर्वः ॥ २ ॥
त्वत्पितारो अग्ने देवास्त्वामाहुतयस्त्वद्विवाचनाः ।
सम्मामायुषा सङ्गौपत्येन सुहिते मा धाः ॥ ३ ॥
अयमग्निश्श्रेष्ठतमोऽयं भगवत्तमोऽयꣳ सहस्रसातमः ।
अस्मा अस्तु सुवीर्यम् ॥ ४ ॥

नवमीं चेदतिप्रवसेत्[1] "मित्रो जनान् यातयाति प्रजानन्" इति मैत्र्योपस्थाय[2] "मनो ज्योतिर्जुषताम्" इत्याज्याहुतिं जुहुयात् ॥ ७ ॥

[1]आहवनीयस्य मैत्र्योपस्थानं "मनो ज्योतिः" इत्याहुतिः । [2]यस्यां 'या इष्टा' इति ॥ ७ ॥

समिध आहुतिमुपस्थानमित्येवमानुपूर्व्यमेके समामनन्ति ॥ ८ ॥

इति षड्विंशी कण्डिका

सत्यति प्रवासे एकेषां मतेन क्रमः–समिध [3]आहुतिं कृत्वा मैत्र्योपस्थानम् । ततो दिगुपस्थानमिति ॥ ८ ॥

तदाहुर्नाग्निरुपस्थेयः कः श्रेयाऽꣳसं विषुप्तं बोधयिष्यतीति । अभयं कराऽभयं मे कुरु स्वस्ति मेऽस्त्वभयं मे अस्त्वित्येव ब्रूयात् । प्रवत्स्यदुपस्थानमागतोपस्थानं चाऽधिकृत्य वाजसनेयिनस्समामनन्ति ॥ १ ॥

अन्ये ब्रह्मवादिन आहुः–अग्नेरुपस्थानं न कर्तव्यं पूर्वेण विधानेन । श्रेयान् प्रशस्यतरः । कस्तं विषुप्तं-प्रसुप्तं बोधयिष्यति उद्घाटयति विहरणं समिदाधानार्थम् । अतोऽनुद्घाटितेष्वग्निष्वविहृतेषुचाऽभयं करोति ब्रूयात् प्रवत्स्यन् । ततो वाग्यतस्यैव प्रस्थानं "मा प्रगाम" इति ।

1. B. Ms. 1 reads आहवनीयं मैत्र्योपस्थाय
2. Ibid, अस्याम्
3. O. Ms. reads आहुतिमिति कृत्वा

१. मित्रो जनान् यातयति प्रजानन् मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टिरनिमिषाऽभिचष्टे सत्याय हव्यं घृतवाद्विधेम ॥ तै. ३-४-११-५

२. मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳसमिमं दधातु । या इष्टा उषसो निम्रुचश्च तास्सन्दधामि हविषा घृतेन ॥ तै. सं. १-५-१०-२

प्रतिनिवृत्त्य वाग्यतः "विश्वदानीम्" इत्यभिगम्याग्नीनभयङ्करेति ब्रूयाद्नुध्द्राटितानग्नीन् । ततो गृहाभिगमनम् । यदा त्वनिप्रवासः तदा 'अभयङ्करे'त्युक्त्वा विहरणं मैत्रियोपस्थानमाहुतिर्गृहाभिगमनम् । एष विधिर्बह्वृचमतेऽपि उपस्थानद्वयमधिकृत्य वाजसनेयिनः परिपठन्ति । उत्तरश्च ॥ १ ॥

नमो वोऽस्तु प्रवत्स्यामि नमो वो अस्तु प्रावात्स्यमिति बह्वृचाः ॥ २ ॥

गृहा मा बिभेथ मा वेपिढ्वमूर्जं बिभ्रत एमासि ऊर्जं बिभ्रद्वसुवनिस्सुमेधा गृहानैमि मनसा मोदमानः । येषामभ्येति प्रवसन् येषु सौमनसो बहुः । गृहानुपह्वयामहे त नो जानन्तु जानतः । उपहूता भूरिधनास्सखायस्स्वादुसम्मुदः । अरिष्टास्सर्वपुरुषा गृहा नस्सन्तु सर्वदा । उपहूता इह गाव उपहूता अजावयः । अथो अन्नस्य कीलालं उपहूतो गृहेषु नः" इति गृहानभ्येति ॥ ३ ॥

गृहानभ्येति गच्छति समीपम् ॥ ३ ॥

"क्षेमाय वश्शान्त्यै प्रपद्ये शिवं शग्मं शंयोश्शंयोः" इति प्रविशति ॥ ४ ॥

"ऊर्जं बिभ्रद्वस्सुमनास्सुवर्चा गृहानागां मनसा मोदमानः । इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनास्संविशामि" इति प्रविश्य जपति । संविशन् वा ॥ ५ ॥

इति सप्तविंशी कण्डिका

संविशन् निषीदन् यजमानो जपति प्रविश्य वा ॥ ५ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

षष्ठप्रश्ने सप्तमः पटलः

अष्टमः पटलः ॥

## सगृहः प्रयास्यन् वास्तोष्पतीयं जुहोति ॥ १ ॥

गृहसंज्ञा कर्मसु [1]वर्तते सगृहः सहकर्मभिर्यदा गच्छति तदा उत्तरो विधिः। पूर्वोक्तस्तु यदा गृहे क्रियन्ते कर्माणि। उपदेशः–पत्नी गृहम्। तया सह यदा गच्छति तदाऽग्नयो नेया इति। केचिदाहुः–यदैवायमत्यन्तवसतिं करोति तदैवाग्नयो नेयाः। यद्यनोवाह्यमिति लिङ्गात्। यदा तु पुनर्निवर्तते तदा न चाल्या अग्नय इति। वास्तोष्पतिर्यस्य देवता तद्वास्तोष्पतीयम् ॥ १ ॥

## अहुते यानेषु भाण्डान्यारोपयन्ति ॥ २ ॥

## न हीन[क]मन्वाहरेयुः ॥ ३ ॥

तस्मिन्नहुते, कृते [ख]नित्यकर्मणि, यानेषु शकटादिषु भाण्डानि घटादीन्यारोपयन्ति यजमानपरिचारकाः ॥ २, ३ ॥

## यद्यनोवाह्यं स्यात् पूर्वं तं प्रवहेयुः अपो वोद्धरेयुः ॥

अनः शकटम्, तेन यदूह्यते तदनोवाह्यं धान्यादि। तत्पूर्वं नेतव्यम्। [1]अपोद्धारः अन्यत्र स्थापनम्। तत्पश्चान्नेतव्यम् ॥ ४ ॥

## यत्र संतता रात्रीर्वसेत् पञ्च सप्त नव दश वा तत्प्रयास्यन् जुहुयात् ॥ ५ ॥

संतता रात्रीरेकत्रस्था अन्येन वसतिना अव्यवेताः। आदौ सङ्कल्पः–पञ्चसु सप्तसु वा होमं करिष्यामि–वास्तोष्पत इति। तत्प्रयास्यन् तस्मात्प्रयास्यन पञ्चरात्रवासनौ यो वाऽस्य सङ्कल्पः ॥ ५ ॥

क. हीनमनारोपितम्। वास्तोष्पतिहोमात्पूर्वं यन्नारोपितं तदनन्तरं नारोपयेत्, किन्तु त्यजेदेवेति।

ख. नित्यकर्म अत्राग्निहोत्रम्। अग्निहोत्रे कृते वास्तोष्पतिहोमे चाऽकृत इति।

1. B2 Ms. reads अपोद्धरणं

नवरात्रवास्तौ वा पुनरेत्यैकामुषित्वा प्रयास्यन् जुहुयात् ॥

नवरात्रवास्ताविति यदा दशरात्रसङ्कल्पः, तदा नवरात्रस्थाने पुनरेत्यैकामपि रात्रिमुषित्वा गच्छन् वास्तोष्पतीयं जुहोति । [क]दशोषितस्तत्रेति । निदर्शनं चैतत् । चतूरात्रवास्तावपि पुनरेकामुषित्वा [ख]प्रयास्यन् जुहोति । हीनं यद्हुते वास्तोष्पतीये नारोपितमन्यत्र वा न स्थापितं तत्पश्चान्न नेतव्यम् ॥ ६ ॥

[ग]दक्षिणो युक्तो भवति सव्योऽयुक्तः । अपि वाऽग्निष्ठस्य दक्षिणो युक्तस्सव्यस्य योक्त्रं परिहृतम् । सर्वेषु वा युक्तेषु ॥ ७ ॥

यानानां दक्षिणो युक्तः, सव्यस्त्वयुक्तः । अग्नयो यत्र स्थाप्यन्ते अरणिगताः तदग्निष्ठं तस्य दक्षिणोऽ[1]नड्वान् युक्तः । सव्यस्य तु योक्त्रं परिहृतम्, न तु शम्यायां क्षिप्यते ॥ ७ ॥

[१]"वास्तोष्पत" इति अनुद्रुत्योत्तरया गार्हपत्ये हुत्वाऽवक्षाणानि संप्रक्षाप्य पृथगरणीष्वग्नीन् समारोप्य ते ये धार्यन्ते ॥ ८ ॥

क. दशरात्रनिवासस्यैव वास्तोष्पतिहोमं प्रति निमित्तता । अतो यत्र नवरात्रीरुषित्वा बहिर्गत्वा पुनः पूर्वनवरात्रोषितं स्थानमागत्य दिनमेकमपि वसेत् तदा दशरात्रोषितत्वाविशेषात् तत्रापि होमो भवत्येवेति ।

ख. मतमिदं खण्डयति रुद्रदत्तः—केचित्प्रदर्शनार्थमित्यादिना प्रदर्शनार्थत्वप्रसङ्गादित्यन्तेन ग्रन्थेन ( रुद्रदत्त com. P. 377 A. S. B. edn )

1. B. Ms1 omits अनड्वान्

१. वास्तोष्पते प्रति जानीह्यस्मान् स्वावेशो अनमीवो भवानः ।
यत्त्वेमहे प्रति तन्नो जुषस्व शन्न एधि द्विपदे शञ्चतुष्पदे ॥
वास्तोष्पते शग्मया स्सदा ते सक्षीमहि रण्वया गातुमत्या ।
आवह क्षेम उत योगे वरन्नो यूयं पात स्वस्तिभिस्सदा नः ॥ ( तै. ३-४-१०-१ )

"वास्तोष्पते ... शग्मया" इति जुहोति गार्हपत्ये। "पुरोनुवाक्यामनूच्य याज्य...या जुहोति" इति [क]भक्तिमात्रम्। यस्माद्वाभ्यां होमः। अविहृत...ऽग्नीन् होमः। प्रणयनस्यार्थाभावात्। [ख]उपदेशः प्रणीय जुहो...ति। कथम्? संसृष्टो गार्हपत्य इति। केचित्तु व्यति[ग]हारेणार्थं कल्पयन्ति–उत्तरया हुत्वाऽऽहवनीये, गार्हपत्येऽवक्षाणानि सम्प्रक्षाप्येति। तदनुपपन्नम्। मुख्यसम्भवे गौणक्लृप्तेरन्याय्यत्वात्। अवक्षाणानि उल्मुकानि। सम्प्रक्षाप्य क्षपयित्वा सर्वाग्नीनाम्, "यदवक्षाणान्यसम्प्रक्षाप्य" इति दोषश्रुतेरविशेषात् ॥ ८ ॥

**उपर्यग्नावरणी धारयन् जपति—"अयं ते योनिर्ऋत्विय" इति ॥ ९ ॥**

पृथक्पृथगरणिद्वयम्। [1]धार्याणां समन्त्रकमधरारणिमुत्तरारणिं च धारयन् जपत्यग्नावु[2]परि। न मन्त्रान्तेन "अयं त" इति धारयन् जपतीति वचनात् ॥ ९ ॥

**अपि वा यजमान एवाऽऽत्मन्त्समारोपयते ॥ १० ॥**

अपि वा धार्यानात्मनि समारोपयते क्रमेण[घ] ॥ १० ॥

क. "वास्तोष्पतिहोमे पुरोनुवाक्यामनूच्य याज्यया जुहोति" इत्युक्तं ब्राह्मणे। तत्र याथातथ्ये न। दर्विहोमत्वेन याज्यापुरोनुवाक्ययोरभावात्। किन्तु मन्त्रद्वयमुक्त्वा होमः कर्तव्यः। तत्र च गौण्या याज्यापुरोनुवाक्याशब्दः स्तुत्यर्थः। अत एवोक्तं सूत्रकारेण–'वास्तोष्पत इत्यनुद्रुत्योत्तरया जुहोतीति।

ख. सूत्रे हि 'गार्हपत्ये हुत्वा' इति विशिष्य गार्हपत्ये होम उक्तः। अप्रणीतावस्थायां न गार्हपत्यत्वम्, संसृष्टत्वात्। अतः प्रणयने कृतेऽवशिष्टस्य गार्हपत्यत्वात् तत्र होम इत्युपदेशमतम्।

ग. व्यतिहारः अध्याहारः। आहवनीये इत्यध्याहृत्य तेन सह हुत्वा इत्यन्वयं कृत्वा गार्हपत्ये सम्प्रक्षाप्येति सम्बध्नन्ति। तदनुपपन्नमित्यादि। क्षपयित्वा दग्ध्वा निश्शेषम्।

घ. क्रमोऽत्राऽऽधानदृष्टो वेदितव्यः।

1. O. Ms1, reads धार्यमाणानाम्
2. B. Ms1, omits उपरि

"या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मान-मच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि। यज्ञो भूत्वा यज्ञ-मासीद स्वां योनिं जातवेदो भुव आजायमानस्स्वक्षय एहि" इति हस्तं प्रताप्य मुखायाऽऽहरते[×] ॥ ११ ॥

हस्तं प्रताप्य तूष्णीं मुखसमीपमानयति। तथाऽऽहरते हस्तगत ऊष्मा यथा—प्रविशति शरीरम्। [1]आत्मसमारूढेऽपि न नियम आप-स्तम्बेनोक्तः कल्पान्तरवत् स्नानाचमनादि निषेधो [क]नास्तीति ॥

वास "उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन्। आयुः प्रजा॰ रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोणे" इति लौकिकेऽग्नावुपारोहयति ॥१२॥

वासः यत्र वसतिः। तत्रापराह्ण "उपावरोह" इति मन्त्र उक्ते गार्हपत्यादिर्देवताभूतोऽग्निर्लौकिकमग्निमुपसङ्क्रामति। उपदेशो यथा वायुर्मुखगतो लौकिकमग्निं प्राप्नोति तथा करोति। क्रमेणोपावरोहयति यथा समारूढाः ॥ १२ ॥

अरण्योर्वोपावरोह्य मन्थेत् ॥ १३ ॥

तस्य तस्य वारण्योरुपावरोहयति मन्त्रेण। [2]न तदा [ख]निर्वर्त-मानजपः ॥ १३ ॥

क. अतोऽत्रास्पृश्यस्पर्शनमूत्रपुरीषोच्चारणादौ न दोषः। स्नानाचमनोपवासादिभिः स्मार्तैर्नैमि-त्तिकैर्यजमानशुद्धावग्नीनामपि आत्मन्यारूढानां शुद्धिरेवेति मन्तव्यम्।

ख. "उपावरोह जातवेदः" इति मन्त्रस्यात्मसमारूढानां लौकिकाग्न्युपावरोहण एव विनियो-गादरण्योरुपावरोहणे मन्त्रस्याप्रवृत्तेरुत्तरसूत्रेऽरणिसमारूढानां मन्थने पुनर्मन्त्रविधानबलाच्च नात्र मन्त्रप्रवृत्तिरिति। निर्वर्तमानमन्त्रः—"उपावरोह जातवेद" इति।

1. B. Ms1, reads आत्मसमारूढे न नियम। आपस्तम्बेनोक्तः। सत्यपि

1. B. Ms. reads अथवा

2. B. Ms. omits न wrongly

× खायाऽऽलभते इति पाठः

यदरण्योरसमारूढस्याग्निर्वर्तमान एतं मन्त्रं जपेत् ॥

इत्यष्टाविंशी कण्डिका

यदा त्वरण्योरसमारूढः तदा निर्वर्तमाने [क]पतितमात्रे अशक्यत्वात् निर्वर्तमाने जपं कर्तुम् । वर्तमानसामीप्ये वर्तमानवद्विरोधः ॥

" इदं श्रेयोऽवसानं यदागां स्योनो मे द्यावापृथिवी अभूताम् । अनमीवाः प्रदिशस्सन्तु मह्यम् । गोमद्धनवदश्ववत् पुरुषवद्धिरण्यवत्सुवीरवत्स्वाहा " इत्यवसिते जुहोति ॥ १ ॥

यदा प्रतिनिवृत्तः यदा वा वसत्यर्थं देशान्तरं गतस्तदा प्रयाणपरिसमाप्तिः । अवसितं परिसमाप्तं भवति, तत्प्रयाणम्, तदा विहृत्य "इदं श्रेयोऽवसानं यदागाम्" इति जुहोत्याहवनीये ॥ १ ॥

नानिष्ट्वाऽऽग्रयणेनाऽऽहिताग्निर्नवस्याऽश्नीयात् ॥ २ ॥

नवानामाग्रयणम् अग्रप्रापणं देवानां [ख]तदाग्रयणं कर्म । [1]तेनानिष्ट्वा नाऽत्तव्यम् । येनापि न [2]क्रियते यागः [3]प्रियङ्गुकोद्रवादिना ॥ २ ॥

व्रीहीणां यवानां श्यामाकानामित्यग्रपाकस्य यजेत ॥

क. यद्यपि निर्वर्तमानशब्दः उत्पत्तिक्षणमभिदधाति, तथापि तस्मिन् क्षणे मन्त्रपाठस्याशक्यत्वात् उत्पत्तिसमनन्तरकालमभिदधाति तत्समीपवर्तित्वादिति । अतो जातमात्रेऽग्नौ मन्त्रः पठनीय इति ।

ख. अग्रायणमिति भाष्यम् । आकारव्यत्ययश्छान्दसः ।

1. B. Ms. reads तेनानिष्ट्वा नवानां नाहर्तव्यम्. B. Ms.2 reads नाशितव्यम् ।

2. Ibid प्रियङ्गुकोद्रवादि.

3. O. Ms.2. adds उपदेशस्तु देवेभ्यो गां प्रतिकूलमयादिति यागीवस्यैव । अस्यायमर्थः—'देवेभ्यो गां प्रतिकूलामयादार्तिमार्च्छेत्' इति देवार्हद्रव्यस्यैवाशननिषेधात् तस्यानशनमुक्तमत्रेति ।

धान्यत्रयेण प्रथमपक्वेन यागः । नच [क]स्थाप्यते ॥ ३ ॥

अमावास्यायां पौर्णमास्यां वा ॥ ४ ॥

"यदा [ख]वर्षस्य तृप्तिः, अथ यजेत" इति बह्वृचानां श्रुतिः। कालश्च शरद्यथा सम्भाव्यते ॥ ४ ॥

आमावास्यं तन्त्रम् ॥ ५ ॥

[ग]मुख्यत्वादैन्द्राग्नस्य तन्त्रमामावास्यम् । अमावास्यायामेव मा भूदिति पुनर्विधिः ॥ ५ ॥

सप्तदश सामिधेन्यः ॥ ६ ॥

निर्वपणकाले आग्नेयमष्टाकपालं निर्वपति पुराणानां व्रीहीणाम्, यथा दान्तेनाऽदान्तं संयुनक्ति तादृक्तदिति विज्ञायते ॥ ७ ॥

दान्तेन बलीवर्देनादान्तं बलीवर्दं योजयतीति लिङ्गात् यत्राऽन्यानि गमकानि यथाऽ[घ]न्वायात्यमाने आग्रयणे दर्शपूर्णमासहवींषि, पुराणानां

क. व्रीहियवश्यामाकानामसमानतन्त्रं विधास्यति सूत्रकारः । अयं समानतन्त्रपक्षः । अत्र पक्षे वर्षर्तौ पक्वानामपि श्यामाकानां यावच्छरदूस्थापनं कर्तव्यम् ।

ख. वर्षस्य तृप्तिर्वर्षर्तोस्समाप्तिः । अर्थाच्छरदागमः ।

ग. ऐन्द्राग्नादीनि पञ्च हवींषि सूत्रकारो वक्ष्यति ( See आप. श्रौ. ६-२९-१० ) तत्रैन्द्राग्नस्य दर्शविकारत्वम् । इतरेषां पौर्णमासविकृतित्वम् । तत्र कस्य धर्मा अनुष्ठेया इति शङ्कायां प्रथमश्रुतस्य, अत एव मुख्यस्यैन्द्राग्नस्यैव धर्मा अनुष्ठेया इति । एवञ्च मुख्यत्वभूयस्त्वमध्ये मुख्यत्वस्यैव प्राबल्यमभिमनुते सूत्रकार इत्यवगम्यत इति । इदञ्च न्यायादेव सिध्यतीति वचनं किमर्थम् ? तत्राह–अमेत्यादि । धर्माणामामावास्यत्वेऽपि काले विकल्प एव–अमावास्यायां पौर्णमास्यां वेत्येतदर्थं पुनर्विधानमिति ।

घ. दर्शेन पूर्णमासेन वा सहाऽऽग्रयणस्य समानतन्त्रेणानुष्ठानं वक्ष्यति सूत्रकार: see (आप. श्रौ. ६, ३०,१२) तत्र दार्शिकेन पौर्णमासिकेन वा आग्नेयेनैव कार्यसिद्धेः पुनराग्रयणान्तर्गतत्वेन पुराणद्रव्यकाग्नेयो न कर्तव्य इति । अन्वायातनं समानतन्त्रेणानुष्ठानम् ।

तत्राऽग्नेयं न कुर्वन्ति। उपदेशः-आग्रयणे आग्नेयप्राप्त्यर्थोऽर्थवादः[क]। अतस्तत्रापि कर्तव्यः ॥ ७ ॥

येन यज्ञेनेर्त्सेत् कुर्यादेव तत्राऽऽग्नेयमष्टाकपालमिति विज्ञायते ॥

ईर्त्सेत् ऋद्धिमिच्छेत्। नियतां वा सिद्धिमिच्छेत्। अतः काम्यास्विष्टिषु कुर्यादेव तत्राग्नेयं मुख्यमङ्गभूतञ्च। पशुषु तु वपायाः पुरस्तादिज्या तस्य। [ख]न तु नित्येषु कामः। समृध्यर्थत्वादस्य। तेषाञ्चाकाम्यत्वात् ॥

नवानामितराणि—ऐन्द्राग्नं द्वादशकपालमाग्नेन्द्रं वा, वैश्वदेवं पयसि चरुं, सौम्यं श्यामाकं चरुं, द्यावापृथिव्यमेककपालम् ॥ पुरस्तात्सौम्यात् द्यावापृथिव्यमेके समामनन्ति।

ऐन्द्राग्नादीनि नवानाम्। "[ग]अग्नेन्द्राभ्यां जुष्टं, अग्नेन्द्रौ हव्यं रक्षेथाम् अग्नेन्द्रावावह, अपतमग्नेन्द्रौ भुवनान्नुदेताम्, अग्नेन्द्रयोरहम्, अग्नेन्द्राविदं हविः, विश्वेभ्यो देवेभ्यः, विश्वे देवा हव्यम्, विश्वान् देवानावह, विश्वेषां देवानां, विश्वे देवा इदं हविः, प्राणैस्सायुज्यम् इति परिपठितम्, सोमस्य वृत्रहा भूयासम्, द्यावापृथिवीभ्यां, द्यावापृथिवी हव्यम्, द्यावापृथिवी आवह, द्यावापृथिव्योरेति परिपठितम्, द्यावापृथिवी इदं हविः। केचित् द्यावापृथिव्याविति कुर्वन्ति ॥ ९ ॥

क. यथा दान्त इत्यादिः आग्रयणे आग्नेयप्रापक एवाऽर्थवादः। न दान्तत्वनिवृत्यादिकं तत्र फलम्। येन तस्यान्यतस्सिद्धत्वान्नाऽनुष्ठीयेताऽऽग्नेयः। अतस्तत्रापि समानतन्त्रस्थलेऽपि पुराणाग्नेय आग्रयणे कर्तव्य एवेत्युपदशमतम्।

ख. नित्येषु फलरहितेषु कर्मसु नाऽस्यानुष्ठानम्, कामसमृध्यर्थत्वात् फलसम्पादकत्वादस्य, नित्यानाञ्च फलाभावादिति। न नित्येषु कामः समृध्यर्थत्वात्तस्य इत्यपि पाठो व्याख्यातृसम्मतः।

ग. यदा विकल्पेनाऽऽग्नेन्द्रं हविः क्रियते तदा निर्वपणमन्त्रे, उपसादनमन्त्रे, आवाहननिगदे, हविरभिमर्शनमन्त्रे च याजमाने, हुतानुमन्त्रणमन्त्रे च याजमाने, सूक्तवाके हौत्रे च यथाक्रमं एवं वैश्वदेवसौम्यद्यावापृथिव्येषु ऊहेन मन्त्राः प्रयोक्तव्या इति। ऊहप्रकाशे भाष्यकारेणैव दर्शितः।

निरुप्तं हविरुपसन्नमप्रोक्षितं भवति ॥ १० ॥

निरुप्तं हविरिति व्याख्या[क]तम् ॥ १० ॥

अथ पञ्चाऽऽज्यानीर्जुहोति "शतायुधाय शतवीर्याय" इति । पुरस्ताद्वा स्विष्टकृतः ॥ ११ ॥

अज्यानीरिति नामाऽऽहुतीनाम् ॥ ११ ॥

प्रोक्षणादि कर्म प्रतिपद्यते ॥ १२ ॥

एकमुलूखलं मुसलं प्रतिबीजं वा ॥ १३ ॥

प्रतिबीजं वा द्रव्याणि [ख]भवन्ति यान्यविभवन्ति । मुसलं त्वेकम्, विभवात् । द्वे दृषदौ । उपला त्वेका । त्रीणि शूर्पाणि प्रतिबीजपक्षे । एका तु पात्री गृहत्रययुक्ता यत्र चैककपालः । भरद्वाजमतिश्च ॥ १३ ॥

सर्वेषु हविष्कृदाह्वानमन्त्रः ॥ १४ ॥

यदाऽवहननमन्त्रो हविष्कृत् तदा प्रतिबीजमावर्तते । यदा त्वाह्वानार्थः, उलूखलभेदश्च तदाऽभिन्नकालत्वादेक एव हविष्कृत् । एकस्मिन्नुलूखले कालभेदादावर्तते ॥ १४ ॥

तुषोपवपनम् ॥ १५ ॥

[ग]तुषोपवापस्तु प्रतिबीजमेव । सर्वेषां प्रतिपाद्यत्वात्, स्याद्रक्षसां तृप्तिरेकेनाऽपि । [घ]तन्त्रेण प्रतिबीजपक्षे । भेदेनैकस्मिन्नुलूखले ॥ १५ ॥

क. see आप. श्रौ. ९-१९-२

ख. यत्रैकेन कार्यं न निष्पादयितुं शक्यते तत्र भेदः पात्राणाम् । यत्र तु शक्यते तत्रैकमेवेति ।

ग. परावपनस्य तण्डुलविवेकार्थत्वात् तण्डुलस्कन्दनान्तस्य क्रियाकलापस्य प्रतिबीजमेवानुष्ठेयत्वात् तन्मध्यपतितस्य तुषोपवापस्याप्यावृत्तिः सर्वतुषाणां प्रतिपत्तिसंस्कारसंस्कार्यत्वात् । तस्यच रक्षस्तृप्तिजनकत्वेन यद्यप्येकेनापि तत्सिध्येत्, तथापि प्रतिपाद्यत्वाविशेषात् सर्वतुषाणां प्रतिपत्तिकालभेदाद्यावृत्तिरेवेति ।

घ. प्रतिबीजमनुसमय इति पक्षे सर्वेषु व्रीह्यादिष्ववहेतषु एकैकस्य तुषाभिमन्त्रणान्तं कृत्वा सर्वान्ते तन्त्रेण तुषोपवापः इति ।

## उत्तममोप्य वाचं विसृजते ॥ १६ ॥

उत्तमं बीजमोप्य यो हविष्कृत् तस्मिन् वाचं विसृजते। अर्वाग्घविष्कृतो ये पदार्थाः प्रकृतौ ते वाग्यतेन कृता इति विकृतावपि तथैव कर्तव्याः ॥ १६ ॥

## एषोऽन्येषां नानाबीजानां समवेतानां कल्पः ॥१७॥

अन्येषामपि [क]नानाबीजानामेकस्मिन् तन्त्रे समवेतानामेष विधिर्भवति। तत्र कर्म वक्ष्यामः—“वेषाय वः” इति शूर्पत्रयमादत्ते यदि शक्यते। “[ख]प्रत्युष्टम्” इत्यविकारः। सह सन्तपनम्। परमविकृतम्। बीजेभ्यो गृहीत्वा तन्त्रेण निरसनम्। निर्वापावृत्तिः। एकशूर्पस्थानां बीजभेदेऽपि सहाभिमर्शनं यदि विभवति। देवसुवादिष्वावृत्तिः। शूर्पभेदेऽप्यावृत्तिरेव। अवशिष्टाभिमर्शनं सह। सर्वमन्यत्तन्त्रेण। शूर्पभेदे प्रोक्षणावृत्तिः। यदि विभवो भेदेऽपि तन्त्रेण कृष्णाजिनादानादि तण्डुलप्रस्कन्दनान्तमेकस्मिन्नुलूखले एकस्य बीजस्य कृत्वा पुनर्हविरावपनादि तण्डुलप्रस्कन्दनान्तं सर्वमाग्नीध्रप्रैषवर्जम्। एवं प्रतिबीजं तन्त्रेणावेक्षणम् “अदब्धेन वः” इति। फलीकरणप्रैषश्च। पर्यायेण फलीकरणं प्रक्षालनं चैकीकृत्य तन्त्रेण निनयनम्। ततो विभागो “यथाभागं व्यावर्तध्वम्” इति। अभिमर्शनम् “इदमिन्द्राग्न्योः” “द्यावापृथिव्योः” इति। अग्नेन्द्रयोर्द्यावापृथिव्योरिति वा। “इदं विश्वेषां देवानाम्” इति चर्वर्थानाम्। ततः कृष्णाजिनादानादि तण्डुलाभिमन्त्रणान्तं तन्त्रेण कृत्वाऽधिवापाद्याग्नेयस्याणूकरणान्तं कृत्वा

क. राजसूये “अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाꣳ सोमाय वनस्पतये श्यामाकं चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणां, रुद्राय पशुपतये गावीधुकं चरुं बृहस्पतये वाचस्पतये नैवारं चरुमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं, महाव्रीहीणाम् मित्राय सत्यायाम्बानां चरुं, वरुणाय धर्मपतये यवमयं चरुम्” (तै. सं. १-८-१०-१) इति विहितानि देवसुवां हवींष्यष्टौ। तेषाञ्च समा तन्त्रेण प्रयोग उक्तः। तत्राप्येवमेवेति।

ख. प्रकृतावप्यग्निहोत्रहवणीशूर्पयोस्तप्यमानत्वात् एकवचनान्तस्यैव तत्रापि प्रयोगसमवेतार्थत्वात् विकृतावपि तथैवोपपत्तेः समवेतार्थानामेव विकृतावूहसिद्धान्तादिति।

पुनर्नवानां "इन्द्राग्निभ्यां जुष्टमधिवपामि" "द्यावापृथिवीभ्यां जुष्टमधिवपामि" इति । तदन्तमेव करोति । [क]चर्वोरपेषणम् । प्रतिनिर्वापपक्षे उलूखलाधिवर्तने कृते आग्नेयस्य नवानामुलूखलाधिवर्तनम् । ततः श्यामाकानाम् । नोत्सृजति सर्वाण्येव कृष्णाजिनगतानि । पर्यायेण हविरावपनम् सकृत्सृहातन मुसलेन सकृदेवावहत्य हविष्कृतं पर्यायेणावहन्ति सर्वाणि । सकृदेवाग्नीध्रप्रैष आदानं चाश्मनः । दृषद्द्वयं हत्वा सकृदुपलां उपलां हत्वा दृषद्द्वयम् । एवं सञ्चारयन् त्रिरेव मन्त्रः । प्रतिद्रव्यं वा मन्त्रावृत्तिः । [ख]तदा सप्तकृत्वः । उपोहनमुद्वपनं चैकैकस्य । तथा परावपनं प्रस्कन्दनानुमन्त्रणञ्च । सकृत्सर्वतुषाणां तन्त्रेणोपवापनम् । पर्यायेण विवेकः । प्रस्कन्दनं च पात्र्याम् । तन्त्रेणावेक्षणं प्रैषश्च । पर्यायेण फलीकरणमेकैकस्य त्रिस्त्रिः प्रक्षालनम् । निनयनं सर्वप्रक्षालनानां तन्त्रेणैकीकृत्य । विभागः पूर्ववत् । एका दीर्घा शम्या । दृषद्द्वयं तस्यां पर्यायेण । एकस्यामुपलामत्याधाय तण्डुलाभिमन्त्रणादि पिष्टप्रस्कन्दनान्तं कृत्वा उपलात्याधानाद्यपरस्यां तदन्तम् । तन्त्रेणावेक्षणं प्रैषश्च । पर्यायेण त्वगणूकरणम्, [1]उत्सर्गविरोधात् । यदा उपलाभेदोऽपि तदाग्नीध्रोऽप्युपलाद्वयमाहन्ति । पेषणे चोपलाद्वयमत्याधाय पर्यायेण तण्डुलाभिमन्त्रणम् । तन्त्रेण कृत्वाऽनुत्सृजन्नेवोपले अधिवापं पर्यायेण करोति । "प्राणाय त्वा" इत्यादि प्रस्कन्दनान्तञ्च पर्यायेण । तन्त्रेणावेक्षणं प्रैषश्च । पर्यायेण [2]त्वणूकरणमातण्डुलभावादेको भवति हन्तिपदार्थः । अणूकरणान्तश्च पेषणमित्यभेदे पात्राणामुक्तः पक्षः । संवापश्च ग्रहकद्वये । पिष्टानामुत्पवनं पर्यायेण तण्डुलानां च संवपनम् । परिप्लावनञ्च । पर्यायेण पिण्डकरणान्तम् । नवानामेव विभागो "यथाभागं व्याव-

क. प्रकृतितः प्राप्तस्य पेषणस्यात्र न करणम्, चरुत्वव्याघातापत्तेः । विशदसिद्धौदनरूपत्वाच्चरोः । पेषणे तद्व्याघातादिति ।

ख. प्रथमपर्याये दृषद्द्वये सकृन्मन्त्रः । उपलायां सकृन्मन्त्रमुक्त्वा प्रथमपर्यायं परिसमाप्य द्वितीयपर्यायारम्भं कुर्यात् । ततो द्वितीयदृषदर्थं सकृन्मन्त्रमुक्त्वा द्विरसमाहत्य प्रथमदृषदर्थं सकृदुक्त्वा चतुर्थमाहननम् । ततो द्वितीयदृषदर्थं सकृन्मन्त्रमुक्त्वा द्विरसमाहत्योपलार्थं सकृदुक्त्वा सप्ताहननम् । एवं मन्त्रः सप्तकृत्वो भवति ।

1. B. Ms. reads उत्सर्गाविरोधाद्वा उपलभेदोऽपि.
2. Ibid, अणूकरणं.

तैंथाम्" इति । अभिमर्शनम् "इदमिन्द्राग्न्योः" "इदं द्यावापृथिव्योः" इति । कृत्वाऽङ्गारापोहनम् । "घर्मोऽसि" इत्यधिश्रयणम्, चरुपुरोडाशानां क्रमेण । चरूणां प्रथनश्लक्ष्णीकरणपरितपनाभिज्वालनाध्यूहनानि न क्रियन्ते । सर्वमन्यत् । [1]केचित् "उरु प्रथस्व" इति विक्लेदनात् प्रथन्ते तण्डुला इति । "आर्द्रो भुवनस्य गोपा" इत्युद्वास्य, न प्रतिष्ठापनं पात्र्याम् । "[2]आर्द्रः प्रथस्नुः" इति केचित् । उपदेशो यत्र पुरोडाशग्रहणं न तच्चरोः क्रियत इति ॥ १७ ॥

अलङ्करणकाले आज्येनैककपालमभिपूरयति ॥१८॥

आविःपृष्ठं वा कृत्वाऽऽसादयति ॥ १९ ॥

आविःपृष्ठः प्रकाशपृष्ठः, न पूर्यते वा सर्वम् ॥ १९ ॥

प्रचरणकाले उद्धृत्य बर्हिषदं कृत्वा जुह्वामुपस्तीर्याधायाऽऽशयमन्वानीयाऽभिघार्योपांशु प्रचरति ॥ २० ॥

इत्येकोनत्रिंशी कण्डिका

उद्धृत्य पात्र्या आधाय स्रुचि । आशयो येन पूर्यते घृतेन तत् क्षिप्यते । [क]पश्चाद्विरभिघारणम् । सकृदुपदेशः, आशयेन चतुरवत्तस्य पूरितत्वात् ॥ २० ॥

सर्वहुतमपर्यावर्तयन्नृजुं प्रतिष्ठितं न हस्तेन जुहुयात् ॥ १ ॥

अपर्यावर्तयन् हुतमहुतञ्च । ऋजुस्समः । प्रतिष्ठितो यथा न चलति तथा होतव्यम् । वक्रोऽप्यचलः न प्रतिष्ठितो भवति । अत ऋजुरित्युच्यते । समं स्रुचा होतुमशक्यमिति जुहुयाद्धस्तेन । अतः प्रतिषेधः ॥ १ ॥

क. द्विरभिघारणं चतुरवत्ततासिध्यर्थम् । पुरोडाशस्य सकृदवत्तत्वात् । सकृदुपस्तरणं, सकृत्पुरोडाशादवदानं, द्विरभिघारणमिति । रुद्रदत्तस्तु—द्विरभिघारणपक्षं खण्डयति ।

1. O. B. Mss. omit from केचित् to तण्डुला इति

2. O. Ms. omits आर्द्रः प्रथस्नुरिति केचित्

यदि हुतः पर्यावर्तेत स्रुचोऽग्रेण कल्पयेत् ॥ २ ॥

हुतस्य पर्यावृत्तस्य स्रुचोऽग्रेण कल्पनं प्रायश्चित्तम् । अहुतस्य "यद्येककपालः स्कन्देत्" इत्येतत् ॥ २ ॥

न पाणिना ॥ ३ ॥

वरे दत्ते कल्पयितव्यः ॥ ४ ॥

आधायाऽभिघार्य पुनर्होतव्य इत्येके ॥ ५ ॥

आधाय वा स्रुचि पर्यावृत्तमभिघार्य पुनरनुब्रूहीत्येवमादि होमः ॥५॥

अपि वा नैककपालं कुर्वीताऽऽज्येन द्यावापृथिवी यजेत ॥ ६ ॥

यदाप्याज्येन द्यावापृथिवी तदापि हुतानुमन्त्रणं परिपठितमेव । न प्राकृतहविरपेक्षं वैकृतीनाम् ॥ ६ ॥

ये प्राचीनमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति । वासः श्यामाके ॥ ७ ॥

प्राचीनं पूर्वमेकाष्टकायाः प्रवृत्ते व्रीह्याग्रयणे ये वत्सा जायन्तेऽन्यस्मिन्नपि संवत्सरे तेषां प्रथमजो देयः । उपदेशो–यवाग्रयणे प्रवृत्ते ये वत्सा जायन्ते ते प्राचीनमेकाष्टकाया भवन्तीति । तदा त्वेकाष्टकाग्रहणमनर्थकमिति । पूर्वं व्रीह्याग्रयणादित्येव वक्तव्यम् । श्यामाकदक्षिणां वासो ददामीति सङ्कल्पः । ब्राह्मणा इमे वो वत्सवाससी इति । उपदेशः–ब्राह्मणाः, प्रथमजं वत्सं ददामीति । वासः श्यामाकाय वो ददामीति ॥ ७ ॥

"भद्रान्नः श्रेयस्समनैष्ट देवा" इति यजमानभागं प्राश्नाति ॥ ८ ॥

सर्वेषां वा भक्षाणां मन्त्रवतां प्रत्याम्नायस्स्यात् ॥

सर्वेषामृत्विजां [1]भक्षणेऽयं मन्त्रः । न तु समुच्चयेन । प्रत्याम्नाय एव स्यात्, न त्वमन्त्रकाणाम् ॥ ९ ॥

"अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः करोतु विश्वचर्षणीः" इति श्यामाकानाम् ॥ १० ॥

सिद्धामिष्टिस्सन्तिष्ठते ॥ ११ ॥

श्यामाकानां [2]यजमानभागभक्षणमन्त्रः "अग्निः प्रथमः" इति । तथैव वा सर्वेषां प्रत्याम्नायः । तदा सहोपहूतायामिडायां प्राशित्रं परिहृतं पृथक् भक्ष्यते । मार्जनं तु तन्त्रेण ॥ ११ ॥

अपि वाऽमावास्यायां पौर्णमास्यां वाऽऽग्रयणेष्टि-मन्वायातयेत् ॥ १२ ॥

अन्वायातनमनुप्रवेशः । सह प्रयोगो दर्शपूर्णमासाभ्याम् । तदा दर्शपूर्णमासयोस्तन्त्रं नाऽऽग्रयणस्य । दक्षिणाश्च [3]तत्रानुप्रवेशयेदिति । सूत्रकारान्तरमताच्च । आगन्तुत्वादाग्रयणस्याविरुद्धा अङ्गान्यः क्रियन्ते । मीमांसकानामाग्रयणस्य प्राधान्यमिति नित्यस्य प्रयोगः । [क]विगुणसगुण-साध्या तु प्रकृतिरिति तत्र [4]तस्य सर्वतन्त्रत्वमिति । आग्रयणेन यक्ष्य इति सङ्कल्पं कृत्वा आग्रयणं प्रकृतिकाले यदा न शक्यते सम्पादयितुं

क. प्रकृतेर्नित्यत्वेन तस्या यथाशक्तिप्रयोगसाध्यतया सगुणविगुणसाध्यत्वात् आग्रयणस्य सगुणैकसाध्यत्वेन तत्र सर्वाङ्गोपसंहारस्य कर्तव्यत्वेन तदनुसारेणैव धर्मानुष्ठानमिति मीमांसकमतमिति ।

1. B. Ms. reads भक्षाणामयमेव मन्त्रः; O. Ms. reads भक्षाणामयं मन्त्रः
2. O. Ms. reads यजमानभागप्राशनमन्त्रः
3. B. Ms. reads तन्त्रानुप्रवेशात्.
4. Ibid, तस्य सर्वं तन्त्रम्.

तदाऽन्वायातनमिति [क]न्यायः । अन्वायात्यानामनावाहनमुपदेशः । आवाहनं वा, यस्मादेतानि सह प्रवर्तन्ते न तन्त्रमध्ये। यथा-[ख]देविका-देवसुवादिवाजिनवैश्वानरादयः ॥

आपि वाऽमावास्यां पौर्णमासीं वा नवैर्यजेत ॥१३॥

आपि वाऽग्निहोत्रीं व्रीहिस्तम्बं यवस्तम्बं वा ग्रासयित्वा तस्याः पयसा सायं प्रातर्जुहुयात् ॥ १४ ॥

अपि वा नवानां यवाग्वा सायं प्रातर्जुहुयात् ॥१५॥

[1]नवैर्यागादय आग्रयणे विकल्पाः, स्श्यामाकस्य स्थाने [2]एते। एतेषु श्यामाकाग्रयणस्य लोपः। व्रीहिस्तम्बं यवस्तम्बं वेति [3]नियमात्, स्विष्टकृच्चतुर्थाभ्य इति च। केचिद्विनिवेशं कुर्वन्ति। यदा दर्शपूर्णमासाभ्यां संवत्सरं तदैकं पर्व नवैर्यजेत। [ग]वैमृधेऽपि नवैरित्युपदेशः। यदा संवत्सरमग्निहोत्रं नाऽन्यत्कर्म, तदाऽग्निहोत्रधेनुं व्रीहिकाले व्रीहिस्तम्बं ग्रास्यते, यवकाले यवस्तम्बम्। तस्याः पयसाऽग्निहोत्रहोमः। [4]नवयवाग्वा वा ॥ १५ ॥

क. आग्रयणस्य त्र्यहकालत्वपक्षे चतुर्दश्यामन्वाधाने कृते पञ्चदश्यामनुष्ठातुमशक्तस्य प्रतिपदि प्रकृत्या सह प्रयोगः। अथवा पञ्चदश्यामेव सद्यस्कालमाग्रयणं कर्तुं सङ्कल्पितस्याऽनुष्ठातुमशक्यस्याऽन्वायातनम्। न तु पृथक्प्रयोगसहप्रयोगयोस्तुल्यविकल्प इति।

ख. अनूबन्ध्यायाः पशुपुरोडाश(मनु)देविकाहवींषि निर्वपति, धात्रे पुरोडाशं द्वादशकपालमिति पञ्च (आप. श्रौ. १३-२९-१-२) इति विहितानि देविकाहवींषि। वाजिनवैश्वानरौ प्रसिद्धौ। यथा एतेषां तन्त्रमध्यपाताभावादावाहनादीनां पृथगनुष्ठानं तद्वदत्राऽपीति।

ग. अपि वाऽमावास्यामित्यनेन प्रयोगविशेषस्यैव विध्यवगतेः साङ्गप्रधानविषयत्वात् प्रयोगस्याङ्गभूते वैमृधेऽपि नवानां प्रवृत्तिरिति उपदेशमतमिति।

1. B. Ms. reads नवैर्याग आग्नेयविकल्पाः
2. B. Ms. omits एते.
3. B. Ms. adds द्वयोः before नियमात्.
4. B. Ms. reads नवैर्यवाग्वा वा.

अपि वा नवानां गार्हपत्ये स्थालीपाकं श्रपयित्वाऽऽहवनीये जुहुयादाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थाभ्यः ॥ १६ ॥

दर्शपूर्णमासविरमणे स्थालीपाकहोमः। श्यामाकदेवता परित्यज्यते [1]'स्विष्टकृच्चतुर्थाभ्य'[क] इति ॥ १६ ॥

अपि वा नवानां चतुश्शरावमोदनं पक्त्वा चतुरो ब्राह्मणान् भोजयेत् ॥ १७ ॥

[ख]उत्सर्गेऽग्निहोत्रस्य चतुश्शरावो लौकिकेऽग्नौ। अग्निहोत्रसंस्तवात् [ग]व्रतस्य, संवत्सरदीक्षायां तत्रापि व्रीहिस्तम्बं यवस्तम्बं वाऽऽशिताश्याः पयो व्रतयेत्। यस्य यो विधिस्सम्भवति स तस्य नियम्यते।

क. स्विष्टकृद्देवता चतुर्थी यासां ताः स्विष्टकृच्चतुर्थाः। इन्द्राग्नी, विश्वे देवाः, द्यावापृथिव्यौ इति तिस्रः। चतुर्थी स्विष्टकृद्देवता। एवञ्च स्विष्टकृच्चतुर्थाभ्य इति सूत्रकारवचनात् श्यामाकदेवतायाः सोमस्य परित्याग इति।

ख. 'त्रयोदशरात्रमहतवासा यजमानः स्वयमग्निहोत्रं जुहुयादप्रवसन्, अत्रैव सोमेन पशुना वेष्ट्वाऽऽग्नीनुत्सृजति' (आप. श्रौ. ९-२३-३) इत्यग्नीनामग्निहोत्रस्य चोत्सर्गो विहितः। एवं 'जीर्णो वा विरमेत्' इत्यत्यन्तं वृद्धस्याग्निपरित्यागो विहितः। एवमन्येषु केषु च निमित्तेषु संवत्सरं पराध्यमुत्सृष्टाग्निर्भवति' (आप. श्रौ. ९-२७-४) इत्युत्सर्गो विहितः। स इह गृह्यते।

ग. सोमयागदीक्षामध्ये "नाग्निहोत्रं (जुहोति)" (आप. श्रौ. १०-१४-४) इत्यग्निहोत्रस्य निषेधः कृतः। परन्तु यजमानदीक्षामध्ये क्रियमाणस्य पयआदिव्रतस्याग्निहोत्रस्थानीयत्वं संस्तुतम्—' न त्वेव न व्रतयेदग्निहोत्रस्याविच्छेदाय ' (आप. श्रौ. १०-१६-११) इति। सोमयागे च त्रिरात्रप्रभृति संवत्सरपर्यन्ता बहवो दीक्षापक्षा उक्ताः। एवञ्च यदि कश्चित्संवत्सरदीक्षापक्षं स्वीकरोति, तदा तस्य शरदि आग्रयणप्राप्तेस्तस्य च निषेधात् तदा व्रीहिस्तम्बं यवस्तम्बं वा गां खादयित्वा तस्याः पयसा व्रतं कुर्यात्, तेन तत्सिद्धिरिति। अन्यत्रापि चातुर्मास्येषु पञ्चसांवत्सरिकेषु (पञ्चसांवत्सरिकाणि व्याख्यास्यामः (आप. श्रौ. ८-२२-९) इत्यादिना पञ्चसंवत्सरकालानुष्ठानपक्षः कश्चिदाम्नातश्चातुर्मास्यानां तेषु), स्वतन्त्राग्रयणासम्भवाच्चातुर्मास्यैरन्वायातनम् इति।

1. Ibid, स्विष्टकृद्देवताभ्य इति

येन [क]त्वन्वारम्भणीया कृता [1]स्याद्विकृतावपि तस्य आग्रयणेष्टिः, स पक्षस्तेन सङ्कल्पित इति ॥ १७ ॥

एवं यवैर्यजेत ॥ १८ ॥

तत्राऽऽग्नेयश्यामाकौ न भवतः । य ऊर्ध्वमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति । "एतमुत्यं मधुना संयुतं यवम् । सरस्वत्या अधिमनावचर्कृषुः । इन्द्र आसीत्सीरपतिश्शतक्रतुः । कीनाशा आसन् मरुतस्सुदानवः" इति यजमानभागं प्राश्नाति । सर्वेषां वा भक्षाणां मन्त्रवतां प्रत्याम्नायस्स्यात् ॥ १९ ॥

इति त्रिंशी कण्डिका

ऊर्ध्वं वृत्तायामेकाष्टकायां ये जायन्ते तेषां प्रथमजो देयः ॥

यदि नानातन्त्रां श्यामाकेष्टिं कुर्वीत "श्यामाकानुद्धर्तवा" इति सम्प्रेष्यति ॥ १ ॥

नानातन्त्रा यदि क्रियते वर्षासु श्यामाकैरिति तदा प्रैषः श्यामकस्येति ॥ १ ॥

तस्यास्सप्तदश सामिधेन्यः ॥ २ ॥

साप्तदश्यस्य पुनर्विधानान्नाज्यानीरित्युपदेशः ॥ २ ॥

क. अन्वारम्भणीया विकृतौ न स्यात् (आप. श्रौ. (परि १. ४. १९.) २४-४-१९) इति सूत्रकारेण विकृतावन्वारम्भणीयाया अनुष्ठानपक्ष उक्तः । तस्येदम कूतम्—इष्टिरियं कर्तृसंस्कारिका। कर्ता च यावज्जीवमेक एवेति सकृत्कृतयान्वारम्भणीयया यावज्जीवकस्संस्कारो यजमान उत्पद्यते । तेन च सर्वेषां दर्शपूर्णमासानामुपकार इति जीवनमध्यपतितानां विकृतीनामपि तेनैवोपकारस्सिद्धो भवतीति न विकृतिषु पुनस्तस्या अनुष्ठानावश्यकतेति। तस्मिन्नाग्रयणेष्टिरेव केवला तेनानुष्ठेयेति ।

1. O. Ms. reads आग्रयणार्थं स्यात्

सद्वन्तावाज्यभागौ । विराजौ संयाज्ये ॥ ३ ॥

"त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वते ॥ "सोम यास्ते मयोभुवः" इति सद्वन्तौ । "प्रेद्धो अग्ने" "इमो अग्ने" इति विराजौ ॥ ४ ॥

सच्छब्दो ययोर्विद्यते त सद्वन्तौ । त्रिपात्वाद्विराजौ ॥

वासो वा दक्षिणा दधिमन्थो मधुमन्थो मधुपर्को मधुगुन्थो बभ्रुर्वा पिङ्गलः ॥ सिद्धमिष्टिस्सन्तिष्ठते ॥ ५ ॥

सोमस्याऽग्नीषोमविकारत्वात् पौर्णमासं तन्त्रम् । समानतन्त्रस्य वा । [1]स एवेत्युपदेशः । तस्य विकल्पान् वक्ष्यामीति पुनर्वासोविधानम् । अमथितोऽपि सक्तुर्मन्थः यो न मिश्रित आज्येन । मधुशर्करा [क]मधुगुन्थः । "वाचेऽन्नम्" इति प्रतिग्रहमन्त्रः । बभ्रुः कपिला [2]पिङ्गला गौः ॥

हरितयवशाकशमीधान्यानां नवानां फलानामनिष्टेऽपि प्राशने याथाकामी ॥ ६ ॥

[ख]हरितयवाः प्रदर्शनम्, गोधूमा अप्यपक्वाः । शाकादि च [3]नवम् । शमीधान्यानि कोशीधान्यानि चणकादीनि । नवानां फलानामनिष्टेऽप्याग्रयणे यथाकामी स्यात् भक्षयति चैतानि न वा । यत्तु धान्यं नवं येनाप्यनिज्या तदपि न भक्षयति ॥ ६ ॥

वेणुयवानामिष्टिमेके समामनन्ति ॥ ७ ॥

वेणुयवैरनित्यो यागः ॥ ७ ॥

क. अनिश्च्योतितमधुर्मधुकोशो मधुगुन्थ इति रुद्रदत्तः ।

ख. रुद्रदत्त says हरितयवा नाम तृणविशेषाः ।

1. B. Ms. 2 reads एव एव
2. B. Ms. reads पिङ्गलाक्षी गौः
3. B. Ms. reads नवान्नम् ।

वेणुयवेषु पक्वेषु "वेणुयवानुद्धर्तवा" इति सम्प्रेष्याति॥

तस्या एतदेव तन्त्रमेषा देवता ॥ ९ ॥

आग्नेयी मैत्रावरुणी प्राजापत्या वा ॥ १० ॥

एतत्तन्त्रं यच्छयामाकष्ट्याम् । सोमो देवता अग्न्यादयो वा ॥

सप्रत्नवदिति द्वे धाय्ये चतस्र आज्यभागयोर्दशहविषां द्वे स्विष्टकृतः ॥ ११ ॥

हौत्रविधिः–[क]सप्रत्नवदिति त्रिवाक्ये द्वे धाय्ये । चतुस्रस्त्रिवाक्या आज्यभागयोः ऋग्याज्यात्वे । जुषाणयाज्यात्वमुपदेशः । अग्नेस्सोमस्य चैकैका व्रीहिषु । यवेषु चापरे अनुवाक्ये । " नवस्य सोमत " इति त्रिवाक्या पुरोनुवाक्या । " नवꣳहविः " इति चतुष्पदा याज्या श्यामाकस्य । " नवꣳस्तोमं " " शुचिन्नु स्तोमम् " इत्यैन्द्राग्नस्य । " अग्निरिन्द्रो नवस्य नः " " यज्ञं न आ हि गच्छताम् " इत्याग्नेन्द्रस्य । " विश्वान् देवाꣳस्तर्पयत " " एदं बर्हिः " इति वैश्वदेवस्य । " इमे नु द्यावापृथिवी " " इमे धेनू " इति द्यावापृथिव्योः । " यविष्ठो हव्यवाहनः " " त्वमग्ने देवताभ्यः " इति स्विष्टकृतः ॥ ११ ॥

क. तैत्तिरीयब्राह्मणे द्वितीयाष्टके चतुर्थप्रश्नेऽष्टमेऽनुवाके " स प्रत्नवत् " इत्याद्या एकविंशतिः ऋच आम्नाताः । तत्र काश्चन त्रिवाक्या (वाक्यत्रययुक्ताः) काश्चन चतुर्वाक्याः । तासामनेन सूत्रेणाग्रयण हौत्रे विनियोगः क्रियते । तत्र प्रथमद्वितीययोः सप्रत्नवत्, नवीयसा, नवं नु स्तोममग्नये इति त्रिवाक्यमृग्द्वयं धाय्यात्वेन विनियुज्यते । ततः चतस्रस्त्रिवाक्या ऋचः–"स्वारुहा यस्य" "अदाभ्यः पुर एता" "नवꣳसोमाय" "नवꣳसोम जुषस्व" इत्याज्यभागयोः । तत्र प्रथमद्वयमाग्नेये आज्यभागे, द्वितीयद्वयं सौम्ये । "जुषाणो अग्निराज्यस्य वेतु "जुषाणस्सोम आज्यस्य हविषो वेतु" इत्येवाज्यभागयोर्याज्या भवितुमर्हति इत्युपदेशमतम् । तदा व्रीह्याग्रयणे चैकाऽनुवाक्याऽऽग्नेयी । यवेषु चैका । एवं व्रीह्याग्रयणे चैका सौमी यवाग्रयणे चैका सौमी इति चतसृणामपि पुरोनुवाक्यात्वेन विनियोगः । याज्या तु जुषाणपदघटिता पूर्वमुक्तैव । "नवस्य सौम ते" इत्याद्यास्तदनुवाकस्था एव यथाक्रमं विनियुज्यन्ते ॥

व्रीहिभिरिष्ट्वा व्रीहिभिर्यजेताऽऽयवेभ्यो दर्शपूर्णमासौ एवं यवैराव्रीहिभ्यः । अपि वा व्रीहिभिरेवोभयत्रैते ह वै सूपचरतमा भवन्तीति बह्वृचब्राह्मणम् ॥ १२ ॥

व्रीहियवनियमो दर्शपूर्णमासयोरेव, नाग्निहोत्रस्य यदि तण्डुलैर्हूयते व्रीहिभिरिष्ट्वा । व्रीहीन् यवान्वेति तत्र पुनर्वचनात् दर्शपूर्णमासविकारेष्वनियम इत्युपदेशः । सुखोपचारा व्रीहयः । यवा दुःखोपचाराः, कण्डनं पेषणञ्च दुःखेन ॥ १२ ॥

वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिः, वसन्ते यवैः, यथर्तु वेणुयवैरिति विज्ञायते इति विज्ञायते ॥ १३ ॥

इत्येकत्रिंशी कण्डिका

यथर्तु यस्मिन् काले प्रजायन्ते वेणुयवाः स एषामृतुः । आग्रयणेन यक्ष्ये स्वर्गं [क]लोकमवाप्नवानीति सङ्कल्पः आदौ मीमांसकमत्या । यत्र नाम्नातः कामः न तत्र कामयितव्य इत्युपदेशः । अकामनं वा नित्येषु अकामहतश्रुतेः ॥ १३ ॥

इत्याग्रयणेष्टिस्समाप्ता ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये षष्ठप्रश्ने

अष्टमः पटलः । समाप्तश्च षष्ठः प्रश्नः ॥

क. आग्रयणे फलाश्रवणेऽपि स्वर्गः फलतया कल्प्यते । अश्रुतफलस्थले विश्वजिन्न्यायेन स्वर्गफलकल्पनाया मीमांसकसिद्धान्तात् । तस्य च सङ्कल्पे उल्लेखः करणीय एव । कर्मण्यपि फलेच्छायां सत्यामेव फलोत्पत्ते रुक्तत्वात् इति । उपदेशमतं तु—यत्र फलं न श्रूयते न तत्र कामना । नित्यत्वस्यापि सम्भवात् । नित्ये च फलाभावादिति । नित्येषु पक्षे सत्यपि फले न तस्य कामना युक्ता । "श्रोत्रियस्य चाकामहतस्य" (तै. उ. २. ८. २) इति मुमुक्षोः कामनिषेधश्रवणादिति ॥

॥ श्रीः ॥

# आपस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृते

## सप्तमः प्रश्नः

**सर्वान् लोकान् पशुबन्धयाज्यभिजयति ॥ १ ॥**

पशुर्बध्यते यज्ञार्थं यस्मिन् कर्माणि स पशुबन्धः। तेन इष्टवान् पशुबन्धयाजी सर्वान् लोकानभिजयति। नास्य लोकेषु प्रतिघातो भवति। न चान्यकर्मानर्थक्यम्। अन्यैः कर्मभिरन्यथालक्षणस्य सुखस्याऽवाप्तेः[क]। पशुबन्धेन यक्ष्ये, सर्वान् [1]लोकानभिजयानीति सङ्कल्पः ॥१॥

**तेन यक्ष्यमाणोऽमावास्यायां पौर्णमास्यां वा षड्ढोतारं मनसाऽनुद्रुत्याऽऽहवनीये सग्रहं जुहोति "सूर्यं ते चक्षुः" इति ॥ २ ॥**

[ख]प्रातर्दोहविकारत्वात् पशुबन्धस्य मा [2]भूदमावास्यैवेत्युभयकालविधिः। कृते सङ्कल्पे यक्ष्य इति कामे [3]चोक्तेऽपामुपस्पर्शनं विहरणम्।

क. तदेतत्पूर्वमीमांसायामर्थवादाधिकरणे 'अन्यानर्थक्यात्' इति सूत्रे "पशुबन्धयाजी सर्वान् लोकानभिजयति" इत्युदाहृत्य यदि पशुबन्धेनैव सर्वलोकप्राप्तिः तर्हि उत्तरकर्मणां ज्योतिष्टोमराजसूयादीनां स्वर्गादिरूपतत्तत्फलविशेषोद्देशेन विधीयमानानामानर्थक्यमापद्येत, तेषां फलानां पशुबन्धेनैव सिद्धेः 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्' इति न्यायादित्याशङ्क्य—'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः' फलविशेषः स्यात् यद्यप्यविशेषेण फलं श्रुतम्, तथापि लोके यथा कर्मगतगौरवलाघवानुरोधेन फलतारतम्यम्, तद्वदेव वेदेऽपि स्यात्। अर्थात्-महतः कर्मणो महत्फलम्, अल्पस्याल्पमिति। एवञ्च पशुबन्धजन्यं स्वर्गादिफलं देशतः कालतश्चाल्पं भवेत्, ज्योतिष्टोमादिजन्यञ्च तन्महद्भवेदिति सिद्धान्तितम्। यथाह च वार्तिककारः—'कर्मणामल्पमहतां फलानां च समोचरः। विभागः स्थानसामान्यादविशेषेऽपि चोदिते''। इति तदेवात्राभिसंहितम्।

ख. प्रातर्दोहः पयः। तद्विकारत्वं तद्विकृतित्वम्। पशुयागस्य पयोयागविकारत्वं पूर्वमीमांसायामष्टमाध्याये 'पयो वा कालसामान्यात्' (जै. मू. ८-२-१६) इत्यनेनोक्तम्।

1. O. Ms. Reads अभिजीयासम्
2. Ad omits एव
3. Ibid, उक्ते

[क]षड्ढोता मनसा सर्वो हूयते "पशुबन्धेन यक्ष्यमाणः षड्ढोतारं मनसानुद्रुत्याहवनीये जुहुयात्" इति । आहवनीयग्रहणं षड्ढोतुराहवनीयः पृथग्यथा स्यात् । मा [1]भूत्प्रधानार्थे आहवनीय इति । ग्रह [ख]उपांश्वित्युपदेशः । सर्वत्र चैव [2][ग]षड्ढोतुर्द्वित्वात् "सूर्यं ते चक्षुः" इतिं नियमः ॥२॥

**आग्नावैष्णवमेकादशकपालं निर्वपति । अग्न्यन्वाधानस्य प्रत्याम्नायो भवति । सिद्धमिष्टिस्सन्तिष्ठते । धारयत्याहवनीयम् ॥ ३ ॥**

परित्यज्याऽग्निमन्यं प्रणीय [3]आग्नावैष्णवं ब्राह्मणभोजनान्तम् । न तु दक्षिणा, [घ]प्रधानानुवर्तित्वात् । तस्य [4]धारण[ङ]विधानादाहवनीयस्य पुरस्ताद्वर्तिनो ये दर्विहोमास्तेषां पृथगग्निरिति [5]ज्ञापकम् । अन्वाधानार्थत्वादिष्टेः, तदनन्तरं शाखाहरणं व्रतोपायनं [6]यजमानस्याशनञ्च, यदि न [च]सद्यस्कालः पशुः ॥ ३ ॥

क. षड्ढोता पूर्वं निरूपितः

ख. श्रुतौ षड्ढोतुरेव मनसाऽनुद्रवस्योक्तत्वात् ग्रहस्योपांशुत्वं याजुर्वेदिकत्वात् प्राप्नोतीत्युपदेशमतमिति ।

ग. आरण्यके होतृप्रकरणे षड्ढोतृमन्त्रद्वयं पठ्यते—" सूर्यं ते चक्षुः वातं प्राणः द्यां पृष्ठम् । अन्तरिक्षनमात्मा । अङ्गैर्यज्ञम् । पृथिवीꣳ शरीरैः (तै. आ. ३-३-१) इत्येकम् । वाग्घोता । दीक्षा पत्नी । वातोऽध्वर्युः । आपोऽभिगरः । मनो हविः । तपसि जुहोमि । इत्यपरः । तत्र द्वयोर्मध्येऽत्र पशुबन्धे प्रथमस्यैव प्रयोग इति नियमः ।

घ. यथा सोमेष्टिषु आग्नावैष्णवादिषु न पृथग्दक्षिणा दीयते प्रधानसोमदक्षिणयैव तास्वपि प्रसङ्गादुपकारसिद्धेः । तद्वदत्रापि प्रधानदक्षिणयैवोपकारसिद्धेर्न पृथग्दक्षिणादानमङ्गेष्विति ।

ङ. एतदिष्ट्यन्ते 'धारयत्याहवनीयम् इति आहवनीयधारणं विधीयते । तन्न वक्तव्यम्, इष्टेरन्वाधानप्रत्याम्नानविधानादेवोत्तरकर्मार्थं धारणसिद्धेः । अतस्स विधिर्व्यर्थस्सन् एतद् ज्ञापयति--आहवनीयोत्पत्तेः पूर्वतनानां सम्भारयजुस्सावित्रहोमाद्यर्थाग्नीनां तत्तत्कर्मान्ते त्याग ईति । अतो होतॄणामपि पृथगाहवनीयस्सिध्यतीति ।

च. सद्यस्कालपक्षे तु नात्र भोजनम्, कर्ममध्ये भोजनस्य भरद्वाजेन निषिद्धत्वादिति ।

1. Ad of O. Ms. read प्रधानार्थ for प्रधानार्थे
2. Ibid, षड्ढोतृद्वित्वात्
3. Ad omits आग्नावैष्णवम्
4. Ad reads धारणविधानमाहवनीयस्य
5. Ad reads ज्ञापनं for ज्ञापकं
6. Ad omits यजमानस्याशनम्

"[१]उरु विष्णो विक्रमस्व" इति स्रुवेणाऽऽहवनीये यूपाहुतिं जुहोति ॥ ४ ॥

स्रुचा वा चतुर्गृहीतेन ॥ ५ ॥

ततो यूपाहुतिः 'स्रुवेणाहवनीयमिति [1]वचनात्। यदा यूपसकाशे तदा न [क]स्रुवेण। स्रुचा [2]चतुर्गृहीतेनैव। यूपाहुतिरिति [3]समाख्यानाद्यत्र यूपस्य न छेद परिध्यादेः तत्रास्य [ख]लोपः ॥ ५ ॥

न दीक्षितस्य जुहुयात्। वैष्णवीमृचमनूच्याच्छेत्यः ॥ ६ ॥

न दीक्षितस्य हूयते यूपाहुतिः। तस्य यूपाहुतिमन्त्रमुक्त्वाऽच्छेत्यः आभिमुख्येन गन्तव्यो यूपः। यूपावासये वा गन्तव्यमित्यर्थः ॥ ६ ॥

जुहुयाद्वा। यूपसकाशे वाऽग्निं मथित्वा तस्मिन् जुहुयात् ॥ ७ ॥

लौकिकारण्योर्मथनम् ॥ ७ ॥

स्रुवमाज्यशेषञ्चाऽध्वर्युरादत्ते तक्षा शस्त्रम् ॥ ८ ॥

क. होमत्वादेवाहवनीये सिद्धे पुनराहवनीयग्रहणात् अस्मिन्नेव होमे स्रुवाहवनीययोः परस्परनियमः। अतो दीक्षितस्य यूपसकाशेऽग्निं मथित्वा तस्मिन् जुहुयादिति उत्तरत्र विधास्यति। तत्पक्षे न स्रुवप्राप्तिः, किन्तु स्रुचैव होम इति।

ख. पाशुकचातुर्मास्येषु "परिधौ पशुं नियुञ्जीत" इति पशुनियोजनार्थं यूपस्थाने परिधिर्विहितः। तत्र यूपार्थं छेदनाभावात् न यूपाहुतिरिति।

१. उरु विष्णोविक्रमस्वोरु क्षयाय नस्कृधि।
घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर ॥ तै. सं. १-३.

1. Ad omits वचनात्

2. B. Ms2. omits एवा.

3. Ad. Ms. reads यत्र नस्वाच्छेदनं परिध्यादे

स्रुवस्याऽऽदानादाव्रश्चनहोमोऽपि [क]स्रुवेणैव । अन्येनानीतया [1]जुह्वा होम इत्युपदेशः । तक्षा कुट्टकः, शस्त्रं वाशी तामादत्ते [2]हस्तेन वाश्येति लिङ्गात् ॥ ८ ॥

यत्र यूपस्तद्यन्ति ॥ ९ ॥

[ख]यजमानो ब्रह्मा च ॥ ९ ॥

यूप्या वृक्षाः पलाशखदिरबिल्वरौहितकाः ॥ १० ॥

यूप्या यूपार्हाः । रोहितको वटाकृतिः ह्रस्वपर्णः ॥ १० ॥

पालाशं तेजस्कामो यज्ञकामो वा । खादिरं स्वर्गकामो वीर्यकामो वा । बैल्वमन्नाद्यकामो ब्रह्मवर्चसकामो वा । रौहीतकं प्रजाकामश्चक्षुष्कामो वा ॥ ११ ॥

नित्येषु कामाः पक्षे ॥ ११ ॥

समे जातमशाखाजं बहुपर्णशाखमप्रतिशुष्काग्रमशुषिरमव्यावृत्तमघूर्णमृजुमूर्ध्वमूर्ध्वशकलमग्र ईषदुपावनतं प्रागुदक् प्रत्यग्वोपनतम् ॥ १२ ॥

शाखा न [ग]क्रियते यूपः । बहुपर्णश्च बहुशाखश्च अव्यावृत्तः अवलितः, अघूर्णः घुणैरभक्षितः, ऋजुः अवक्रः, ऊर्ध्वश्च अनूर्ध्वोऽपि कश्चिद्भवत्यृजुः । शकलान्यप्यस्योर्ध्वानि न वलितानि । अग्रे ईषदुपावनतः ईषत्प्रह्वः । दक्षिणावनतो नेष्यते ॥ १२ ॥

क. सूत्रे स्रुवस्यादानं विहितम् । तेन दृष्टार्थेन भाव्यम् । अतश्चाग्रे "वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोति" इति विधीयमान आव्रश्चनाधिकरणको होमः स्रुवेणैव कर्तव्यः । तदर्थमेव च सूत्रकारेण स्रुवादानं विहितमिति ।

ख. यत्र बहुवचनश्रवणं तत्र यजमानो ब्रह्मा चाऽध्वर्योस्सहायभूतौ भवतः । कर्मणि वाचं यच्छती' ति ब्रह्मणोऽपि सर्वकर्मस्वन्वयदर्शनादिति । (आप. श्रौ. ३-१२-६)

ग. भूमेस्साक्षात्प्ररूढस्यैव वृक्षस्तम्बस्य यूपत्वसम्पादनं न शाखाया इति ।

1. B. Ms. adds जुह्वैवा
2. B. Ms. adds तक्षा before हस्तेन

यं कामयेताप्रतिष्ठितस्स्यादित्युक्तम् ॥ १३ ॥

[क]आरोहं आरुह्य यश्छियते ॥ १३ ॥

अतिक्रम्य यूप्यान् यं जोषयते तमभिमन्त्रयते ॥ १४ ॥

इति प्रथमा कण्डिका ॥

[१]अत्यन्यानगामिति ॥ १ ॥

अन्यत् वृक्षजातं यं जोषयते यस्मिन्नस्य प्रीतिर्भवति ॥

अथैनमुपस्पृशति "तं त्वा जुषे वैष्णवं देवयज्याया" इति ॥ २ ॥

अथशब्द आनन्तर्ये क्रियते । यूपबहुत्वेऽ[1]भिमन्त्रणाद्यग्रच्छेदनान्तमेकैकस्य यथा क्रियेतेति ॥ २ ॥

"देवस्त्वा सविता मध्वानक्तु" इति स्रुवेण सर्वतोमूलं पर्यणक्ति ॥ ३ ॥

स्रुवेणाञ्जनं हस्तनिवृत्त्यर्थम् ॥ ३ ॥

क. "यं कामयेताप्रतिष्ठितस्स्यादिति, आरोहं तस्मै वृश्चेत् एष वै वनस्पतीनामप्रतिष्ठितः, अप्रतिष्ठित एव भवति । यं कामयेत पशुमान् स्यादिति, बहुपर्णं तस्मै बहुशाखं वृश्चेत्, एष वै वनस्पतीनां पशव्यः पशुमानेव भवति । प्रतिष्ठितं वृश्चेत्प्रतिष्ठाकामस्य; एष वै वनस्पतीनां प्रतिष्ठितो यस्समे भूम्यै स्वाद्योनेरूढः, प्रत्येव तिष्ठति" (तै. सं. ६-३. ३. ४.) इति यूपे गुणा दोषाश्चोक्ताः, तेऽत्रानुसन्धेया इति सूत्रार्थः । तद्ब्राह्मणगतस्यारोहपदस्य व्याख्यानमिदम् । वृक्षमारुह्य जायत इत्यारोह इति सायणः । ( See तै. सं. Vol. I. P. 430 An ed.)

1. B. Ms. adds अपि before अभिमन्त्रणादि ।

१. अत्यन्यानगान्नान्यानुपागामर्वाक्त्वा परैरविदं परोऽवरैः ( तै. सं. १. ३. ५. १. )

"ओषधे त्रायस्वैनम्" इत्यूर्ध्वाग्रं दर्भमन्तर्धाय "स्वधिते मैन ँ हि ँ सीः" इति स्वधितिना प्रहरति ॥४॥

स्वधितिः छेदनसमर्थं द्रव्यम् । [क]इह तु वासी ॥ ४ ॥

प्रथमपरापातिनं शकलमाहराति ॥ ५ ॥

यः प्रथमः परापतति स प्रथमपरापाती । तमाहरति शकलम् ॥ ५ ॥

गुल्फदघ्ने वृश्चेज्जानुदघ्नेऽनक्षसङ्गं वा ॥ ६ ॥

गुल्फः पादान्तः तत्प्रमाणेन कर्तव्यं छेदनम् । जानुदघ्ने जानुप्रमाणे । [ख]अथवा अनस्याक्षो न सज्यते यूपस्थाणौ ॥ ६ ॥

[१]"दिवमग्रेण मा लेखीः" इति प्राञ्चं पातयत्युदञ्चं प्राञ्चमुदञ्चं वा । "वनस्पते शतवल्शो विरोह" इत्याव्रश्चने जुहोति ॥ ७ ॥

आव्रश्चनं[1] यूपवृक्षस्य मूलम् ॥ ७ ॥

"सहस्रवल्शा वि वय ँ रुहेम" इत्यात्मानं प्रत्यभिमृश्य[२] "यं त्वाय ँ स्वधितिस्तेतिजान" इत्यन्वग्रमलगांश्छिनत्ति ॥ ८ ॥

अलगाः शाखाः । आच्छिनत्ति यतोऽग्रं ततः क्रिया[2]समाप्तिः ॥८ ॥

क. रुद्रदत्त defers in meaning ( See P. 339. Vol. I. A. S. B. ed. )

ख. शकटरथादीनां पथि गच्छतामक्षो यूपाव्रश्चनस्थाणौ यथा न सज्जेत तथा शकटादेरक्षस्थानादधःपरिमाणं छेत्तव्य इति ।

1. Ad adds छेदनम्

2. B. Ms. & O. Ms. read परिसमाप्ति

१ दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हि ँ सीः पृथिव्या सम्भव । ( तै. सं. १-३-५-१ )

२ यं त्वाय ँ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय । ”

"अच्छिन्नो रायस्सुवीर" इत्यग्र परिवासयति ॥ ९ ॥

मीत्वाऽ[क]ग्रच्छेदः ॥ ९ ॥

पञ्चारत्निमिति काम्याः ॥ १० ॥

[1]यः [ख]कामयेतोत्तरां यज्ञक्रियां तस्मै पञ्चारत्निश्छेत्तव्यः । [ग]प्रतिष्ठा स्थानलाभः । सर्वप्रकारा वा ऋद्धिः । स्तोमोऽपि त्रिवृत् नवभिः ऋग्भिः ॥ १० ॥

एकारत्निप्रभृत्या त्रयस्त्रिंशदरत्नेरव्यवायेनैके समामनन्ति ॥ ११ ॥

एकारत्निः प्रथमे यूपे । ततो यूपे यूपे आगतेऽरत्निर्वर्धतेऽव्यवायेन । क्वचिद्यजमानमात्रः कदाचिदर[2]त्निविवृद्धिरिति न लभ्यते । अरत्निविवृद्धावन्तरा अन्यो विधिर्न लभ्यते । युगपद्यूपोत्पत्तौ समान एव । एवं पूर्णे त्रयस्त्रिंशदरत्नौ तदूर्ध्वं त्रयस्त्रिंशदरत्नय एव ॥ ११ ॥

यावान् यजमान ऊर्ध्वबाहुस्तावान् । यावान् वा रथे तिष्ठन् ॥ १२ ॥

ऊर्ध्वबाहुर्वा ॥ १३ ॥

क. वक्ष्यमाणप्रमाणानुसारेण मीत्वा तदग्रे छेदनमवशिष्टस्य कर्तव्यमिति ।

ख. " पञ्चारत्निं तस्मै वृश्चेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेत् " ( तै. सं. ६. ३. ३. ) इति ब्राह्मणानुसन्धानार्थमिदं सूत्रम् । उपनमेत् प्राप्नुयात् ।

ग. " षडरत्निं प्रतिष्ठाकामस्य " इति ब्राह्मणम् । तव्द्याख्यानमिदम् । तत्रैवादो ब्राह्मणवाक्यम् " त्रिवृता स्तोमेन सम्मितम् " इति । तव्द्याख्यानरूपमिदम । स्तोमविशेषणस्य त्रिवृच्छब्दस्य ऋङ्नवकवाचित्वं पूर्वमीमांसायां १. ३. ९. अधिकरणे सिद्धान्तितम् ।

1. 'ङ' reads यं कामयेतोपैनमुत्तरो यज्ञो नमेत; 'घ' reads यः कामयेतोत्तरा यज्ञक्रिया.

2. B. Ms. reads अरत्निवृद्धिर्भवति इति न.

रथे तिष्ठन्न[1]नूर्ध्वबाहुर्वा, ऊर्ध्वबाहुर्वा ॥ १३ ॥

पुरुषमात्री त्वेतस्यावमा मात्रा। अथ ततो वर्षीयान्। वर्षीयानेव कार्य इत्येके ॥ १४ ॥

पुरुषप्रमाणा निकृष्टमात्रा यूपस्यं। ततः परं स्वल्पमप्याहार आहिरे वर्धते। अथवा पुरुषप्रमाण एव ॥ १४ ॥

त्र्यरत्निश्चतुररत्निर्वा पालाशो निरूढपशुबन्धस्याऽतोऽन्यः सौम्यस्याऽध्वरस्येति वाजसनेयकम् ॥ १५ ॥

इति द्वितीया कण्डिका

निरुह्य सोमाद्ध[2]हिर्भवतीति निरूढपशुबन्धः। तस्य पालाशत्वं [3]यूपस्य। अरत्निप्रमाणत्वञ्च। प्रथमं [क]वाजसनेयिमतेन[4]। इतरथा पूर्वविधयो 'यावान् यजमान' इत्येवमाद्याः [5]कार्याः। '[ख]अध्वरः' नास्मिन् हिंसाप्रत्यवायं करोतीति। सौम्यः सोमसाधनत्वात्। स च ज्योतिष्टोमः। तस्य पूर्वोक्ता यूपाः एवंपरिमाणादन्ये ॥ १५ ॥

क. अत्र वाजसनेयिमतोपादानं विकल्पबोधनार्थम्। अतश्च त्र्यरत्निश्चतुररत्निर्वा प्रथमः पक्षः। तद्विकल्पेन पूर्वोक्ता यावान् यजमान ऊर्ध्वबाहुरित्याद्या अपि पक्षाः प्राप्नुवन्तीति।

ख. 'ध्वृ हूर्छने' हूर्छनं कौटिल्यम्। "भ्रातृव्यमेवैतया ध्वरति" इत्यादौ हिंसायामपि दृश्यत इति माधवः। अत एव ध्वरशब्दः प्रत्यवायसाधनीभूते हिंसायां वर्तते इति रामाग्निचिदपि। एवञ्च ध्वृधातोर्हिंसार्थकादच्प्रत्यये कृते ध्वरशब्दो निष्पद्यते। न विद्यते ध्वरः हिंसा यस्मिन् सोऽध्वरः। यत्र हिंसाया हिंसात्वं प्रत्यवायजनकत्वं नास्ति, सोऽध्वर इति फलितम्, यतस्सा विहिता। निषेधस्य 'मा हिंस्यात्' इत्यादेर्विहितेतरविषयत्वं मीमांसकयाज्ञिकसिद्धान्तसिद्धम्। तदेव च मन्वादिभिरुक्तम्—'तस्माद्यज्ञे वधोऽवधः' इत्यादि। तदेवोच्यते—अध्वर इत्यादिना।

1. 'ङ' reads ऊर्ध्वबाहुरनूर्ध्वबाहुर्वा.
2. B. Ms. reads सोमाद्बहिरिति.
3. B. Ms. omits युपस्य.
4. B. Ms. reads वाजसनेयिनां मतेन.
5. 'क' omits कार्याः

मूलतोऽतष्टमुपरम् ॥ १ ॥

मूलादारभ्य मूलतः । [क]अनष्टमुपरम् नास्य तक्षणं क्रियते । अवट-परिमाणम् ॥ १ ॥

अष्टाश्रिरनुपूर्वोऽग्रतोऽणीयान् प्रज्ञाताग्निष्ठाश्रिर-स्थूलोऽनणुः ॥ २ ॥

अश्रयोऽस्याष्टौ [1]अनुपूर्वं आनुपूर्व्येण । मूलादारभ्या[2]ग्रान्तो यथा भवति तनुस्तथा तक्ष्यते । मध्ये स्थूलः मूले तनु तनुतरोऽग्र इत्येवं न लभ्यते । अग्निना तुल्यं तिष्ठत्यग्निष्ठा । सा महती सर्वाभ्यः । न स्थूल अस्थूलः, न अणुः अनणुः न भवति तनुर्यथा नापक्रामति पशुस्तस्मिन् बद्धः तथालक्षणः । हस्तद्वयग्राह्यः कार्य इति निगम[3]मतिः ॥ २ ॥

अवतक्षणानां स्वरुरधिमन्थनश्च शकलः ॥ ३ ॥

अवतक्षणानां यूपे तक्ष्यमाणे ये शकलाः । तेषां स्वरुः प्रथमः ॥३॥

अग्राच्चषालं प्रथमात्रमष्टाश्रि मध्ये सन्नतम् ॥ ४ ॥

प्रथः हस्ततलम् । सन्नतं तनुर्मध्ये ॥ ४ ॥

यं कामयेतान्योऽस्य लोकमभ्यारोहेदिति तस्यान्य-वृक्षस्य स्वरुच[ख]षाले कुर्यात् ॥ ५ ॥

यावदुत्तममङ्गुलिकाण्डं तावदूर्ध्वं चषालाद्यूपस्या-तिरिक्तं द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा ॥ ६ ॥

क. अवटे निखातव्यस्य यूपांशस्योपरम् इति संज्ञा ।
ख. पुल्लिङ्गं चषालशब्दं मनुतेऽमरः ।

1. Ad. omits अनुपूर्वं
2. 'घ' 'ङ' read अग्रतो यथा
3. 'क' reads निगमकारमतिः

खलेवाल्यादिषु स्वरुचषाले न क्रियेते, प्रतिषिद्धत्वात्। अग्निमन्थनशकलस्तु अन्यवृक्षस्यापि क्रियते। अञ्जनं तु येन केनचिच्छकलेन क्रियते, पश्वर्थत्वा[क]दाज्यसाध्यत्वाच्च। स्वरुसंस्कारस्तु लुप्यते, अत्र स्वरोरञ्जनमिति[1] च ॥ ५, ६ ॥

**रथमात्री निरूढपशुबन्धस्य वेदिः ॥ ७ ॥**

रथप्रमाणा रथ[2]मात्री ॥ ७ ॥

**[ख]अक्षसम्मिता पश्चात्तिर्यगीषया प्राची विपथयुगेन पुरस्ताद्यावता वा बाह्ये छिद्रे ॥ ८ ॥**

**अरत्निभिर्वा चतुर्भिः पश्चात् षड्भिः प्राची त्रिभिः पुरस्तात् ॥ ९ ॥**

[ग]चतुरुत्तरमङ्गुलिशतं पश्चाद्विस्तारः। अष्टाशीतिशतं प्राची। षडशीतिः पुरस्ताद्विस्तारः। [घ]एतद्विपथयुगप्रमाणम्। पथो बहिर्गच्छतीति विपथयुगम्। यावता बाह्ये छिद्रे तावान् वा पुरस्ताद्विस्तारः ॥ ८, ९ ॥

क. प्रयाजशिष्टेनाज्येन पश्वञ्जनस्य कर्तव्यत्वात् स्वर्वभावस्थले खलेवाल्यादौ पशोराज्यस्य च सत्वात् तत्संस्कारो मा विलोपीति येन केनचिच्छकलेन पश्वञ्जनं 'गुणलोपे च मुख्यस्य' इति न्यायेनेति। See पू. मी. १०-२-२७. for this न्याय. )

ख. See शुल्बसूत्र . 4. P. 92. A. S. Mysore ed.

ग. 'अष्टाशीतिशतमीषा तिर्यगक्षश्चतुश्शतम। षडशीतिर्युगं चास्य रथश्चारुण उच्यते' (आ. शु. ५. ८.) इति शुल्बे ईषादीनां प्रमाणमुक्तम्। See also कात्यायनशुल्बे। तत्राष्टशीतिशतमीषा। चतुश्शतमक्षः। षडशीतिर्युगम्, ( का. शु. २. २. ३. ४. ) रथाक्षस्य प्रमाणं चतुरुत्तरं शतमङ्गुलानि ( १०४ ) ईषायाः, अष्टाशीतिशतम् (१८८) अङ्गुलयः, युगस्य प्रमाणं षडशीतिरङ्गुलयः (१८६)। तदेतदभिसन्धाय भाष्यकारेणोक्तम् चतुरित्यादि।

घ. व्याप्तः पन्था येन स विपथः। चारणरथः। विपथस्य युगो विपथयुगः। षडशीत्यङ्गुलपरिमाणमिति यावत् इति करविन्दस्वामी। व्याप्तः पन्था येन युगेन तद्विपथयुगमिति कपर्दिस्वामी, विगतः पन्था यस्माद्युगात् तद्विपथयुगम् इति सुन्दरराजश्च शुल्बव्याख्याने।

1. O. Ms. reads बहुपशावप्येकस्मिन् यूपे वर्जयित्वैकादशिनीमेक एव स्वरुः। प्रतियूपमेव हि स्वरुः after इति च.
2. P. and B. MSS. read रथनेमिप्रमाणा रथाक्षमात्री.

**तां वेदं कृत्वा दर्शपूर्णमासवत्सन्नमनवर्जं प्रागुत्तरात् परिग्राहात् कृत्वापरेण यूपावटदेशं सञ्चरमवशिष्य वेद्यामुत्तरवेदिं दशपदां सोमे करोति ॥ १० ॥**

तां शौल्बेन विधिना एकेनानेकेन वा विमिनाम् । सन्नमनं मध्ये तनूकरणम् । तद्वर्जं दर्शपूर्णमासवत् प्रागुत्तरात्परिग्राहात् करोति । वेदं कृत्वा वेदिं च । अपरेण यूपावटदेशं वेदेरेव । तत्र सिद्धे वेद्यामुत्तरवेदिमिति वचनात् यत्र विधाभ्यासोऽग्नेरेकशतविधान्तः, अन्तरेणापि तत्र वचनं सौमिकया वेदेर्वृद्धिर्भवति । यथाग्निर्वेद्यां भवति "उत्तरवेदिमुपवपति यावानग्निः" इति । [क]सर्वतो दशपदा शतपदा क्षेत्रतः । [ख]क्षेत्रतो दशपदेत्युपदेशः ॥

**अंहीयसीं पुरस्तादित्येके ॥ ११ ॥**

अंहीयसीं तन्वीं पुरस्तात् ॥ ११ ॥

**तां युगेन यजमानस्य वा पदैर्विमाय शम्यया परिमिमीते ॥ १२ ॥**

युगेनेति वचनात् [1]युगमात्र्यपि लभ्यते वेदिः ॥

**शम्यामात्री निरूढपशुबन्धस्योत्तरवेदिः ॥ १३ ॥**

क. दक्षिणोत्तरतः पूर्वपश्चिमतश्च दशपदा । एवञ्च क्षेत्रफलं शतपरिमितं भवतीति । See श. ब्रा. ३. ४. १. ३४. "यजमानस्य वा दश दश पदानि" इति । also शुल्बसूत्रभाष्य of कपर्दिन् and सुन्दरराज "दशपदा सर्वतः । क्षेत्रतश्शतपदा" इति P. P. 99–100 respectively आप. शु. Mysore ed.

ख. उपदेशमतं तु–क्षेत्रफलमेव दशपदात्मकं दशपदेत्येव सूत्रोक्तेरिति । तदा तन्मानप्रकारश्चेत्थम्–एकपदविस्तारं त्रिपदायामं दीर्घचतुरस्रं कृत्वा तदक्ष्णया रज्वा विमाय तया रज्वा किञ्चिदधिकत्रिंशदङ्गुलपरिमितया चतुरश्रं कुर्यात् । एवं सति दशपदात्मकं चतुरश्रं जायत इति ।

1. 'ङ' reads युगमात्रापि

[1]श[क]म्यामात्री सोमेऽपि लभ्यते ' मात्रैवास्यै सा ' इति ॥

शम्यां पुरस्तादुदग्रां निधाय स्फ्येनोदीचीमभ्यन्तरमुपलिखति " वित्तायनीमेऽसि " इति । एवं दक्षिणतः प्राचीं " तिक्तायनीमेऽसि " इति । पश्चादुदीची "मवतान्मानाथितम्" इति । उत्तरतः प्राची "मवातान्माव्यथितम्" इति ॥ १४ ॥

इति तृतीया कण्डिका

उदीचीमुदगग्राम् । अभ्यन्तरं शम्यायास्समीपे लिखत्येतैर्मन्त्रैः प्रतिदिशम् ॥ १४ ॥

इति धूर्तस्वामिविरचिते आपस्तम्बश्रौतसूत्रभाष्ये सप्तमप्रश्ने

प्रथमः पटलस्समाप्तः ॥

द्वितीयः पटलः

उत्तरस्माद्वेद्यंसादुदक् प्रक्रमे चात्वालः ॥ १ ॥

तमुत्तरवेदिवत्तूष्णीं शम्यया परिमित्य "देवस्य त्वा सवितुः प्रसव" इत्यभ्रिमादाय " परिलिखित ँ रक्षः परिलिखिता अरातय " इति प्रदक्षिणं परिलिख्य तूष्णीं जानुदघ्नं त्रिवितस्तिं वा खात्वोत्तरवेद्यर्थान् पांसून् हरति [१]"विदे"रिति ॥ २ ॥

क. सोमे वेदिनिर्माणविधिप्रकरणे " शम्यया परिमिमीते " ( तै. सं. ६. २. ७. ) इत्युत्तरवेद्याः शम्याविमानं विधाय तदनन्तरश्रुते " मात्रैवास्यै सा " इत्यर्थवादे अस्या उत्तरवेदेस्सैव मात्रा परिमाणमित्युक्तत्वात् शम्यापरिमाणमपि लभ्यत इति । षट्त्रिंशदङ्गुलं शम्यापरिमाणम् । चत्वारोऽष्टकाः ( चतुर्गुणिता अष्टसंख्या द्वात्रिंशत् ) शम्या" इति कात्यायनः । ( का. शु. २. ६. )

1. B. Ms. adds युगेनेति वचनात् before शम्यामात्री

१. विदेरग्निर्नभो नामाग्ने अङ्गिरो योऽस्यां पृथिव्यामस्यायुषा नाम्नेहि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादधे ( तै. सं. १,२-१२-१. )

[1]"सिंहीरसि" इत्युत्तरवेद्यां निवपति ॥ ३ ॥

एतेनैव 'यो द्वितीयस्या'मिति द्वितीयं 'यस्तृतीयस्या'मिति तृतीयम् ॥ ४ ॥

अभ्रिः खनित्रम् । [क]चात्वालोऽपि शम्यामात्रः । प्रदक्षिणवचनं च यथा सव्येन लिखितं तथा मा भूदिति । तूष्णीं वाग्यतः । [ख]विनस्ति मध्यमयाऽङ्गुल्या युक्तः । तिस्रो वितस्तयो [1]यत्र परिमाणे स त्रिवितस्तिः । उत्तरवेद्यां निवपतीति सिद्धे तदर्थत्वे उत्तरवेद्यर्थामिति वचनाच्चात्वाल उत्तरवेदिप्रयुक्त इति दर्शयति । अतस्सौमिके वैश्वदेवे[ग] न चात्वालः । [घ]वरुणप्रघासेषु महाहविष्षु च क्रियते चात्वालः, उत्तरवेद्यर्थत्वात् ॥ १-४ ॥

तूष्णीं चतुर्थं हृत्वा "उरु प्रथस्वोरुते यज्ञपतिः प्रथताम्" इति प्रथयित्वा "ध्रुवासि" इति शम्यया संहत्य "देवेभ्यः कल्पस्व" इत्यभिमन्त्र्य "देवेभ्यः शुन्धस्व" इत्यद्भिरवोक्ष्य "देवेभ्यश्शुम्भस्व" इति सिकताभिरवकीर्य प्रोक्षणीशेषमुत्तरत उत्तरवेद्यै निनीय "आपो रिप्रन्निर्वहत" इति स्फ्येनोदीचीमेकस्फ्यान्निस्सार्य "विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहृतम् । वात-

क. 'शम्यया परिमिमीत' इति वचनात् परिमाणान्तरानुपदेशाच्च शम्यापरिमाण एव चात्वालो लभ्यत इति । उत्तरवेदिपांसुग्रहणार्थोऽवटश्चात्वालः ।

ख. मध्यमयाङ्गुल्या युक्तः प्रसारितोऽङ्गुष्ठः वितस्तिरित्युच्यते इति रामाग्निचित् । कनिष्ठिकाङ्गुष्ठयोरायाम इति रुद्रदत्तः । 'वितस्तिर्द्वादशाङ्गुलः' इत्यमरः ।

ग. "न वैश्वदेव उत्तरवेदिमुपवपति" इत्युत्तरवेदेर्निषेधात् उत्तरवेदेरभावे तदर्थस्य चात्वालस्याप्यभाव इति ।

घ. "उपात्र वपन्ति" इत्युत्तरवेदिविधेर्मध्यमपर्व (वरुणप्रघाससाकमेधपर्व) मात्रस्य स्थापितत्वात् तयोरुत्तरवेदिरस्तीति तदर्थं चात्वालोमपि प्रवर्तत इति ( See पू. मि. ७. ३. ९. ).

1. B. Ms. reads यस्य परिमाणं for यत्र परिमाणे.

१. सिंहीरसि महिषीरसि ".

जूतो यो अग्निरक्षतु त्मना प्रजाः पिपर्ति बहुधा विराजति " इत्युत्तरवेद्या अन्तान् कल्पयति ॥ ५ ॥

सम्मृशतीत्येके ॥ ६ ॥

इति चतुर्थी कण्डिका

शम्यया संहननं दृढीकरणम् । उपरिकिरणं वालुकाभिः । अवोक्षणशेषमपि प्रोक्षणीशेषम् । एकस्फया रेखा । तथा निस्सार्यते यथा उद्गच्छत्युदकम् । अन्तान् रचयति यथा समा भवति । नाभिरिव मध्ये क्रियते चात्वालपांसुभिः, उत्तरवेद्यङ्गत्वात् ॥ ५-६ ॥

अथास्या मध्ये प्रादेशमात्रीं गोपदमात्रीमश्वशफमात्रीं वोत्तरनाभिं चतुस्स्रक्तिं कृत्वा " चतुश्शिखण्डे युवती कनीने घृतप्रतीके भुवनस्य मध्ये । तयोर्देवा अधिसंवसन्त उत्तमे नाक इह मादयन्ताम् " इत्युभे अभिमन्त्र्य " [1]इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पातु " इत्येतैर्यथालिङ्गमुत्तरवेदिं प्रोक्षति ॥ १ ॥

"त्वष्टा त्वा रूपैरुपरिष्टात् पातु" इति मध्यम् ॥ २ ॥

अथशब्दोऽर्थकृत्यप्रतिषेधार्थस्स[2]र्वत्र । चतुस्स्रक्तिः चतुष्कोणः । [क]इन्द्रघोषादिभिः प्रो[3]क्षणमनुपरिक्रामता नैकस्थेन, " दिग्भ्य एवैनां प्रोक्षति " इति लिङ्गात् । [ख]मनोजवाः प्रधानाः, अतो न पित्र्यम् ॥ १, २ ॥

क. " इन्द्रघोषस्त्वा वसुभिः " इत्यादिभिश्चतुर्भिर्मन्त्रैः तस्यां तस्यां दिशि परिक्रम्यैव प्रोक्षणं कर्तव्यम् । न त्वेकत्र स्थित्वा प्रोक्षणम् । " दिग्भ्य एवैनां प्रोक्षति " इत्यनेन तत्तद्दिगवस्थितेनैव प्रोक्षणविध्यवगमादिति ।

ख. मनोजवास्त्वा पितृभिर्दक्षिणतः पातु " इति मन्त्रे मनोजवानामेव प्राधान्यम्, पितृणां तु सहभावमात्रम् ' सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ' इतिवत् । अतः पितृणां प्राधान्याभावात् नास्य पित्र्यत्वमिति ।

1. B. Ms. reads शम्यया सन्नहनम्
2. Ad. Ms. omits सर्वत्र
3. 'क' reads प्रोक्षणमनुक्रमता

१ इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु । मनोजवास्त्वा पितृभिर्दक्षिणतः पातु । प्रचेतास्त्वा रुद्रैः पश्चात्पातु । विश्वकर्मा त्वादित्यैरुत्तरतः पातु ।

प्रोक्षणीशेषं दक्षिणत उत्तरवेद्यै निनयेत् "शुचा त्वार्पयामि" इति द्वेष्यं मनसा ध्यायन् ॥ ३ ॥

पाप्मन्निन्त्यामन्त्रणेन ध्यानं द्वेष्यस्य ॥ ३ ॥

पूर्ववदेकस्प्यां दक्षिणतो निस्सार्य जुह्वां पञ्चगृहीतं गृहीत्वा सर्वत्र हिरण्यमुपास्यन्नक्ष्णयोत्तरवेदिमुत्तरनाभिं वा व्याघारयति ॥ ४ ॥

"आपो रिप्रम्" इति निस्सारणं दक्षिणतः । आहवनीयप्रदाने [3]जुह्वर्नियता । उत्तरवेद्यां होम [4]इत्यतो जुह्वर्विधीयते । उपासनं क्षेपो हिरण्यस्य । अक्ष्णया अनृजुकोणेन । व्याघारणं दीर्घधारता ॥ ४ ॥

दक्षिणमंसमुत्तरां श्रोणिं दक्षिणामुत्तरमंसम्मध्यमिति[1] "सिꣳहीरसि" इत्येतैः प्रतिमन्त्रम् ॥ ५ ॥

अंसः पूर्वदक्षिणः कोणः पूर्वोत्तरश्च । श्रोणिः उत्तरापरः कोणः दक्षिणापरश्च ॥ ५ ॥

[2]"भूतेभ्यस्त्वा" इति स्रुचमुद्गृह्य पौतुद्रवैः परिधिभिरुत्तरवेदिं परिदधाति "विश्वायुरसि" इति मध्यमम् "ध्रुवक्षिदसि" इति दक्षिणम् "अच्युतक्षिदसि" इत्युत्तरम् ॥ ६ ॥

पौतुद्रवाः देवदारुमयाः । केषाञ्चिदौदुम्बराः ॥ ६ ॥

3. B. Ms. reads जुहू नियमनत for जुह्वर्नियता.

4. B. Ms. adds इयते before इति.

१. सिꣳहीरसि सपत्नसाही स्वाहा । सिꣳहीरसि सुप्रजावनिः स्वाहा । सिꣳहीरसि रायस्पोषवनिः स्वाहा । सिꣳहीरस्यादित्यवनिः स्वाहा । सिꣳहीरस्यावह देवान् देवयते यजमानाय स्वाहा ।

२. भूतेभ्यस्त्वा विश्वायुरसि पृथिवीं दृꣳह । ध्रुवक्षिदस्यन्तरिक्षं दृꣳह । अच्युतक्षिदसि दिवं दृꣳह ।
(तै. सं. १-२-१२-१)

परिधिसन्धिना सर्वा आहुतीर्जुहोति ॥ ७ ॥

इति पञ्चमी कण्डिका

दक्षिणेन परिधिसन्धिना [1]या दक्षिणतो हूयन्ते । उत्तरेणोत्तराः ॥ ७ ॥

" अग्नेर्भस्मासि " इत्युत्तरवेद्यां सम्भारान्निवपति गुग्गुलु सुगन्धितेजनं श्वेतामूर्णास्तुकां पेत्वस्यान्तराशृङ्गीयां लूनस्यालूनपूर्वस्य वा ॥ १ ॥

सुगन्धितेजनं सुगन्धितृणम् । ऊर्णास्तुका ऊर्णास्तम्बः । पेत्वो विगतपुंस्त्वो मेषः । तस्य शृङ्गयोरन्तरा भवा अन्तराशृङ्गीया । [क]अर्धलूनस्य नेष्यते ॥ १ ॥

व्याघारणप्रभृति सम्भारनिवपनान्तमुत्तरवेद्यामुपर्यग्नौ धार्यमाण एके समामनन्ति ॥ २ ॥

अन्येन धार्यमाणेऽग्नौ अध्वर्युः करोति ॥ २ ॥

प्रोक्षान्तां कृत्वोदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छाद्य वसति यद्यसद्यस्कालः पशुर्भवति ॥ ३ ॥

[2]द्वितीयप्रोक्षणे निस्सरणान्ते कृते [3]उदुम्बरशाखाभिः प्रच्छादनम् ।

क. स्तम्बस्यार्धं लूनम् अर्धमलूनमिति तादृशो न भवति । कृत्स्नो लूनः तत्काले वा सकृल्लूयतेऽनियावम् ( लवनकाले स्वधितेरनावृत्या )

1. B. Ms reads या दक्षिणेन
2. B. Ms. reads द्वितीये प्रोक्षणे
3. Ibid औदुम्बरशाखाभिः

[क]अनन्तरं कृत्वाग्निहोत्रमित्युपदेशः । [ख]यदा रात्रावपराह्णे वा [1]पर्वकालः, तदा तस्मिन्नेवाहनीज्या । सद्यः पूर्वेद्युर्वा प्रोक्षणान्तं कृत्वा । पश्चात्पर्वणोऽ[2]न्वाधानं करोति पशौ वृत्ते । यदा पूर्वाह्णे पर्वकालः तत्र कृत्वा पर्व [3]सद्यस्काल एव पशुः । उपदेशः कृत्वैव पर्व पशुः सद्यो व्यहे वेति विकृतीनामेष विधिरन्यासामपि ॥

आहवनीये प्रणयनीयमिध्ममादीप्य सिकताभिरुपयम्य "अग्नये प्रणीयमानायानुब्रूही"ति सम्प्रेष्यति । प्रणीयमानायानुब्रूहीति वा ॥ ४ ॥

[ग]इध्मस्य न संख्या, नापि वृक्षनियमः प्रणयनीयस्य । वृक्षनियम इत्युपदेशः । अग्नेरधस्ताद्धारणमुपयमनम् ॥ ४ ॥

क. 'प्रच्छाद्य वसति' इति प्रच्छादनवासयोरानन्तर्यविधानात् रात्रावग्निहोत्रहोमं कृत्वा तदनन्तरं प्रच्छादनम्, ततो वास इति ।

ख. अनेन प्रकृतिविकृत्योः क्रमो निरूप्यते । तथाहि–" य इष्ट्या " इति वचनेन इष्टिपश्वादीनाममावास्यापौर्णमासकालो विकल्पेन विहितौ । अमावास्यापौर्णमासीशब्दौ पर्वप्रतिपत्सन्धिवाचकौ इत्युक्तम् । तेन पर्वप्रतिपत्सन्धिदिन एवेष्ट्यादेरनुष्ठानं प्राप्तम् । तत्र प्रकृतिर्व्यहकाला । विकृतेस्सद्यस्काला । एवञ्च यदाऽपराह्णे वा रात्रौ वा पर्वसन्धिः तदा तस्मिन्दिने प्रातः सद्यः पशुयागमनुष्ठाय, पूर्वेद्युर्वा पशोः प्रोक्षणान्तमनुष्ठाय पर्वसन्धिदिनेऽवशिष्टं पशुप्रयोगं परिसमाप्य ततः प्रकृतेरन्वाधानं कर्तव्यम । द्वितीयदिने प्रकृतियागः । विकृतेरपि व्यहकालत्वे पूर्वेद्युर्विकृतिमारभ्य पर्वणि समाप्य ततः प्रकृत्यारम्भः । यदा पूर्वाह्णे पर्वसन्धिः तदा तत्पूर्वेदिने प्रकृतेरन्वारम्भं कृत्वा पर्वसन्धिदिने प्रातः प्रकृतिं समाप्य ततः सद्यस्काल एव पशुः कर्तव्यः । सन्धिमदहोरात्रे विकृतिप्रयोगो यथा स्यादित्येवमर्थम् । विकृतेः पूर्वं प्रयोगे प्रकृतेः तिथिद्वयसम्बन्धो न सिध्येदिति । पूर्वाह्णपक्षे पूर्वं प्रकृतिं कृत्वा ततो विकृतिस्सद्यस्कालावा व्यहकाला वाऽनुष्ठेयेत्युपदेशमतमिति ।

ग. 'प्रणयनीयमिध्यमादीप्य' इतीध्मपदश्रवणाद्दर्शपूर्णमासीयेध्मवृक्षनियमः तत्संख्यानियमश्च प्राप्नुयादिति शङ्कां व्यावर्तयितुमिदं प्राकृतकार्यापन्नत्वान्न तद्धर्माणामत्र प्राप्तिरिति ।

1. 'घ' omits कालः
2. B. Ms. adds अग्नि before अन्वाधानं
3. 'क' reads सद्य एव

उद्यम्याग्निमाहवनीय उद्यतहोमं जुहोति "यत्ते पावक चकृमा कच्चिदागः पूर्वो यस्सन्नपरो भवासि। घृतेन वि तन्वं वर्धयस्व मा मा हिꣳसीरधिगतं पुरस्तात्स्वाहा" इति ॥ ५ ॥

प्रैषमुक्त्वाऽऽहवनीयं [1]ज्वलन्तमग्निमुद्गृह्णाति, तदुद्यमनम्। केचित्तु गृहीत्वाग्निमाहवनीयात्सिकतासु स्थापयित्वा प्रैषमुक्त्वा उद्यमनमुत्क्षेपणं कुर्वन्ति तस्याग्नेः। यस्माद्गृहीतोऽग्निः तस्मिन्नुद्यतहोमः ॥ ५ ॥

प्रथमायां त्रिरनूक्तायामुपयमनीभिरुपयम्य हरति ॥६॥

उपयम्यैव हरति न ता उपनयत्यग्नेः ॥ ६ ॥

"ऊर्णावन्तं प्रथमस्सीद योनि" मिति होतुरभिज्ञाय "अग्ने बाधस्व विमृधो नुदस्वापामीवा अप रक्षाꣳसि सेध। अस्मात्समुद्राद्बृहतो दिवो नोऽपां भूमानमुपनस्सृजेह। यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा वसूनि पुरुधा विशन्तु। दीर्घमायुर्यजमानाय कृण्वन्नथामृतेन जरितारमङ्धीह यज्ञः प्रत्यष्ठात्" इति सम्भारेषु प्रतिष्ठाप्य ॥ ७ ॥

इति षष्ठी कण्डिका

अभिज्ञाय ज्ञात्वा एनं शब्दमुक्तं होत्रा ॥ ७ ॥

"अग्नेः पुरीषमसि" इत्युत्तरत उपयमनीर्न्युप्य "मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि। अग्ने मनुष्व-

1. O. Ms. reads ज्वलन्तमिध्मं

दङ्गिरो देवान् देवायते यज" इत्युपसमिन्ध्य द्वादशगृहीतेन स्रुचं पूरयित्वा "सप्त ते अग्ने समिधः सप्त जिह्वा" इति सप्तवत्या पूर्णाहुतिं जुहोति ॥

उत्तरतोऽग्नेरुपयमनी । उपसमिन्धनम् । सप्तवत्येति ज्ञानार्थम् ॥१॥

"अग्निर्वायुरादित्यो विष्णुर्यज्ञं नयतु प्रजानन् मैनं यज्ञहनो विदन्। देवेभ्यो यज्ञं प्रब्रूतात् प्र प्र यज्ञपतिं तिर स्वाहा" इति चतस्रोऽतिमुक्तीर्जुहोति ॥ २ ॥

"अग्निर्यज्ञम्" इत्यनुषङ्गः ॥ २ ॥

एष पशुबन्धस्याहवनीयो यतः प्रणयति स गार्हपत्यः ॥ ३ ॥

[क]पशुबन्धस्यैवाहवनीयः । यास्तु प्रायश्चित्तेष्टयो [1]हिरण्यनाशादौ तासामाहवनीयो न भवति । परिसमाप्ते ता भवन्ति न मध्य इत्युपदेशः । दोषापादनन्तरं मध्येऽपि [2]भवतीति न्यायः । पशुबन्धग्रहणात्तु वृत्ते पशुबन्धे न समारोप्यते औत्तरवेदिकः ॥ ३ ॥

प्रणीते चेदग्निहोत्रकाल एतस्मिन्नेवाग्निहोत्रं जुहुयात् ॥ ४ ॥

[3]अस्मिन्नेव प्रणीते औत्तरवेदिके अग्निहोत्रहोमः, आहवनीयच्छित्त्वाभावात् । अपगन्त्वग्निहोत्रस्य शालामुखीये न क्रियते । सत्यपि गार्ह-

क. प्रकरणादेव पशुबन्धलाभे सति पुनः पशुबन्धग्रहणात् पशुबन्धमात्रस्यैव आहवनीयः प्रणीतः । तदङ्गभूतहिरण्यनाशेष्ट्यादीनां तु पशुबन्धसमाप्त्यनन्तरं पुनः प्रणीते आहवनीयेऽनुष्ठानमिति ज्ञाप्यत इति ।

1. B. Ms. reads हिरण्यनाशाद्याः
2. B. Ms. reads भवन्तीति for भवतीति
3. 'घ' reads तस्मिन्नेव; B. Ms. cites एतस्मिन्नेव for अस्मिन्नेव

पत्यद्वित्वे [क]प्राजहितस्य विद्यमानत्वात्। उपदेशः शालामुखीयो गार्हपत्यार्थ इति। केचित्तु शालामुखीयमेवाहवनीयार्थे कुर्वन्ति। प्राजहितश्च गार्हपत्यार्थे। पशुबन्धस्यैतावग्नी नाग्निहोत्रस्येति ॥ ४ ॥

**एवमन्यत्र विप्रक्रान्ते तन्त्रे ॥ ५ ॥**

प्रारब्धे तन्त्रेऽग्निहोत्रं हूयते । इष्टिपशुर्विहोमोखासम्भरणादिषु ॥ ५ ॥

**इध्माबर्हिराहरति। त्रयोविंशतिदारुरिध्मः आश्ववालः प्रस्तर, ऐक्षवी विधृती, कार्ष्मर्यमयाः परिधयः ॥ ६ ॥**

इति सप्तमी कण्डिका

शाखा पूर्वगृहीता। इदानीमुपदेशः। बर्हिः परिस्तरणम्। इध्मः। पलाशप्रक्षालनमुपवेषकरणम्, पवित्रस्य च। 'पशुं[ख] हव्य'मित्यूहः। न तू[ग]पदेशः। समूहनादि गोमयालेपनान्तं। इमौ पर्णाविति शाखापवित्रनिधानं, अग्निपरिस्तरणमिति कर्मक्रमः।[1] पुरोडा[घ]श विकारः पशुः। यावदु[ङ]क्तं सान्नाय्यवि[2]कारत्वमित्युपदेशः। आश्ववालः काशमयः,

क. प्राजहितस्यैव प्रणयनात्पूर्वं गार्हपत्यरूपत्वात् तस्यैव हविःश्रपणार्थतया क्लृप्तत्वात् यतः प्रणयति सगार्हपत्य इति पश्वर्थमेव शालामुखीयस्य गार्हपत्यसंज्ञाकरणादिति

ख. त्रिवृत्पलाशे दर्भः इति मन्त्रे 'पया हव्यं' इत्यस्य स्थाने 'पशुं हव्यं' इत्यूहः कर्तव्य इति।

ग. प्रकृतौ दध्नोऽपि हविष्ट्वात् पयोग्रहणस्याऽविवक्षितार्थत्वेनासमवेतार्थत्वात् विकृतावपि तथैव पाठः इत्युपदेशमतम्।

घ. कठिनद्रव्यत्वात् पुरोडाशविकारत्वम्।

ङ. ये केचन धर्मा उक्ताः कुम्भी शाखापवित्रमित्यादयः तत्रैव परं सान्नाय्यविकारत्वम्। अन्यत्र तु ऐन्द्राग्नविकारत्वमित्युपदेश इति।

1. Ad. reads कर्मप्रक्रमः।
2. B. Ms. reads विकारमित्युपदेशः

येन समूहनं क्रियते । स इत्युपदेशः । [क]क्षवी [1]इक्षु[ख]पर्णं । [ग]काष्मर्यः श्रीपर्णी ॥ ६ ॥

इति धूर्तस्वामिविरचिते आपस्तम्बश्रौतसूत्रभाष्ये सप्तमप्रश्ने

द्वितीयः पटलस्समाप्तः ॥

तृतीयः पटलः

**अग्नीन् परिस्तीर्य पाणिप्रक्षालनादिकर्म प्रतिपद्यते ॥ १ ॥**

[2]परिस्तरणमिहोपदेशेन ॥ १ ॥

**यथार्थं पात्राणि प्रयुनक्ति—स्फ्यमग्निहोत्रहवणीं वसाहोमहवनीं द्वितीयां जुहूं पृषदाज्यधानीं द्वितीयामुपभृतं द्वे आज्यस्थाल्यौ हृदयशूलमसिं कुम्भीं प्लक्षशाखां शाखापवित्रं काष्मर्यमय्यौ वपाश्रपण्यौ द्विशूलामेकशूलाश्चौदुम्बरं मैत्रावरुणदण्डमास्यदघ्नं चिबुकदघ्नं वा. रशने च ॥ २ ॥**

यथार्थं पात्राणीति यत्रोच्यते तत्रार्थलक्षणान्यन्यान्यपि [3]साद्यन्त इति केचित् । यैः पात्रैरर्थः तान्यासाद्यन्ते[4] । [ग]न दृषदादीनि, आहननार्थं

क. काश्मूलमिति मीमांसकाः ( See पू. मी. १-३-९. )

ख. पेरुङ्कुभळ् इति द्राविडभाषायां इति तालवृन्तनिवासी ।

ग. "एतानि वै दश यज्ञायुधानि " ( तै. सं. १-६-८-४ ) इति यज्ञपात्राणां वेद्यामासादनीयानां दशत्वकथनात् तदर्थमप्रयोजनानां दृषदुपलादीनामप्यासादनमिति न, किन्तु येषामत्र प्रयोजनं तेषामेवासादनमिति भाष्यकारस्य स्वमतिरिति । एवञ्च पशौ पेषणाभावान्न तत्प्रयुक्तदृषदुपलासादनमिति ।

1. Ibid, इक्षुवर्णी for इक्षुपर्णं
2. 'क' reads परिस्तरणमिति कर्मनामधेयम्
3. B. Ms. reads आसाद्यन्ते
4. B. Ms. तानि तान्यासाद्यन्ते

दशत्वपूरणार्थं वा । [क]द्वन्द्वं प्रकरणधर्मः । अतोऽग्निहोत्रहवण्या सह स्फ्यस्य द्वन्द्वम् । प्रकृतौ तु कपालैः । [ख]द्वितीयां जुहूं पलाशस्य । जुह्वा व्यापृतत्वे च तया होमो न स्रुवेण; "अग्नावग्निश्चरति प्रविष्ट" इति स्रुवनियमात् । एकार्थानां चैकता कपालवत् । [ग]स्रुवासी जुहूद्वयं च द्वन्द्वम् । उपभृतौ च ध्रुवा च । [1]वेद आज्यस्थालीद्वयञ्च । समवत्तधानी उपवेषश्च । प्लक्षशाखा वपाश्रपण्यौ, हृदयशूलं, कुम्भी शाखापवित्रञ्च द्वन्द्वम् । शाखा हविर्धारणार्था । कुम्भी पच्यमानाङ्गधारणार्था । पच्यमानधारणं वपाश्रपण्यौ हृदयशूलञ्च कुर्वन्ति । पक्वधारणं प्लक्षशाखा करोति । अतस्तेषां कुम्भीधर्माः । पशुप्रभवं सान्नाय्यं मांसञ्च । अतस्सान्नाय्यधर्मा [2]मांसे । कालसामान्यात्प्रातर्दोहविकारः पशुः । अतः पयोधर्माः । मैत्रावरुणदण्डो रशने च द्वन्द्वं । क्रमेण आसादनार्थः पाठः । एतान्यासाद्यानीति विधीयते । यद्यस्य स्थाने तत्तेन सहाऽऽसाद्यते । उपदेशो हृदयशूलादीनां [3]पाठक्रमेणाऽऽसादनम् । हृदयशूलोत्तरकालमसेः

क. प्रकृतौ पात्राणां द्वन्द्वतासम्पादनमुक्तम् , तदिहाप्यतिदिश्यते । परं प्रकृतौ "स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पञ्च" इत्यादिना स्फ्यकपालानां शूर्पाग्निहोत्रहवण्याश्च द्वन्द्वतोक्ता । प्रकृते कपालाभावात् स्फ्यस्याग्निहोत्रहवण्या सह द्वन्द्वता सम्पादनीयेति । एवमेवोत्तरत्र द्वन्द्वतासम्पादनमनुक्रम्यते ।

ख. अत्र सूत्रे द्वितीया जुहूर्विहिता । सा जुहूकार्यमेव करोति । अत एव प्रथमजुह्वा व्यापृतत्वे 'व्यापृतायां स्रुवेण' इति परिभाषोक्तं विधिं बाधित्वा जुह्वैव द्वितीयया होमः क्रियते । तत्र च प्रमाणम्–'अग्नावग्निश्चरति प्रविष्ट' इति प्रहृत्य स्रुवेणाभिजुहोति' इति स्रुवविधानमेव । अत्र हि स्रुवविधानं विधिमन्तरा स्रुवस्याप्राप्तिं द्योतयति । अतश्च जुह्वोरेककार्यत्वाद्द्वयोर्बहूनां वा, यथा कपालानामनेकत्वेऽपि पुरोडाशश्रपणरूपैककार्यत्वमेवाङ्गीकृत्य तेषां स्फ्येन सह प्रकृतौ द्वन्द्वता सम्पादिता, इह चाग्निहोत्रहवण्या इति ।

ग. अत्र द्वन्द्वतासम्पादनमेवम्–(१) स्रुवः, स्वधितिः, जुहूः, वसाहोमहवनी चेत्येकं द्वन्द्वम् । (२) उपभृत, पृषदाज्यधानी ध्रुवा चेत्येकं द्वन्द्वम् । (३) वेदः, आज्यस्थाली, दधिस्थाली चेत्येकं द्वन्द्वम् । (४) समवत्तधानी ( इडापात्रम् ) उपवेषश्चेत्येकं द्वन्द्वम् । (५) वपाश्रपण्यौ, प्लक्षशाखा, हृदयशूलम, कुम्भी, शाखापवित्रं चेत्येकं द्वन्द्वम् । (६) प्रैषकाले धारणार्थो मैत्रावरुणदण्डः, द्वे पशुयूपरशने चेत्येकं द्वन्द्वम् ।

1. B. Ms. cites all the words beginning from वेद and ending with शाखापवित्रं in द्वितीयान्त.

2 B. Ms. reads मांसस्य कालाभ्यासात्

3. O. Ms. omits पाठ

पाठात् । इतरथा स्रुवादनन्तरं पठ्येत । अतः पाठक्रमेणासादनमिति । द्विशूला द्वे शूले तीक्ष्णे यस्याः । [क]चिबुकं हनुः । आस्यं तुण्डम् ॥

**पवित्रे कृत्वा यजमान वाचं यच्छेति सम्प्रेष्यति ॥३॥**

पवित्रकरणमस्मिन् काले ॥ ३ ॥

**वाग्यतः पात्राणि सम्मृश्य प्रोक्षणीस्संस्कृत्य ब्रह्माणमामन्त्र्य पात्राणि प्रोक्षति । अत्र वाचं विसृजते । स्फ्यमादायोत्तरं परिग्राहं परिगृह्य दर्शपूर्णमासवत्सम्प्रेष्यति । आज्येन दध्नोदेहि इति सम्प्रेषान्तं नमति ॥ ४ ॥**

अध्वर्युणा पात्राभिमर्शने कृते यज्ञयोगः । उपदेशः—औषधार्थो [ख]यज्ञयोगो न क्रियते[1] । स्फ्यमादाय तूष्णीमुत्तरप[2]रिग्रहो विपरीतः । केचित्परिगृह्योत्तरपरिग्राहं दर्शपूर्णमासवत्कुर्वन्ति "धा असि" इत्यादि । दर्शपूर्णमासवद्वचनादसम्प्रैषपक्षोऽपि लभ्यते । स्रुवस्थानापत्तेः 'स्रुवश्च [ग]स्वधितिश्च स्रुचश्च सम्मृड्ढि पत्नीं सन्नह्याज्येन दध्नोदेहि' इति । आज्यदधिभ्यामुदेहीति न भवत्यूहः । उपदेशो दर्शपूर्णमासवदविकृतस्सम्प्रैषः—आज्येन दध्नोदेहीत्यसंस्कारपक्षेऽपि । स्रुवेणावदानं सान्नाय्यस्य, स्वधितिना पशोः । अतः स्वधितिः स्रुवधर्मा[3] ॥ ४ ॥

**स्रुचां सम्मार्जनकाले स्रुवं सम्मृज्य तस्यावृता स्वधितिम् । जुहूवद्वसाहोमहवनीमुपभृद्वत्पृषदाज्यधानीम् ॥५॥**

क. आस्याधोभागः चिबुकमिति रुद्रदत्तः । तथैव च लोकव्यवहारोऽपि ।

ख. हविर्निर्वापावहननमध्यवर्तित्वाद्यज्ञयोगस्य तयोरौषधद्रव्यधर्मकत्वेन तन्मध्यपातिनो यज्ञयोगस्यापि तदर्थत्वावगमात् पशौ तस्याऽननुष्ठानमिति । कस्त्वा युनक्ति स त्वा युनक्तु इति सर्वं विहारमनुवीक्षते ( आप. श्रौ. ४-४-८ ) इति विहितं वेदेरनुवीक्षणं यज्ञयोगपदार्थः ।

ग. स्रुवश्च स्वधितिश्चेत्यूहपक्षं खण्डयति रुद्रदत्तः । आण्डपिळ्ळै तु भाष्यपक्षमाद्रियते ।

1. B. Ms. of 'घ' read न कुर्वन्ति
2. B. Ms. adds परिग्राह after उत्तर
3. B. Ms. reads स्वधितेः स्रुवधर्मः

आवृत्क्रिया स्रुवतुल्यया क्रियया । वसा पशुरसः, तस्य होमार्था [क]वसाहोमहवनी । अप्राकृतकार्यापन्नत्वान्न प्राप्नुवन्ति जुहूधर्माः । व्यापृतायां तया होमाः प्राकृता हूयन्ते प्रायश्चित्ताद्याः। अतो जुहूधर्माः। जुह्वा तुल्यं जुहूवत् । सिद्धत्वात्सर्वस्यापवर्गोऽपि सम्मार्गस्य जुहूवत् । [1]उपभृद्वत् उपभृत्तुल्यम् । पृषदाज्येनानूयाजाः । प्रकृतौ[ख] चाज्येन तत् । पृषदाज्यं धारयतीति उपभृद्धर्माः ॥ ५ ॥

**आज्यं निरुप्य दधि निर्वपति । अधिश्रयणवर्जं दध्नि क्रियते ॥ ६ ॥**

दध्नि चाज्यधर्माः । तस्य त्वधिश्रयणं [2]श्रुति[ग]प्रतिषिद्धम् । अर्थविरोधाद्वा निवर्तते । विनाशमुपयाति दध्यधिश्रितमिति ॥ ६ ॥

**नैतस्य दध्नः संस्कारो विद्यत इत्यपरम् ॥ ७ ॥**

इत्यष्टमी कण्डिका

**असंस्कारो वा दध्नः । आज्यं प्रधानं तस्य पृषत्तागुणो दध्ना क्रियते । आज्यशब्दश्च न प्रच्यवते पृषदाज्यमिति । तच्च संस्कृतं क्षिप्यते । अतोऽसंस्कारो दध्नः । 'आज्येनोदेही'त्येव सम्प्रैषः । [3]सर्वश्चाविकृतम् । असंस्कारपक्षे आज्यदधिपानावह, स्वाहा देवा आज्यदधिपा**

क. वसाहोमार्थैव वसाहोमहवनी । वसाहोमस्तु प्रकृतौ न विद्यते । अतोऽप्राकृतकार्यत्वाज्जुहूधर्माणां न तत्र प्राप्तिर्भवति । परन्तु जुह्वा व्यापृतत्वे प्राकृताः प्रायश्चित्तहोमाः वसाहोमहवन्या क्रियन्ते । अतो जुहूधर्माणां प्राप्तिस्तत्र । अत एवोक्तं सूत्रकारेण जुहूवदिति ।

ख. दर्शेऽनूयाजाः आज्येन क्रियन्ते, पशौ च पृषदाज्येन । पृषदाज्यं च न द्रव्यान्तरम्, किन्तु पृषत्तारूपगुणविशिष्टमाज्यमेव । पृषत्ता च दधिमिश्रणसम्पादिता चित्रता । अतश्च द्रव्यान्तरत्वाभावात् उपभृत्कार्यकारित्वेन उपभृद्धर्मा इति । See पू. मी. १०-४-२६ ).

ग. " न दध्यधि श्रयति श्रृतश्हि तत् " इति श्रुतिः ।

1. Ad. & B. Mss. omit उपभृद्वत्
2. B. Ms. reads श्रुतिविप्रतिषिद्धम्
3. Ad. Ms. reads सर्वं चैवाविकृतम्

एवं प्रकारेषूहः । उपदेशः-संस्कारपक्षेऽपि नोहो [क]हौत्रे । [ख]आध्वर्यवे अदिती स्थो अच्छिद्रपत्रे [1]इति । [ग]एतस्य दध्नो न विद्यते चातुर्मास्येषु दध्नो नियतस्संस्कार इति ॥ ७ ॥

आज्यग्रहणकाले चतुर्जुह्वां गृह्णाति चतुरुपभृति ॥

चतुर्गृहीतवचनान्न लभ्यते पञ्चगृहीतं जुह्वाम् । नाप्युपभृति यद्यपि पञ्चप्रयाजार्था मन्त्रा इति उपदेशः ॥ १ ॥

दधन्याज्यमानीय "महीनां पयोऽसि" इति पृषदाज्यधान्यां पञ्चगृहीतं पृषदाज्यम् "ज्योतिरसि विश्वरूपं विश्वेषां देवानां समित्" इति वा ॥ २ ॥

आज्यं दधनि बह्वानीयते । तथाहि पृषत्तागुणो भवति "[घ]महीनां पयोऽसि" इति दुग्धान्तो मन्त्रः । "यावती" इति दधिघर्मे विनियुक्तत्वात् अस्तृतान्तं केचित् । पञ्चकृत्वो मन्त्रावृत्तिः । [ङ]सकृदुपदेशः ॥ २ ॥

चतुर्ध्रुवायाम् ॥ ३ ॥

तदनूयाजार्थम् । ध्रुवायामपि पञ्चगृहीतप्रतिषेधः । परमविकृतम् ॥ ३ ॥

सादनकाल आज्यानि सादयति ॥ ४ ॥

आज्यानि सादयतीति । अनाज्यत्वान्न साद्यते वसाहोमहवनी[2] ॥ ४ ॥

क. " तस्मादृचं नोहेत् " इति निषेधस्य बह्वृचमन्त्रमात्रविषयत्वादिति ।

ख. आध्वर्यवे तु आज्यस्थाल्यादानार्थे " अदितिरस्यच्छिद्रपत्रा " ( आप. श्रौ. २-६-१ ) इति मन्त्रे 'अदितीस्थो अच्छिद्रपत्रे ' इति द्विवचनान्तेनोहः कर्तव्य इति ।

ग. सूत्रे ' एतस्य ' इति प्रकृतस्यैव दध्नो ग्रहणात् अत्रैव संस्कारविकल्पो दध्नः । चातुर्मास्येषु तु पृषत्तासम्पादके दधनि संस्कारा नियमेन कर्तव्या एवेति ।

घ. " महीनां पयोऽसि विश्वेषां देवानाम् " इत्यारभ्य " वैश्वानरं पृश्नियै दुग्धं " इत्येतावत्पर्यन्तो मन्त्रः । तदुत्तरभागस्य " यावती द्यावापृथिवी " इत्यादेरन्यत्र विनियोगादिति । "ग्रह॰सहोर्जो गृह्णाम्यस्तृतम्" इत्यन्तो मन्त्र इति केषाञ्चिन्मतमिति ।

ङ. उपदेशमतं खण्डयति रुद्रदत्तः । ( see रुद्रदत्त com. on this Sutra. )

1. B. Ms. reads इति नैतस्य दध्नो विद्यते
2. Ad omits वसाहोमहवनी

## उपभृद्वत्पृषदाज्यधानीम् ॥ ५ ॥

उपभृद्वत् "उपभृदसि" इति पृषदाज्यधानीम् । न पृषदाज्यधान्यसीति । क्रमेण चासादनम्, "ऋषभोऽसि" इति स्रुवस्वधित्योरासादनं पर्यायेण प्रवृत्तत्वात् । युगपद्वा सम्भवात्–स्रुवस्वधिती । 'ऋषभौ स्थ' इति यथार्थमूहः । तथा [क]याजमानम् । यदा पर्यायेण "अयं स्वधितिरभिजिहर्ति होमान्" इति । यदा तु युगपत् "स्योनौ मे सीदतम्" "[1]इमौ स्रुवस्वधिती अभिजिह्वतो होमान्" इति । [ख]पृथक्पाकाद्धृदयस्य सान्नाय्यवदभिघारणे प्राप्ते पृषदाज्येन विधीयते । अतस्स्थालीगतमपि प्राकृतकार्यं करोति इयं स्थाली दध्नः पूर्णेति भवति । युगपच्चेत् इमे स्थाल्यौ [2]घृतस्य दध्नः पूर्णे इति । न [ग]स्वधितेरासादनमुपदेशः ॥ ५ ॥

## पूर्ववदाज्यान्यभिमन्त्र्याग्रेणाहवनीयं यूपावटं परिलिखत्यर्धमन्तर्वेदि अर्धं बहिर्वेदि ॥ ६ ॥

"इदं विष्णुर्विचक्रम" इत्यधिश्रयणादाज्यस्य वैष्णवत्वम् । दध्नस्त्वधिश्रयणं नास्तीत्यवैष्णवत्वम् । अतः पृषदाज्यधानीस्थस्य संस्कार-

क. " अयꣳस्रुवो अभिजिघर्ति " इति मन्त्रे यजमानप्रयोज्ये स्रुवपदस्थाने स्वधितिपदं प्रयोक्तव्यमिति । एवं युगपत्प्रयोगे " स्योनो मे सीद सुषदः पृथिव्याम् " इत्यत्र ' स्योनौ मे सीदतं सुषदौ ' इत्यूहः कर्तव्यः । 'इमौ स्रुवस्वधिती अभिजिह्वत ' इति द्विवचनान्तेनोह इति । ( see आप. श्रौ. ४. ७. २. for those Mantras. )

ख. हविःपाककाले हृदयस्य पृथक् चिह्नं कृत्वा कुम्भ्यामेव पाकः क्रियते । अतस्तस्याभिघारणं सान्नाय्यवदाज्येन प्राप्तम् , तद्बाधित्वा पृषदाज्येन तत्कर्तव्यत्वेन विधीयते " पृषदाज्येन हृदयमभिघारयत्युत्तरतः परीत्य " ( आप. श्रौ. ७. १३. ७. ) इति । एवञ्च दध्नोऽपि आज्येन हविरभिघारणार्थत्वेन प्राकृतकार्यकारित्वेन दधिस्थाल्यनुमन्त्रणार्थे मन्त्रे " इयꣳस्थाली दध्नः पूर्णा " इत्यूहः पृथगनुष्ठानपक्षे । यदा तु युगपत् स्थाल्योरासादनं क्रियते तदा ' इमे स्थाल्यौ घृतस्य दध्नः पूर्णे ' इति मन्त्रपाठ इति ।

ग. ' स्रुचस्समार्ष्टी 'ति स्रुचां संमार्गं विधायानन्तरं ' स्रुवमग्रे ' इति ब्राह्मणोक्तेः ' स्रुचः प्रस्तरे सादयति ' ( आप. श्रौ. २. ९. १९. ) इति विधायानन्तरं दक्षिणेन जुहूं स्रुवं सादयति ' इति सूत्रकारोक्तेश्च स्रुक्शब्देन स्रुवग्रहणेऽपि स्वधितेर्ग्रहणे प्रमाणाभावात् स्वधितेरासादनाप्राप्तेरेव नासादनमित्युपदेशमतमिति ।

1. 'क' omits इमौ
2. Ad omits घृतस्य

पक्षेऽपि न स्यादभिमन्त्रणम्–विष्णूनि स्थ वैष्णवानि इति। [क]गौणत्वाद्वैष्णवत्वस्य पूर्ववदाज्यानां सर्वेषामभिमन्त्रणम्। [1]केचित्पूर्वग्रदवह्णात् पृषदाज्यधानीस्थस्य न कुर्वन्त्यभिमन्त्रणम्। [ख]यूपाङ्गं वेद्यर्धम्। अतः प्राच्येकादशिन्यां यावद्यूपं वेदिः ॥ ६ ॥

पूर्ववदभ्रेरादानं परिलेखनञ्च। अथ खनाति यथानाविरुपरं भवति ॥ ७ ॥

अनाविः अप्रकाशः यथा भवत्युपरं तावन्मात्रोऽवटः खन्यते ॥ ७ ॥

अग्रेणावटं प्राञ्चं यूपं निधाय "यत्ते शिक्वः परावधीत्तक्षा हस्तेन वास्या। आपस्तत्सर्वं जीवलाश्शुन्धन्तु शुचयश्शुचिम्" इति यूपं प्रक्षाल्याथैनं यवमतीभिः प्रोक्षति "पृथिव्यै त्वा" इति मूलम् "अन्तरिक्षाय त्वा" इति मध्यम् "दिवे त्वा" इत्यग्रम् ॥ ८ ॥

यवो यासु विद्यते ता यवमत्यः। केचित्तु [ग]जातिः ॥ ८ ॥

"शुन्धतां लोकः पितृषदन" इति प्रोक्षणीशेषमवटे निनीय [१]"यवोऽसि" इति यवमवास्य "पितृणाꣳसदन-

क. पक्षान्तरमुच्यते गौणत्वादिना। प्रकृतावाज्यानां विष्णुसंबन्धो नास्ति, किन्तु–अधिश्रयणमन्त्रस्य वैष्णवत्वात् तत्संबन्धमात्रेण तत्र गौणमेव वैष्णवत्वम्। अतः प्रकृतावसमवेतार्थत्वात् अत्रापि पृषदाज्ये तथैव प्रवृत्तिसम्भवादभिमन्त्रणं भवत्येवेति।

ख. "अर्धमन्तर्वेदि मिनोति" इति विधानात् वेदेरेकदेशोऽवटस्य पश्चार्धो यूपाङ्गम्। अतश्च यूपैकादशिन्यां सर्वेषां यूपानां वेद्येकदेशलाभार्थं यावद्यूपं वेदेः प्राग्भागो वर्धनीय इति। इदं तु मीमांसकमतविरुद्धम्। ते हि तत्र वेदेरवृद्धिमेव सिद्धान्तयन्ति। see पू. मी. ३. ७. ७. ) परन्तु खण्डदेवो याज्ञिकमतमेवानुसरति। see भा. दी. पृ. ४६. Vol. II Mysore ed.)

ग. जातिः जननम्। यावतीष्वप्सु सतीषु यवा उत्पद्येरन् यवप्ररोहणयोग्या इति यावत्। तावतीभिरद्भिः प्रोक्षणमिति।

1. 'ङ' reads केचित्तु

१. यवोऽसि यवयाऽस्मद्द्वेषो यवयारातीः ॥ ( तै. सं. १-३-६-१ )

मसि" इति बर्हिषावस्तीर्य[१] "स्वावेशोऽसि" इति प्रथम-परापातिनं शकलमवास्य "घृतेन द्यावापृथिवी आपृणे-थाम्" इति स्रुवेण शकले हुत्वा ॥

इति नवमी कण्डिका

पितॄणां सदनं यस्मिन् लोके नान्येषां य इज्यन्ते स पितृषदनो लोकः। सदनं स्थानम्। शुन्धतां शुद्धमस्तु। स्थास्यन्त्यस्मिन् पितर इति अस्य पित्र्यत्वम्। पितॄणामसि सदनं न देवानां य इज्यन्ते। पितरस्तु स्थास्यन्ति इति बर्हिषश्च। अतः [क]प्राचीनावीती करोत्युभयम्। केचिदपित्र्यत्वं लोकबर्हिषोरभिधानात्। [1]तेषां 'स्वधा पितृभ्य ऊर्भव बर्हिषभ्य' इत्युदकाभिधानादपित्र्यत्वम्। अवसानम् अवटे क्षेपो यव जातेः बर्हिषश्च शकलस्य च। अवटसंस्कारः सह होमेन। अत [ख]उपशये निवर्तते। स्रुववचनादिह [ग]व्यापृतायां जुह्वां वसाहोमहवन्या होमः ॥

यूपायाज्यमानायानुब्रूहि इति सम्प्रेष्यत्यज्यमाना-यानुब्रूह्यञ्जमो यूपमनुब्रूहीति वा ॥ १ ॥

अथैनमसंस्कृतेनाज्येन यजमानोऽग्रतश्शकलेना-नक्ति ॥ २ ॥

क. पितॄणामित्यादि पितर इत्यन्तं "शुन्धतां लोकः पितृषदन" इत्यस्य व्याख्यानम्। पितॄणामसि सदनमित्यादि स्थास्यन्तीत्यन्तं "पितॄणां सदनमसि" इत्यस्य व्याख्यानम्। अत उभयोः यूपावटनिनयनबर्हिस्तरणयोः पित्र्यत्वात् उभयमपि प्राचीनावीतिनैव कर्तव्यमिति।

ख. यूपैकादशिन्यामन्तिमयूपसमीपे स्थाप्यमानः यूपसदृशः काष्ठविशेष उपशयः। तत्र यूपसंस्कारा अवटादयश्च न सन्ति।

ग. उपपादितमिदं पुरस्तात्।

1. Ad Ms. adds पक्षे after तेषां

१. स्वावेशोऽस्यग्रेगा नेतॄणां वनस्पतिरधित्वा स्थास्यति तस्य वित्तात्।

अञ्जनेऽसंस्कृतस्य विधानात् प्राकृतेन सर्वकार्याणि। अग्रादारभ्य मूलाच्चषालाञ्जनादि आध्वर्यवम्। "यजमानमेव नेञ्जसानर्ता" इति अग्निष्ठायां दर्शनात् ॥ १ ॥

"ऐन्द्रमसि" इति चषालमङ्क्त्वा "सुपिप्पलाभ्यस्त्वौषधीभ्यः" इति प्रतिमुच्य "देवस्त्वा सविता मध्वानक्तु" इति स्रुवेण सन्ततमविच्छिन्दन् अग्निष्ठामश्रिमनक्त्योपरात् ॥ ३ ॥

लगनं प्रतिमोकः। सन्ततया धारया अविच्छिन्दन् [क]अग्निष्ठा सर्वा यथाज्यते ॥ ३ ॥

रशनादेशे त्रिस्सर्वतो यूपं सम्मृशति ॥ ४ ॥

आञ्जनादि यूपं यजमानो नोत्सृजत्या परिव्ययणात् ॥ ५ ॥

"[ख]परिवीः" इत्युत्सृजते ॥ ५ ॥

'यूपायोच्छ्रियमाणायानुब्रूहि' इति सम्प्रेष्यति 'उच्छ्रियमाणायानुब्रूहि' इति वा ॥ ६ ॥

[1]"उद्दिवꣳ स्तभानान्तरिक्षं पृण" इत्युच्छ्रयति ॥ ७ ॥

[2]"ते ते धामानि" इत्यवटेऽवदधाति ॥ ८ ॥

क. "यूपमष्टाश्रिं कुर्यात्" इति विहितम्। तत्राष्टास्वश्रिषु या आहवनीयस्य पुरस्तात्तिष्ठति साऽग्निष्ठाऽश्रिः। अश्रिः कोणः। 'पहल्' इत्युच्यते हिन्दीभाषायाम्, द्राविडभाषायां 'पट्टै' इति।

ख. "परिवीरसि" इति मन्त्रमध्वर्योः श्रुत्वा यजमानः यूपमुत्सृजेदिति यूपस्पर्शनस्योत्तरावधिरुच्यते।

१. उद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृꣳह।

२. ते ते धामान्युश्मसी गमध्ये गावो यत्र भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरेः।

[1]"विष्णोः कर्माणि पश्यत" इति द्वाभ्यामाहवनीये-नाग्निष्ठां सम्मिनोति ॥ ९ ॥

यं कामयेत तेजसैनमित्युक्तम् ॥ १० ॥

आहवनीयमभिमुखीक्रियते । [क]अग्निष्ठा इत्थं वेत्थं वा दक्षिणत उत्तरतो वा आहवनीयस्य स्थाप्यते, न तुल्यम् । अतिचालनमतिनावनम् । इतो वेतोवा न चालयेदिति प्रतिषेधार्थः । सम्मानमाहवनीयतुल्यं स्थापनम् ॥ ९-१० ॥

अग्रमाहवनीयमुपनतं यूपस्यावनतं मूलम् ॥ ११ ॥

आहवनीयं प्रत्युपनतमग्रम्, मूलन्तु पुरतः स्थितम् ॥ ११ ॥

अनाविरुपरं कृत्वा [2]"ब्रह्मवनिं त्वा क्षत्रवनिम्" इति प्रदक्षिणं पांसुभिः पर्यूह्य [3]ब्रह्म दृꣳह क्षत्रं दृꣳह" इति मैत्रावरुणदण्डेन समंभूमि परिदृंहणं कृत्वा ॥ १२ ॥

इति दशमी कण्डिका

पर्यूहणं पांसुभिर्वेष्टनं यूपभूमेः । परिदृंहणं कुट्टनं मैत्रावरुणदण्डेन [1]समं भूम्या करोतीति ॥ १२ ॥

[4]"उन्नम्भय पृथिवीम्" इत्यद्भिः परिषिञ्चति ॥

सन्ततस्सेकः परिषेकः ॥ १ ॥

क. यं कामयेत तेजसैनं देवताभिरिन्द्रियेण व्यर्धयेयमित्यग्निष्ठां तस्याग्निमाहवनीयादित्थं वेत्थं वातिनावयेत् तेजसैवैनं देवताभिरिन्द्रियेण व्यर्धयति" इत्युक्तं ( तै. सं. ६. ३. ४. ) ब्राह्मणे । तस्य व्याख्यानमिदम् अग्निष्ठेत्यादि ।

1. B. Ms. reads सम्मितं for समं.

१. विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यस्सखा ॥

२. ब्रह्मवनिं त्वा क्षत्रवनिं सुप्रजावनि ꣳ रायस्पोषवनिं पर्यूहामि ॥ ( तै. सं. १-३-६-२ )

३. ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह ।

४. उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः । उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिम् ॥ ( तै. सं. २-४-८-२ )

दर्भमय्यौ रशने भवतः । द्विगुणा द्विव्यायामा पशुरशना त्रिगुणा त्रिव्यायामा यूपस्य ॥ २ ॥

यूपरशनाप्रविष्टैर्दर्भैः, पिष्टनमयेति लिङ्गात् ॥ २ ॥

"देवस्य त्वा सवितुः प्रसव" इति रशनामादाय "विष्णोः कर्माणि पश्यत" इति सरशनेन पाणिना यूपमुन्मार्ष्टि ॥ ३ ॥

उन्मार्ष्टि मूलादारभ्याग्रात् ॥ ३ ॥

[1]"तद्विष्णोः परमं पदम्" इत्यग्रं प्रेक्षते । 'यूपाय परिवीयमाणायानुब्रूहि' इति सम्प्रेष्यति । 'परिवीयमाणायानुब्रूहि' इति वा ॥ ४ ॥

'परिवीरसि' इति नाभिदघ्ने रशनया त्रिः प्रदक्षिणं यूपं परिव्ययति मध्यदेशे वा ॥ ५ ॥

नाभितुल्यमध्वर्योर्यजमानस्य वा परिव्ययणं, मध्यदेशे वा सह निखातेन ॥ ४, ५ ॥

[क]यं कामयेतोर्जैनमित्युक्तम् ॥ ६ ॥

यूपस्यावाचीनमधः, मध्यदेशादुपरिष्टाद्वा अवोहेत् सारयेत परिवीताम् ॥ ६ ॥

अधोदूरं परिव्ययेत् वृष्टिकामस्योपरिदूरमवृष्टिकामस्येत्येके ॥ ७ ॥

क. "यं कामयेतोर्जैनं व्यर्धयेयमित्यूर्ध्वा वा तस्यावाचीं वाऽवोहेदूर्जैवैनं व्यर्धयति" इत्युक्तं ब्राह्मणे । तद्व्याख्यानमिदम् ।

1. B. Ms.1 adds समूहेत् after सारयेत्; B. Ms.2 reeds साधयेत.

१. तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ ( तै. सं. १-३-६-२. )

वृष्टिकामस्य तु मध्यस्य [1]अधस्तादूरं परिव्ययति ॥

यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषज्य न प्रवेष्टयेत् ॥ ८ ॥

स्त्र्यस्य जायेतेति उपान्ते तयोस्समीपं व्यतिषज्यान्योन्यस्य उपरि कृत्वा न प्रवेष्टयति ॥ ८ ॥

यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्रवेष्ट्य अणिमति स्थविमत् प्रवीय "दिवस्सूनुरसि" इति स्वरुमादाय "अन्तरिक्षस्य त्वा सानाववगूहामि" इत्युत्तरेणाग्निष्ठां मध्यमे रशनागुणेऽवगूहति ॥ ९ ॥

उत्तमे सर्वेषु वा । द्वयोरधरयोरिति वाजसनेयकम् ॥ १० ॥

इत्येकादशी कण्डिका

आन्तं यावदन्तम् तावद्वेष्टयति । परिवीतशेषे रशनाभागे अणुमति तनुर्यः प्रदेशः, स्थविमत् स्थूलप्रदेशः, परिवीय निक्षिपति स्थूलप्रदेशं तनौ प्रदेशे । तथा कार्यं यथा समावन्तौ । रशनागुणः रशनाया मध्यमो वेष्टन भागः, तत्रैनं क्षिपति ॥ ९, १० ॥

इति धूर्तस्वामिविरचिते आपस्तम्बश्रौतसूत्रभाष्ये

सप्तमप्रश्ने तृतीयः पटलः ॥

चतुर्थः पटलः

पशुं स्नपयन्ति कूटकर्णकाणखण्डवण्डश्रोणसप्तशफवर्जम् ॥ १ ॥

1. B. Ms.2 reads अधस्तादूरपरिव्ययणमेव.

पशुः छागो [क]मन्त्रवर्णात्–"छागस्य वपाया मेदसोऽनुब्रूहि" इति । कूटः एकशृङ्गः । कर्णः छिन्नकर्णः । काणः यो न पश्यति एकेन चक्षुषा । खण्डः भग्नदन्तः । षण्डः यो न विवर्धते, केचित् शिपिविष्टम् छिन्नपुच्छं केचित् । श्रोणः स्फोटको बधिरो वा । सप्तशफः सप्तखुरः । एतान् वर्जयित्वाऽन्यस्य स्नपनमृत्विग्भिः कार्यम् ॥ १ ॥

यद्यङ्गहीनस्स्यादङ्गतो वा विरुज्येत ॥ २ ॥

अथैकेषां वैष्णवीमाग्नावैष्णवीं सारस्वतीं बार्हस्पत्यामिति च हुत्वा प्रयोजयेत् ॥ ३ ॥

योऽपन्नदन् मलं तत्पशूनामिति विज्ञायते ॥ ४ ॥

अपन्नदन् अपतितदन्तः । मलं पापं पशूनामपतितदन्तत्वम् । अतस्तद्गुणो नालब्धव्यः । निन्दा प्रतिषेधार्था । यथा गच्छतस्ते ध्रुवं मरणमित्युक्ते गमनं प्रतिषिद्धं भवति । एते प्रतिषिद्धाः प्रतिनिधयोऽपि न कर्तव्याः । प्रतिषेधाच्च प्रतिनिधिर्निवर्तत इति । केचित्तु जात्यन्तराद्वरो जातिमानिति कुर्वन्ति ॥ ४ ॥

"इषे त्वा" इति बर्हिषी आदत्ते । "उपवीरसि" इति प्लक्षशाखां बहुपर्णशाखामप्रतिशुष्काग्रामसुषिराम् ॥ ५ ॥

"इषे त्वा" इत्यावृत्तिर्दर्भयोः, एकवचनत्वात् । [ख]युगपदुपदेशः । प्लक्ष [1]आम्रपिप्पली ॥ ५ ॥

यं कामयेतापशुस्स्यादित्यपर्णया तस्य शुष्काग्रयोपाकुर्यात् । तृणेनोपाकरोतीत्येके ॥ ६ ॥

क. वपाहोमार्थे प्रैषे ' छागस्य वपाया मेदसोऽनुब्रूहि ' इति छागपदश्रवणादुत्पत्तिवाक्येऽविशेषेण श्रुतः पशुशब्दः छागपरतया नीयत इति । इदं च ' छागो वा मन्त्रवर्णात् ' ( जै. सू. ६. ८. ३१. ) इति पूर्वमीमांसायां सिद्धान्तितम् ।

ख. एकवचनं जात्यभिप्रायमिति कृत्वा द्वयोरपि बर्हिषोः तथैव प्रयोगो मन्त्रस्य युगपदुपादीयमानयोरित्युपदेश इति ।

1. 'ङ' reads आम्रपिप्पला

बर्हिर्भ्यां प्लक्षशाखया च पुरस्तात्प्रत्यञ्चं पशुमुपाकरोति—"[1]उपो देवान् दैवीर्विशः, प्रजापतेर्जायमाना" इति चैताभ्यामुपस्पृशन् 'इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमि' इति ॥ ७ ॥

एकेन वा तृणेन प्लक्षशाखया च तदा तृणविभागः। अर्धमधस्तादुपासने साग्रं वपान्तर्धाने। पुरस्तादाहवनीयस्य प्रत्यङ्मुखस्य। [क]उपाकरणं स्पर्शनं शाखया तृणाभ्याञ्च। यजुषा ऋग्द्वयेन चोपस्पर्शनं कुर्वन्ति[1], 'इन्द्राग्निभ्यां जुष्टमुपाकरोमि' इत्याह ॥ ७ ॥

पञ्चकृत्वो देवतोपदेशनमुपाकरणे, नियोजने, प्रोक्षणे, वपाया उद्धरणे, हृदयस्याभिघारण, इति ॥ ८ ॥

पञ्चकृत्वः पञ्चस्वपि देवतोपलक्षणेषु। [2]यथोपाकरणे विभक्तिः सैव सर्वत्र चतुर्थी, पुनरुपाकरणग्रहणात् ॥ ८ ॥

"[2]प्रजानन्तः प्रतिगृह्णन्ति पूर्वं" इति पञ्च हुत्वाऽग्निं मन्थति ॥ ९ ॥

क. देवतार्थत्वेन सङ्कल्पनमुपाकरणमिति रुद्रदत्तः।

1. 'क' 'घ' reads कुर्वन्; B. Ms. adds उपस्पृशन् उपस्पर्शनं कुर्वन्
2. 'ङ' reads अथोपाकरणे

१. उपो देवान् दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्ताम्।
प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः। तस्मै प्रति प्रवेदय चिकित्वाँ अनुमन्यताम् ॥
इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये।
अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् ॥ (तै. सं. ३-४-४-१)

२. प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम्।
सुवर्गं याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥ १ ॥
येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम्।
निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु ॥ २ ॥
ये बध्यमानमनुबध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च।
अग्निस्ताँ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः ॥ ३ ॥
य आरण्याः पशवो विश्वरूपा विरूपास्सन्तो बहुधैकरूपाः।
वायुस्ताँ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः ॥ ४ ॥
प्रमुञ्चमाना भुवनस्य रेतो गातुं धत्त यजमानाय देवाः।
उपाकृतँ शशमानं यदस्थाज्जीवं देवानामप्येतु पाथः ॥ ५ ॥

उपाकृतहोमा आज्यस्थाल्या एव । ध्रौवात्पूर्वाघारमेव प्राजापत्यमिति तत उत्तरं ध्रुवात एवाहवनीयहोमाः । "[क]अप्येव नोऽत्रास्त्विति" देवैः प्रजापतिर्याचित इति लिङ्गात् । लौकिकादाज्यादिति [1]भवदासमतिः । तस्य यूपाञ्जने प्रकृतत्वात् । यदाग्निं मथित्वोपाकरणं, तदा होमोऽपि पश्चादुपाकृत्य पशुं जुहोतीति ॥ ९ ॥

" अग्नेर्जनित्रमसि " इत्यधिमन्थनशकलं निदधाति । " वृषणौ स्थ " इति प्राञ्चौ दर्भौ ॥ १० ॥

पूर्वसङ्कल्पितस्य मन्थनार्थस्य शकलस्य निधानम् ॥

" उर्वश्यसि " इति अधरारणिमादत्ते "पुरूरवा" इत्युत्तरारणिम् ॥ ११ ॥

" देवो वाꣳसविता मध्वानक्त " इत्याज्यस्थाल्या बिलेऽङ्क्त्वा "घृतेनाक्ते वृषणं दधाथाम्" इत्युभे अभिमन्त्र्य " आयुरसि " इति समवधाय ॥ १२ ॥

इति द्वादशी कण्डिका

केचिल्लौकिक्या आज्यस्थाल्या बिले मुखे बिलगतेनैवाज्येनाञ्जनम् समवधानं सङ्गमनमरण्योः ॥ १० ॥ ॥ ११ ॥ ॥ १२ ॥

" अग्नये मथ्यमानायानुब्रूहि " इति सम्प्रेष्यति । मथ्यमानायानुब्रूहि इति वा ॥ १ ॥

क. "प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स आत्मन्नाज्यमधत्त तं देवा अब्रुवन्नेष वाव यज्ञो यदाज्यमप्येव नोऽत्रास्त्विति, सोऽब्रवीत् यजान् व आज्यभागावुपस्तृणानभिघारयान् इति " ( तै. सं. २. ६. ३. १. ) यज्ञान् सृष्ट्वा तान् देवेभ्यो विभजन् प्रजापतिः प्रथममाज्यं स्वस्मिन्नेव स्थापयामास, न देवेभ्योऽदात् । तद्दृष्ट्वा देवा अत्राप्यस्माकं भागोऽस्तु इत्यब्रुवत् इत्यादि ।

1. A 1 reads भवदेवमतिः for भवदासमतिः

प्रथमायां त्रिरनूक्तायां त्रिः प्रदक्षिणमग्निं मन्थति । "गायत्रं छन्दोऽनुप्रजायस्व" इति प्रथमम् "त्रैष्टुभं" इति द्वितीयम् "जागतम्" इति तृतीयम् । ततो यथा प्राशु मन्थति ॥ २ ॥

प्राशुः शीघ्रवाची, निरुक्तेः ॥ २ ॥

यदि मथ्यमानो न जायेत राक्षोघ्नीरनुब्रूयात् ॥

राक्षोघ्नीः "अग्नीरक्षांसि सेधति" इति तिस्र आवर्तयति यावदग्निः पतति । कृणुष्वपाजीया वा । पतिते 'धनञ्जय' मिति प्रतिपद्यते ॥ ३ ॥

"जातायानुब्रूही"ति जाते सम्प्रेष्यति । प्रह्रियमाणायेति प्रहरन् ॥ ४ ॥

प्रहरन् प्रहरिष्यामीति वर्तमानवत् । उत्तरपरिधेरग्रेण प्रवेश्यते ॥४॥

[१]"भवतं नस्समनसौ" इत्यग्रेणोत्तरं परिधिमाहवनीये प्रहरति सन्धिना वा ॥ ५ ॥

[1]निर्मथितसन्धिना वा ॥ ५ ॥

[२]"अग्नावग्निश्चरति प्रविष्टः" इति प्रहृत्य स्रुवेणाभिजुहोति ॥ ६ ॥

उत्तरेण प्रहृत्य प्रायश्चित्तमप्यकृत्वा स्रुवेणोपरि जुहोति ॥ ६ ॥

1. B. Ms. reads निर्गच्छताग्निः for निर्मथित

१. भवतन्नस्समनसौ समोकसावरेपसौ । मा यज्ञꣳहिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥

२. अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः । स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया कर्मभागधेयम् ॥ ( तै. सं. १-३-९-२ )

सावित्रेण रशनामादाय पशोर्दक्षिणे बाहौ परिवीयोर्ध्वमुत्कृष्य "ऋतस्य त्वा देवहविः पाशेनारभ" इति दक्षिणेऽर्धशिरसि पाशेनाऽक्ष्णया प्रतिमुच्य "धर्षा मानुषान्" इत्युत्तरतो यूपस्य नियुनक्ति । दक्षिणत ऐकादशिनान् ॥ ७ ॥

आदद इत्यादानं सावित्रेण । मुखस्य पश्चादुत्तरो भवति । दक्षिणतस्तस्मिन्[1] बध्वा [2]ऊर्ध्वं धारयति । अर्धं शिरसः अर्धशिरः, तस्मिन् ।

"अद्भ्यस्त्वौषधीभ्यः प्रोक्षामि" इति प्रोक्षति । "अपां पेरुरसि" इति पाययति ॥ ८ ॥

"अद्भ्यस्त्वौषधीभ्य इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि" इति प्रोक्षणम् । "अभ्यस्त्वौषधीभ्यः प्रोक्षामीन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि इति केचित् प्रोक्षणान्तस्य; सूत्रकारेण परिपाठात् । अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीन्द्राग्निभ्यां त्वा जुष्टम् इत्युपदेशः । प्रोक्षणं पायनं पुनः प्रोक्षणमिति त्रयः पदार्थाः । केचिन्मेध्यकरणत्वादयमेकः पदार्थ [क]इति । उपरिष्टात्प्रोक्षति उपरिष्टादेवैनं मेध्यं करोति" इति । तदा पदार्थत्रयमेकैकस्य पशोः ॥ ८ ॥

क. "उपरिष्टात्प्रोक्षति उपरिष्टादेवैनं मेध्यं करोति, पाययत्यन्तरत एवैनं मेध्यं करोति । अधस्तादुपोक्षति सर्वत एवैनं मेध्यं करोति" ( तै. सं. ६. ३. ६. ) इति श्रुतौ त्रयाणां मेध्यकरणरूपैकार्थत्वकथनादेकपदार्थत्वमवसीयते । अतः पशुगणे त्रितयेनानुसमयः । त्रयमेकत्र कृत्वाऽपरत्र कर्तव्यमिति । भाष्यकारमतं तु प्रथमप्रोक्षणद्वितीयप्रोक्षणयोर्मध्ये पायनविधानात् न त्रयाणामेकपदार्थता, किन्तु भेद एव । मेध्यकरणकथनं तु अर्थवादः । अतः पृथगेवानुसमय इति ।

1. 'ब' reads दक्षिणस्तस्मिन्
2. B. Ms. reads ऊर्ध्वं धारयेति

"स्वात्तं चित्सदेवꣳहव्यमापो देवीस्स्वदतैनम्" इत्युपरिष्टादधस्तात्सर्वतश्च प्रोक्ष्य वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते ॥ ९ ॥

इति त्रयोदशी कण्डिका

वेदं निधाय सामिधेनीभ्यः, सामिधेन्यर्थं यत्कृत्वा प्रकृतौ प्रतिपद्यते तत्तावत्करोति । वेद्यन्तपरिस्तरणम् । होतृषदनपरिकल्पनञ्च केचित्त्यजन्ति, अपरिपाठात् ॥ ९ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिविरचिते

सप्तमप्रश्ने चतुर्थः पटलः

पञ्चमः पटलः

स्रुच्यमाघार्य प्रत्याक्रम्य जुह्वा पशुं समनक्ति—"सन्ते प्राणो वायुना गच्छताम्" इति शिरसि । "सं यजत्रैरङ्गानि" इत्यंसोच्चलयोः । "सं यज्ञपतिराशिषा" इति दक्षिणस्यां श्रोण्याम् ॥ १ ॥

अंसोच्चलयोः अंसयोर्ये उच्चलनस्थाने तयोरञ्जनम् । श्रोणिः कटिः । स्रुचा हूयते स्रुच्यम् ॥ १ ॥

ध्रुवासमञ्जनादि कर्म प्रतिपद्यते समानमा प्रवरात् । षडृत्विजः ॥ २ ॥

षडृत्विजः पशुबन्धस्य कर्म कुर्वन्ति । यद्यपि शमिता श्रपणकर्म करोति, तथापि न [क]भवत्यृत्विक् । अतस्सामान्ययोगाच्चोदनासु नाऽऽद्रियते ॥ २ ॥

क. विश्वसृजामयनाख्ये सहस्रसंवत्सरसाध्ये सत्रे गृहपतिं ब्रह्मप्रभृतीन् षोडशर्त्विजश्चानुसंख्याय ततः "शमितोग्रो विशां पतिः" ( तै. ब्रा. ३. १२. ९. ३, ४. ) ( काठ. ३-१२. ) इति अध्वर्य्वादेः पृथक्त्वेन शमितुः निर्देशात् इडाभक्षणे च "उपहूतां मैत्रावरुणषष्ठा भक्षयन्ति, प्रतिप्रस्थाता सप्तमः" इति शमितुरनुपादानाच्च ऋत्विग्भ्योऽन्य एव शमिता । तस्य ऋत्विक्कार्यकर्तृत्वेऽपि सोमे चमसाध्वर्युवत् नर्त्विक्त्वम् । अतश्च ऋत्विक्सामान्योद्देशेन विहितेषु मार्जनादिव्यापारेषु न शमितुस्सम्बन्ध इति ।

दैवं च मानुषञ्च होतारौ वृत्वा पुनराश्राव्य मैत्रावरुणं प्रवृणीते—मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादिति ॥

[क]दैवो होता "अग्निर्देवो होता" इति। "असौ मानुषः" इति मानुषः। तौ वृत्वा, कृत्वाऽऽश्रुतप्रत्याश्रुते, मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादिति। देवदत्तो मानुष इति मानुषोऽपि, होतृविकारत्वात्। उपदेशो न क्रियते मानुष इति ॥ ३ ॥

तिष्ठति पशौ एकादश प्रयाजान् यजति ॥ ४ ॥

एकादश [ख]प्रयाजान् यजत्यस्मिन् कर्मणि। तांश्च तिष्ठति पशौ ये सम्भवन्ति दश। वाजपेये त्वेकादशापि सारस्वतप्रभृतिषु तिष्ठत्सु ॥ ४ ॥

"समिद्भ्यः प्रेष्ये"ति प्रथमं सम्प्रेष्यति "प्रेष्य" प्रेष्येतीतरान् ॥ ५ ॥

चतुर्थाष्टमयोः प्रतिसमानीय दशमैकादशायाऽऽज्यमवशिनष्टि ॥ ६ ॥

तान् यजमानः प्राकृतैरादितश्चतुर्भिश्चतुरोऽनुमन्त्र्य चतुर्थस्याऽनुमन्त्रणेन दुरः प्रभृतींस्त्रीनुत्तमेन शेषम् ॥

क. see आप. श्रौ. २. १६. ९. and १६.

ख. सूत्रे तिष्ठति पशौ एकादश प्रयाजान् यजति इत्युक्तम्। तदसम्भवदोषग्रस्तम्, एकादशस्य प्रयाजस्य वपाश्रपणकालोत्तरकालं सूत्रकारेणैव विधानात्। अतस्सूत्रमिदं विभज्य व्याख्येयम्। तदित्थ—तिष्ठति पशौ इत्येकं सूत्रम्। एकादश प्रयाजान् यजति इत्यपरम्। तत्र द्वितीयसूत्रं प्रथमं व्याख्येयम्—अस्मिन् पशुयागे एकादश प्रयाजान् यजति। ततः पूर्वसूत्रव्याख्या। तत्र सम्भवत इत्यध्याहार्यम्। ततश्च ये सम्भवन्ति ते तिष्ठत्येव पशौ न निषण्णे। प्रकृते दश प्रयाजाः। वाजपेये च तिष्ठत्सु पशुषु एकादशापि प्रयाजाः क्रियेरन्। तेषां पशूनां ब्रह्मसामकाले आलम्भोत्कर्षविधानादिति।

आदितः प्रथमप्रयाजप्रभृति । अष्टमादय उत्तमविकाराः । बर्हिस्स्वाहाकारार्थं समानयनमित्युत्तमविकारेष्वपि समानयनपुनर्वचनाच्च । चतुर्थोत्तमविकारा आगन्तवस्तन्मध्यपातात्तत्र समविभागेन विकाराः । हेमन्तशिशिराविति प्रयाजशेषस्यानुमन्त्रणम् ॥

प्रत्याक्रम्य जुह्वा स्वरुस्वधिती अनक्ति । त्रिः स्वरुं सकृत्स्वधितेरन्यतरां धाराम् ॥ ८ ॥

अन्यतरा धारा एकतरा धारा ॥ ८ ॥

स्वरुमन्तर्धाय स्वधितिना पशुं समनक्ति "घृतेनाक्तौ पशुं त्रायेथाम्" इति शिरसि ॥ ९ ॥

स्वरुरधस्तादुपरि स्वधितिः । ताभ्यामञ्जनं पशोः ॥ ९ ॥

न वा स्वधितिना, स्रुवेणैव ॥ १० ॥

एकेनापि अञ्जनं स्वरुणा, अविकृतो मन्त्रः । " घृतेनाक्तः पशुं त्रायस्व " इति उपदेशः । पुनर्यूपे क्षिप्यते स्वरुः ॥ १० ॥

अक्तया शृतस्याऽवद्याति पशुमितरया विशास्ति ॥ ११ ॥

घृताक्तया धारया पक्वस्य पशोरवदानम् । अनक्तया विशसनम् ॥ ११ ॥

शमित्रे स्वधितिं प्रयच्छन्नाह—शमितरेषा तेऽग्निः स्पष्टाऽस्त्विति ॥ १२ ॥

इति चतुर्दशी कण्डिका

स्पष्टाऽस्तु विदिता भवतु । एषाऽग्निरक्ता अनक्तया त्वं विशसनं कुरु ॥ १२ ॥

"पर्यग्नये क्रियमाणायाऽनुब्रूही" ति सम्प्रेष्यति । पर्यग्नयेऽनुब्रूहीति वा ॥ १ ॥

आहवनीयादुल्मुकमादायाऽऽग्नीध्रः [1]"परिवाजपतिः कविः" इति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुं यूपमाहवनीयं शामित्रदेशं चात्वालम् । आज्यानि चेत्येके ॥ २ ॥

पर्यग्नये [क]समन्ततोऽग्नये क्रियमाणायाऽनुब्रूहीति प्रैषार्थः ॥

पशुमेव त्रिः पर्यग्नि करोति, अग्रे पशोराम्नानात् । सह वा यूपादिभिः [ख]अन्यमतात् । आज्यान्यन्तरेण [ग]अन्तराग्नी गच्छति द्वितीये कल्पे ॥ २ ॥

प्रत्यपिसृज्योल्मुकं त्रिः प्रतिपर्येति ॥ ३ ॥

प्रत्यपिसर्गः पुनः क्षेपः । प्रतिपर्येति निवर्तते यथागतम् । आगतेनापि शक्यते पशोरेकस्य पर्यग्निकरणमिति, न प्रतिपर्येति प्रथमे कल्पे ॥ ३ ॥

"प्रजानन्तः प्रतिगृह्णन्ति पूर्व" इति पर्यग्नौ क्रियमाणेऽपाव्यानि जुहोत्येकं द्वे त्रीणि चत्वारि वा ॥ ४ ॥

अपाव्यानीति होमनामधेयम् ॥ ४ ॥

क. परितोऽग्निर्यस्य स पर्यग्निः इति पर्यग्निशब्दं व्याख्याति रुद्रदत्तः । खण्डयति च भाष्यम् ।

ख. आज्यानि चैक इति मतान्तरोपदेशादत्र पक्षद्वयं सिध्यति । पशुमात्रस्य पर्यग्निकरणं प्रथमः पक्षः । आज्यान्तानां सर्वेषां पर्यग्निकरणं द्वितीयः पक्षः । रुद्रदत्त Defers in this point, see com. of रुद्रदत्त on this Sutra.

ग. पर्यग्निकरणार्थं पशोर्नयनमार्गोऽयम् । वेद्यामासादितानामाज्यानां पश्चात् गार्हपत्यस्य पूर्वतश्च गच्छेदिति ।

१. परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ ( तै. सं. ४-१-२-५. )

**"पशुपतेः पशवो विरूपास्सदृशा उत। तेषां यं वव्रिरे देवास्तꣳ स्वराडनुमन्यताम्' इति द्वितीयाम् ॥ ५ ॥**

पशुपतेरिति द्विप्रभृतिषु नित्या। [क]प्रयाजेषु स्थाननियमान्न पूर्वं पशोरुपविष्टस्य प्रायश्चित्तम्। [ख]उपाकृतमात्र[1] इत्युपदेशः ॥ ५ ॥

**"ये बध्यमानम्" इति प्रमुच्यमाने। "प्रमुञ्चमाना" इति प्रणीयमाने ॥ ६ ॥**

शमिता प्रमुञ्चति पशुम्। प्रमुच्यमानेऽध्वर्युर्जुहोति। प्रणीयमाने तत्राध्वर्युणाऽन्वारब्धः पशुरिति [ग]प्रतिप्रस्थाता जुहोति ॥ ६ ॥

**"रेवतीर्यज्ञपतिं प्रियधाऽऽविशत" इति वपाश्रपणीभ्यां पशुमन्वारभेतेऽध्वर्युर्यजमानश्च। आश्राव्य प्रत्याश्राविते सम्प्रेष्यति "उपप्रेष्य होतर्हव्या देवेभ्य" इति ॥ ७ ॥**

नीयमानश्चात्यन्तमन्वारब्धव्यः पशुः। "यः पशुं मृत्यवे नीयमानमन्वारभते" इति ॥ ७ ॥

क. 'तिष्ठति पशावेकादश प्रयाजान् यजती'त्युक्तम्। एवमुपाकरणानन्तरं प्रयाजेभ्यः पूर्वं यदि पशुर्निषीदेत् तदा तस्य मैत्रावरुणदण्डेनोत्थापनमात्रम्। न तत्र प्रायश्चित्तार्थतया 'यद्य वै निषीदेदेतयैव' (आप. श्रौ. ९. १७. ७.) इति विहितो होमः कर्तव्य इति।

ख. उपाकरणप्रभृति संज्ञपनपर्यन्ते काले मध्ये यदा कदापि निषीदेत् तदा कर्तव्य एव प्रायश्चित्तहोम इत्युपदेशमतमिति।

ग. रुद्रदत्तस्तु अध्वर्योरेव होमकर्तृत्वं वदति–प्रमुच्यमाने च नीयमाने च जुहोत्यध्वर्युरिति। तालवृन्तनिवासी तु भाष्यमेवानुसरति।

1 'ङ' reads उपाकरणप्रभृतीत्युपदेशः

१. प्रजानन्तः प्रतिगृह्णन्ति पूर्वं प्राणमङ्गेभ्यः पर्याचरन्तम्।
सुवर्गं याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥ (तै. सं. ३-१-४-१)

"प्रास्मा अग्निं भरत स्तृणीत बर्हिः" इति होतुरभिज्ञायाऽऽहवनीयादुल्मुकमादायाऽऽग्नीध्रः पूर्वः प्रतिपद्यते ॥ ८ ॥

यजमानस्याप्यन्वारम्भमन्त्रः । उपप्रेष्य होतरिति मैत्रावरुणेन प्रैष उक्तेऽध्रिगुप्रैषः । हव्यानि यथा देवेभ्यः कर्तव्यानि "श्येनमस्य वक्षः कृणुतात्" इत्येवमादीनि । यथाप्रेषितं त्वगेकधा कर्तव्या । स्थगितव्यश्च पशुः । अङ्गानि च यथा चोदितानि सकलानि ग्रहीतव्यानीति प्रैषार्थस्संक्षेपतः ॥ ८ ॥

शमिता पशुं नयति । "[1]उरो अन्तरिक्ष" इत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयन्ति ॥ ९ ॥

उरो अन्तरिक्ष इत्यध्वर्योर्यजमानस्य आग्नीध्रस्य शमितुश्च मन्त्रः ॥९॥

[2]"नाना प्राणो यजमानस्य पशुना" इत्यध्वर्युर्जपति ॥ १० ॥

इति पञ्चदशी कण्डिका

ऊवध्यगोहं पार्थिवं खनतात्" इत्यभिज्ञायोवध्यगोहं खनति ॥ १ ॥

ऊवध्यमुदरगतं शकृत् । तद्यत्र गूह्यते क्षिप्यते अवटे स ऊवध्यगोहः । पृथिव्यां भवः पार्थिवः । स खन्यते व्यापृतत्वादध्वर्योः प्रतिप्रस्थात्रा । [क]अध्वर्युरवटखननारम्भं करोतीत्युपदेशः ॥ १ ॥

क. गात्रं गात्रमस्यानूनं कृणुतात् इत्यध्वर्युं प्रत्येवोक्तत्वात् तदनन्तरत्वादस्याप्यध्वर्युकर्तृकत्वस्यैवापातात्, अध्वर्युणा च सर्वकरणासम्भवेऽपि आरम्भमात्रेणापि तस्य कर्तृत्वं सिध्यतीत्यारम्भमात्रमध्वर्युः कुर्यादित्युपदेश इति । कश्चिदृत्विक् परिकर्मी वा इति रुद्रदत्तः ।

१. उरो अन्तरिक्ष सजूर्देवेन वातेनाऽस्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपतिं धाः ॥ ( तै. सं. १-३ ८-१ )

२. नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिस्सह देवयानः । जीवन्देवानामप्येतु पाथः सत्यास्सन्तु यजमानस्य कामाः ॥ ( तै. सं. ३-१-४-२ ).

अभिपर्यग्निकृते देश उल्मुकं निदधाति । स शामित्रः ॥

अभिपर्यग्निकृते देशे पक्षेण शमिता तत्रार्थलक्षणं पाकं करोतीति शामित्रोऽग्निः ॥ २ ॥

तं दक्षिणेन प्रत्यञ्चं पशुमवस्थाप्य "पृथिव्यास्सं-पृचः पाहि" इति तस्याऽधस्ताद्बर्हिरुपास्यत्युपाकरणयोर-न्यतरत् ॥

उपाकरणयोर्दर्भयोः एकमधस्तात् क्षिपति ॥ ३ ॥

तस्मिन् संज्ञपयन्ति प्रत्यक्शिरसमुदीचीनपादम् ॥४॥

[1]प्रत्यक्शिराः अपरशिराः । उदीचीनैः पादैर्मार्यते ॥ ४ ॥

'अमायुं कृण्वन्तं संज्ञपयते'त्युक्त्वा पराङावर्तते-ऽध्वर्युः ॥ ५ ॥

अमायुप्रैषादिः [2]भरद्वाजमतात् । मायुः शब्दः । शब्दमकुर्वन्तं मारयतेत्यर्थः । पराङ्मुख आवर्ततेऽध्वर्युः ॥ ५ ॥

"स्वर्विदसि स्वर्वित्वा स्वरिहि स्वर्मह्यं स्वः पशुभ्यः । लोकविदसि लोकं वित्वा लोकमिहि लोकं मह्यं लोकं पशुभ्यः । गातुविदसि गातुं वित्वा गातुमिहि गातुं मह्यं गातुं पशुभ्यः । नाथविदसि नाथं वित्वा नाथ-मिहि नाथं मह्यं नाथं पशुभ्यः । न वा उ वे तान्म्रियसे न रिष्यसि देवाꣳइदेषि पथिभिः सुगेभिः । यत्र यन्ति

1. Ad. Ms. adds पक्षेण before प्रत्यक्; B. Ms. reads प्रत्यक् अपरशिराः
2. O. Ms. omits भरद्वाजमतात्

सुकृतो नापि दुष्कृतस्तत्र त्वा देवस्सविता दधातु । आशानां त्वाशापालेभ्य इत्येषा । विश्वा आशा मधुना स सृजाम्यनमीवा आप ओषधयो भवन्तु । अयं यजमानो मृधो व्यस्यताम् । अगृभीताः पशवस्सन्तु सर्वे" इत्युव श्र। पराङावर्तते यजमानः । "नानाप्राणो यजमानस्य पशु 'त्यध्वर्युर्जपति ॥ ६ ॥

इति षोडशी कण्डिका

यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च । ता नस्सन्तु पयस्वतीरस्मिन् गोष्ठे वयोवृधः ॥ इह पशवो विश्वरूपा रमन्तामस्मिन् यज्ञे विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्मा२ऽअवन्तु पयसा घृतेन" इति पृषदाज्यद्वयमवेक्षमाणौ वाग्यतावासातेऽध्वर्युर्यजमानश्च ॥ १ ॥

"इन्द्रस्य भागस्सुविते दधातनेमं यज्ञं यजमानञ्च सूरौ । यो नो द्वेष्ट्यनु तꣳरभस्वानागसो यजमानस्य वीरा" इति च वाश्यमानेऽवेक्षेते ॥ २ ॥

मार्यमाणो यदि शब्दं करोति, तत "इन्द्रस्य" इति जपः । पशोरवेक्षणं मन्त्रलिङ्गात् । हिरण्यकेशिनस्तु-यदि शब्दं करोति तत इन्द्रस्य भाग इत्यवेक्षणमेव प्रायश्चित्तं [क]पृषदाज्यस्य । अधिक-

क. मारणसमये यदि पशुश्शब्दं करोति तदा "इन्द्रस्य भागोऽसि" इति पृषदाज्यावेक्षणं कर्तव्यम् । तदेव प्रायश्चित्तम्, नान्यदिति हिरण्यकेशिमतमिति । But हिरण्यकेशिसूत्र as follows-'इन्द्रस्य भागः + वीरा' इत्यध्वर्युः पशुमभिमन्त्रयते यदि रौति, इति । see p. 423, I Vol. of सत्या श्रौ. Poona ed. उपदेशमतन्तु-' यदस्य पारे रजसः' ( आप. श्रौ. ९. १९. ७. ) इत्यनेन सहेदमधिकं समुच्चीयत इति ।

मित्युपदेशः । चकारो वाग्यमनसमुच्चयार्थः । केचि[1]न्मन्त्रसमुच्चयः । "यासामूधः" "इन्द्रस्य भाग" इति च वाच्यमाने द्वाभ्यामवेक्षणम् ॥ २ ॥

[१]"यत्पशुर्मायुमकृत" इति संज्ञप्ते संज्ञप्तहोमं जुहोति ॥ ३ ॥

यदा मायुं न करोति तदापि नित्यस्संज्ञप्तहोमो न प्रायश्चित्तम् । संज्ञप्ते मृते ॥ ३ ॥

[२]"शमितार उपेतन" इति वपाश्रपणीभ्यां पशुमुपैतोऽध्वर्युर्यजमानश्च ॥ ४ ॥

निष्टसमिति प्रतितपति आहवनीये वपाश्रपण्यौ ताभ्यां सह पशुमुपेतः उपागच्छतः 'शमितार' इति ॥ ४ ॥

पशोः पाशं प्रमुञ्चति [३]"अदितिः पाशं प्रमुमोक्त्वेतम्" इति ॥ ५ ॥

पाशप्रमोचनाद्याध्वर्यवम् ॥ ५ ॥

संवेष्ट्य रशनां ग्रीवासु निधायैकशूलयोपसज्य चात्वाल उदस्यति "अरातीयन्तमधरं करोमि" इति ॥६॥

यद्यभिचरेत् अरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन् प्रतिमुञ्चामि पाशम्" इति तया वृक्षं [क]स्थाणुं स्तम्बं वापि दध्यात् ॥ ७ ॥

इति सप्तदशी कण्डिका

क. स्थाणुः शाखारहितः तरुकाण्डः । स्थूणा स्तम्भः ।

1. B. Ms. reads मन्त्रस्य समुच्चयः

१. यत्पशुर्मायुमकृतोरो वा पद्भिराहते । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्व॰हसः ॥ ( तैः सं. ३-१-४-२ )

२. शमितार उपतन यज्ञं देवेभिरिन्वितम् । पाशात् पशुं प्रमुञ्चत बन्धाद्यज्ञपतिं परि ,, ,, ,,

३. अदितिः पाशंप्रमुमोक्त्वेतन्नमः पशुभ्यः पशुपतये करोमि ।

एकशूलया गृहीत्वा चात्वाले क्षिपति "अरातीयन्तमधरं करोमि" इति । वृक्षादिरिन्धनं वाऽभिचरतो रशनया परिपठितेनास्माकमुदसनप्रत्याम्नायः ॥ ७ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिविरचिते
सप्तमप्रश्ने पञ्चमः पटलः ॥

षष्ठः पटलः

ततः प्रतिप्रस्थाता पत्नीमुदानयति ॥ १ ॥

तूष्णीमानयनं पत्न्या गार्हपत्योत्तरदेशं प्रति प्रतिप्रस्थातुः ॥

"नमस्त आतान" इति पत्न्यादित्यमुपतिष्ठते ॥ २ ॥

"अनर्वा प्रेहि" इति प्राचीमुदानयति । अनुमन्त्रयत इत्येके ॥ ३ ॥

प्राच्युदानयनमेकैकस्याः, [क]एकवचनत्वात् । अतस्सत्रेष्वावृत्तिः । तथानुमन्त्रणम् ॥ ३ ॥

[1]"आपो देवीश्शुद्धायुव" इति चात्वाले पत्न्यपोऽवमृशत्यृत्विजो यजमानश्च । न पत्नीत्येके ॥ ४ ॥

सर्वाः स्पृशन्त्यपश्चात्वाले ॥ ४ ॥

अद्भिः पशोस्सर्वान् प्राणानाप्याययति ॥ ५ ॥

एकाऽऽप्यायनमभिषेकं वा करोति, [ख]पशुसंस्कारत्वात् ॥ ५ ॥

क. अनर्वा प्रेहीति मन्त्रे एकवचनश्रवणात् अनेकपत्नीकप्रयोग एकैकस्याः पर्यायेणोदानयनम् । मन्त्रावृत्तिश्च ।

ख. आप्यायनेन पशोरेव संस्कारात् एकयापि पत्न्या कृत आप्यायने तन्निष्पत्तेरिति ।

१. आपो देवीश्शुद्धायुवश्शुद्धायूयं देवाꣳऊढ्व शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म (तै. सं. १-३-८।२)

सर्वाण्यङ्गान्यध्वर्युरभिषिञ्चति पत्न्याप्याययति। एतद्वा विपरीतम्।[1]"वाक् त आप्यायताम्" इत्येतैर्यथालिङ्गम्॥६॥

"या ते प्राणाञ्छुग्जगाम" इति हृदयदेशम्। "मेढ्रं त आप्यायताम्" इति मेढ्रम्। "शुद्धाश्चरित्रा" इति पादान्॥ ७॥

पायुर्येन पुरीषं करोति। तदनन्तरं मेढ्रं शिश्नम्। स्पर्शनं आप्यायनम्। असम्भवे हस्तद्वयेन। यथा कर्णयोः। एकीकृत्य पादान्॥

एकैकमाप्याय्य जपति "शमद्भ्य" इति पुरा स्तोकानां भूमेः प्रापणात्॥ ८॥

यावत्स्तोकाः बिन्दवो भूमिं न प्राप्नुवन्ति तावज्जपति "शमद्भ्य" इति॥ ८॥

"शमोषधीभ्यश्शं पृथिव्यै" इति शेषं भूम्यां निनीय "ओषधे त्रायस्वैनम्" इत्युपाकरणयोरवशिष्टं दक्षिणेन नाभिमन्तर्धाय "स्वधिते मैनꣳ हिꣳसीः" इति स्वधितिना पार्श्वतस्तिर्यगाच्छ्यति॥ ९॥

एकैक[1]माप्याय्य शेषनिनयनाद्यध्वर्युरेव दक्षिणेन नाभिं यत्र भ्रमरकः तत्रान्तर्धानम्। पार्श्वादारभ्य यावद्वपा तावच्छिनत्ति तिर्यगवस्थितेनाऽसिना॥ ९॥

बर्हिषोऽग्रं सव्येन पाणिनाऽऽदत्ते॥ १०॥

1, 'ङ' reads एकैकमापूर्य.

१. वाक्त आप्यायताम्। प्राणस्त आप्यायताम्। चक्षुस्त आप्यायताम्। श्रोत्रं त आप्यायताम्॥ (तै. सं. १-३-८-१)

उदग्दक्षिणावस्थितेन सव्येन हस्तेनाऽग्रमादाय स्थाप्यते । अन्यत्रापि मध्यमिति वचनान्मूलत एवान्तर्धानं क्रियते ॥ १० ॥

**अथ मध्यं यत अच्छयति तदुभयतो लोहितेनाऽङ्क्त्वा "रक्षसां भागोऽसि" इत्युत्तरमपरमवान्तरदेशं निरस्याथैनत्सव्येन पदाऽभितिष्ठति "इदमहꣳरक्षोऽवबाध इदमहꣳरक्षोऽधमं तमो नयामि" इति ॥ ११ ॥**

इत्यष्टादशी कण्डिका

पृथिव्यामस्य मूलम् । अग्रञ्च सव्येन हस्तेन गृहीतम् । अतश्शेषं मध्यं भवति । तदुभयतो लोहितेन प्रक्षालयति । यत आच्छ्यति तस्मिन् पार्श्वे प्रदेशे । पार्श्वत इत्येतदपि सप्तम्यर्थे । तन्मध्यमुभयतो लोहितेन प्रक्षालयति । उपकार एव । [क]अपामुपस्पर्शनं रक्षसाम्, नो[1]पघाते । अतो निरसनमेव कृत्वा । उपरि तिष्ठति । सव्येन पादेन तृणस्य इदमहं रक्षोऽवबाधे इदमहं रक्षोऽधमन्तमो नयामीत्येवमन्तः ॥ ११ ॥ (१८)

**"इषे त्वा" इति वपामुत्खिद्य "घृतेन द्यावापृथिवी प्रोर्ण्वाथाम्" इति वपया द्विशूलां प्रच्छाद्य " ऊर्जे त्वा " इति तनिष्ठेऽन्तत एकशूलयोपतृणत्ति ॥ १ ॥**

उत्खिद्य उत्पाट्य । तनिष्ठे तनुतमे । अन्तत उपान्ते । तृणत्ति भिनत्ति एकशूलया ॥ १ ॥

**"देवेभ्यः कल्पस्व" इत्यभिमन्त्र्य " देवेभ्यश्शुन्धस्व इत्यद्भिरवोक्ष्य " देवेभ्यश्शुम्भस्व " इति स्वधितिना वपां**

क. "रौद्राक्षस" इति विहितमपामुपस्पर्शनं रक्षसामुपकारजनक एव कर्मणि विहितम् । नापघातार्थे । प्रकृते च निरसनमेवोपकारकम् । अतस्तत्रैवापामुपस्पर्शनम् । पदाभिघाने तु न तदिति ।

1. B. Ms. cites wrongly नोपपद्यते for नोपघाते

निमृज्य "अच्छिन्नो रायस्सुवीर इन्द्राग्निभ्यां त्वा जुष्टामुत्कृन्तामि" इत्युत्कृन्तति ॥ २ ॥

निमृज्य वपाया यदन्यन्मांसं तदपनीय। उत्कृन्तति छिनत्ति वपाम् ॥ २ ॥

मुष्टिना शमिता वपोद्धरणमपिधायाऽऽस्त आ वपाया होमात् ॥ ३ ॥

यस्मादुद्ध्रियते तद्वपोद्धरणं, तत् स्थगयति ॥ ३ ॥

"प्रत्युष्टꣳरक्षः प्रत्युष्टा अरातय" इति शामित्रे वपां प्रतितप्य "नमस्सूर्यस्य सन्दृशे" इत्यादित्यमुपस्थाय "उर्वन्तरिक्षमन्विहि" इत्यभिप्रव्रजति ॥ ४ ॥

उल्मुकैकदेशमादायाऽऽग्नीध्रः पूर्वः प्रतिपद्यते ॥ ५ ॥

यथा सर्वेषामन्तर्भवति तथोल्मुकं नयत्याग्नीध्रः ॥

वपाश्रपणी पुनरन्वारभते यजमानः ॥ ६ ॥

पुनश्शब्देन केचित्तस्मिन्नेव देशे स्पृशति वपाश्रपण्यावित्याहुः ॥६॥

उल्मुकैकदेशमाहवनीये प्रत्यपिसृजति ॥ ७ ॥

उल्मुकैकदेशः शामित्रैकदेशः। क्षिपत्याहवनीये ॥

"निर्दग्धꣳरक्षो निर्दग्धा अरातयः" इत्याहवनीयस्याऽन्तमेऽङ्गारे वपां निकूड्याऽन्तरा यूपमाहवनीयञ्च दक्षिणाऽतिहृत्य प्रतिप्रस्थात्रे प्रयच्छति। तां दक्षिणत आसीनः प्रतिप्रस्थाताऽऽहवनीये श्रपयति ॥ ८ ॥

इत्येकोनविंशी कण्डिका

अन्तमः अध्वर्योस्समीपतमः । निकूज्य दग्ध्वा अन्तिमेऽङ्गारे वपायामेवाधस्तात् लगयति ॥ ८ ॥

"वायो वीहि स्तोकानाम्" इति बर्हिषोऽग्रमधस्ताद्वपाया उपास्यति ॥ १ ॥

बर्हिषोऽग्रम् "अग्रेणैवाग्रं समर्धयति" इति लिङ्गात् । केचिदग्नौ क्षिपत्यधस्तात् वपायाः ॥ १ ॥

[1]"त्वामुते दधिरे हव्यवाहम्" इति स्रुवेण वपामभिजुहोति ॥ २ ॥

प्रादुर्भूतेषु स्तोकेषु स्तोकेभ्योऽनुब्रूहीति संप्रेष्यति ॥ ३ ॥

वपाभिहोमो ध्रुवातः ॥ २, ३ ॥

अलोहिनीं सुशृतां कृत्वा "सुपिप्पला ओषधीः कृधि" इति दक्षिणस्यां वेदिश्रोण्यां बर्हिषि प्लक्षशाखायामासाद्य "प्रयुता द्वेषाꣳसि" इति वपाश्रपणी प्रवृह्य निधाय घृतवति शब्दे जुहूपभृतावादाय दक्षिणातिक्रम्याऽऽश्राव्य प्रत्याश्राविते सम्प्रेष्यति—स्वाहाकृतिभ्यः प्रेष्य, स्वाहा कृतिभ्यः प्रेष्येति वा ॥ ४ ॥

लौकिकं क्षिप्यते घृतम् । यथा भवत्यलोहिनी सुशृता च । पुनरपि "यस्त आत्मा" इत्यभिघार्य "द्रꣳह गा" इत्युद्वास्य शूलाभ्यामेव "सुपिप्पला" इत्यासाद्य बर्हिष्यवस्थितायां शाखायाम् ।

1. त्वामुते दधिरे हव्यवाहꣳशृतंकर्तारमुत यज्ञियं च । अग्ने सदक्षस्सतनुर्हि भूत्वाथ हव्या जातवेदो जुषस्व ॥ ( तै. सं. ३-१-४-४ )

केचि[1]तूभयत्र तिष्ठति बर्हिषि प्लक्षशाखायाश्चेति। "प्रयुता द्वेषाꣳसि" इति प्रवृहणम्। निधानं तूष्णीम्। [क]अविकृतं प्रातर्दोहवदासन्नाभिमर्शनम्, आख्यानवादात्। केचित् "इदमिन्द्रियम्" इति प्रतिपद्यन्ते। [ख]यावदुक्तं सान्नाय्यधर्मं [2]इत्युपदेशः। [ग]प्रयाजाङ्गत्वात्[3] स्रुगादापनस्य पुनर्घृतवतिशब्दः। [घ]अतिक्रमणादेः पुनरनुक्रमणमपूर्वविधानार्थम् ॥४॥

वषट्कृते हुत्वा प्रत्याक्रम्य शेषेण ध्रुवामभिघार्य पृषदाज्यमभिघारयत्यथ वपाम्। एतद्वा विपरीतम् ॥ ५ ॥

नोपभृतम् ॥ ६ ॥

क. प्रकृतौ दर्शयागे पयसोऽभिमर्शनम् "इदमिन्द्रियममृतं वीर्यम्" इत्यनेन विहितम्। तेनैव मन्त्रेणानूहितेनात्र वपाभिमर्शनं कर्तव्यम्। तत्र हि इदमिन्द्रियमिति इदंपदस्येन्द्रियपदसामानाधिकरण्येनेन्द्रियवाचकत्वात्पयसस्साक्षादिन्द्रियरूपत्वाभावेन मन्त्रस्यासमवेतार्थत्वात् अर्थवादरूपत्वेन विकृतावपि तथैव पाठः न तु स्त्रीलिङ्गान्तेनोह इति।

ख. केचिदत्र सान्नाय्यधर्मा अनुक्रांताः 'उदस्पवित्रे' इत्याद्याः, तेषामेवानुष्ठानं नान्येषामित्युपदेशमतम्।

ग. प्रकृतौ 'घृतवति शब्दे जुहूपभृतावादाय' (आप. श्रौ. २-१९-१.) इति होत्रा "घृतवतीमध्वर्यो स्रुचमास्यस्व" इति पठ्यमानेऽध्वर्योर्जुहूपभृदादानस्य विहितत्वात् तस्य च तदुत्तरक्रियमाणप्रयाजार्थत्वावगमात् इह चान्तिमप्रयाजात्पूर्वं पर्यग्निकरणादीनां बहूनां विधानात्, स्वाहाकृत्यर्थञ्च पुनर्घृतवतिशब्दनिर्देशात्पर्यग्निकरणात्पूर्वमायतने स्रुचौ सादयितव्ये। स्वाहाकृत्यर्थञ्च पुनः 'घृतवतीमध्वर्यो' इति प्रयोक्तव्यम्, ततस्स्रुगादानमिति। अतश्च प्रयाजाङ्गत्वमेव स्रुगादापनस्येति यत्र प्रयाजा न सन्ति गृहमेधीयादौ तत्र स्रुगादापनमपि निवर्तत इति। गृहमेधीये च आज्यभागातिरिक्ताङ्गकलापो निवर्तत इति पूर्वमीमांसायां (१०-७-९.) सिद्धान्तितम्।

घ. दक्षिणातिक्रमणस्य प्राप्तत्वादेवात्र सूत्रे 'दक्षिणातिक्रम्य' इति पुनः कथनं स्वाहाकृतिभ्यः प्रेष्य' इत्यस्य क्रमसिद्ध्यर्थम्–अतिक्रमणानन्तरमेव प्रैष इति।

1. O. Ms. reads केचिदुभयं निषेधन्ति बर्हिः प्लक्षशाखाञ्चेति।
2. Ibid, सान्नाय्य इत्युपदेशः
3. Ad. & Mss.2. read प्रयाजाङ्गत्वादादापनस्य

यत्र वषट्कृते होमः तत्र वषट्कारेण सह[क] न लभ्यते । केचित् [ख]ध्रुवाभिघारणं पूर्वं न कुर्वन्त्यनाज्यभागपक्षे । "अतो हि प्रथमावाज्यभागौ यक्ष्यन् भवती" ति हेतुवचनात् । वपामभिघार्य पृषदाज्यं [ग]स्रुक्स्थालीगतम् । न [घ]स्थालीगतमित्युपदेशः । केचित्तु[ङ] स्थालीगतमेवाभिघारयन्ति, नोपभृतमिति पृषदाज्यधानीस्थस्य प्रतिषेधः । रिक्तत्वादुपभृतः [1]प्रतिषेधो नोपपद्यत इति । न तु तत् । प्रकृतौ तत्र सन्देहः– किं पात्रस्याभिघारणमुत आज्यस्येति । नोपभृतमिति प्रतिषेधादिह प्रकृतावपि हविषोऽभिघारणमध्यवसीयते[2] "प्रयाजानिष्ट्वा हवींष्यभिघारयती"ति ॥ ५, ६ ॥

**आज्यभागौ यजति । तौ न पशौ करोति न सोम इत्येके ॥ ७ ॥**

क. यत्र 'वषट्कृते हुत्वा' इति कथनं तत्र वषट्कारे उक्त एव होमः, न तु वषट्कारेण सहैव होमः कर्तव्य इति ।

ख. सूत्रकारेण पशावाज्यभागयोर्विकल्प उक्तः 'आज्यभागौ यजति तौ न पशौ करोति' ( आप. श्रौ. ७. २०. ६, ७, ) इति । अतश्च यदि पशावाज्यभागौ न क्रियेते तदा ध्रुवाभिघारणं प्रथमं न कर्तव्यम् । शाखान्तरे "स वै ध्रुवामेवाग्रेऽभिघारयति, अतो हि प्रथमावाज्यभागौ यक्ष्यन् भवति" इति ध्रुवाप्रथमाभिघारणस्याज्यभागानुष्ठानप्रयुक्तत्वाभिधानादिति । अतो ध्रुवायाः अन्त एवाभिऽघारणम् ।

ग. स्रुग्गतं पृषदाज्यधानीगतं ( स्थालीगतं ) चेत्युभयमपि पृषदाज्यमभिघारयेदिति ।

घ. सूत्रे 'पृषदाज्यमभिघारयति' इत्येकवचनश्रवणात्, तस्य च पृषदाज्यधानीगताज्याभिघारणमात्रेणापि गतार्थत्वान्न स्थालीगतस्याभिघारणमित्युपदेशमतमिति ।

ङ. अयमाशयः–'नोपभृतम्' इति पृषदाज्यधान्या एवाभिघारणप्रतिषेध इत्यङ्गीकर्तव्यम् । उपभृतो रिक्तत्वेन तत्राभिघारणाप्राप्तेरेव निषेधाप्रसक्तेः । अतश्च पृषदाज्यधान्यभिघारणस्य प्रतिषिद्धत्वात् स्थालीगतस्यैवाभिघारणमनेन विधीयत इति केषाञ्चिन्मतम् । तन्न युक्तम्; प्रकृतौ 'उपभृतमन्तत' इति विहितमभिघारणं पात्रस्य वा तद्गताज्यस्य वेति सन्देहो जायते । तस्य च निर्णयोऽत्रत्येन निषेधेन । अत्र हि पात्रस्य रिक्तत्वात् तत्राऽप्राप्तमेवाभिघारणं सूत्रेणानेनाऽनूद्यते । अतश्च हविषामेवाभिघारणं 'प्रयाजानिष्ट्वा हवींष्यभिघारयति' इत्यनेन प्राप्तम् । तच्चैकवचनेन पृषदाज्यधानीगतमेवाभिघार्यत इति ।

1. O. Ms. reads प्रतिषेधोनेति
2. 'घ' reads अभिघारणमित्यवसीयते

'न तौ करोति' इति सिद्धे पशाविति वचनात् पशौ न करोत्याज्यभागौ, [1]पशुपुरोडाशे करोतीत्यर्थः। तस्य च [2]लिङ्गं "[क]स्वाहाग्निं न भेषजम्, स्वाहा सोममिन्द्रियम्" इति पुरोडाशानां पूर्वमाज्यभागयोः पाठः। [ख]यथा पशुबन्धे न कृतावाज्यभागौ तथा सोमेऽपि यः पशुरग्नीषोमीयादिः [3]तावेव तस्मिन्नपि न कर्तव्याविति केचित्। सोमेष्टिपशुबन्धेषु न कर्तव्यावित्यन्ये। यदा पशौ न क्रियेते आज्यभागौ तदा पशुपुरोडाशेऽपीत्युपदेशः॥ ७॥

**"स्वाहा देवेभ्य" इति पूर्वं परिवप्यं हुत्वा जुह्वामुपस्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामवदाय हिरण्यशकलमुपरिष्टात्कृत्वाऽभिघारयति॥ ८॥**

क. अस्ति कौकिली सौत्रामणिः तदर्था हौत्रमन्त्राः ब्राह्मणे पठिताः। तत्र यक्ष्यमाणदेवतासंस्कारार्थे स्वाहाकारप्रयाजे पुरोडाशीयदेवतानां बोधकः "स्वाहेन्द्रꣳसुत्रामाणं सवितारं वरुणं भिषजां पतिम्"। (तै. २. ६. ११. ९.) इति मन्त्रभागः पठितः। ततः पूर्वमाज्यभागदेवतयोः स्वाहाग्निं न भेषजम्, 'स्वाहा सोममिन्द्रियम्'। (तै. ब्रा. २. ६. ११. ९.) इत्याज्यभागदेवते उक्ते। तेनावगम्यते—पशुपुरोडाशेऽनुष्ठेयावाज्यभागाविति।

ख. 'न सोम' इत्यस्य "नान्तरिक्षेऽग्निश्चेतव्यः" इतिवन्नित्यप्राप्तनिषेधानुवादकतया तौ पशौ न करोतीत्यनेनैकवाक्यतां प्राप्य तत्स्तावकत्वं न सम्भवति, तथात्वे तस्य वैयर्थ्यापत्तेः। 'एके' इति मतान्तरत्वेनोपन्यासानुपपत्तेश्च। अतः 'तौ पशौ न करोति' इत्येकं सूत्रम्। तेन पशावाज्यभागप्रतिषेधः। 'न सोम इत्येके' इति सूत्रान्तरम्। तेन सोमे आज्यभागौ प्रतिषिध्येते। तत्र च साक्षादाज्यभागयोः सम्बन्धाभावेन 'आनर्थक्यात्तदङ्गेषु' इति न्यायेन सोमाङ्गभूतेषु पशुष्वतिदेशतः प्राप्तयोराज्यभागयोः निषेधः प्राप्नोति। यथा निरूढपशुयागे न क्रियेते आज्यभागौ तथा सोमयागाङ्गभूतेष्वपि पशुषु न कर्तव्याविति केषाञ्चिन्मतम्। 'न सोम' इति सामान्यत एव निषेधात् आनर्थक्यतदङ्गन्यायस्य पशुमात्रविषयत्वे प्रमाणाभावात् सोमयागाङ्गभूतेषु पशुषु इष्टिषु च निषेध इत्यपरेषां मतम्। पशुशब्देन साङ्गस्यैव पशुयागस्य ग्रहणौचित्यात् पश्वङ्गभूते पुरोडाशयागेऽपि निषेध एवेत्युपदेशमतमिति।

1. 'क' omits पशु:
2. B. Ms. reads लिङ्गदर्शनं for लिङ्गम्
3. 'क' omits तत्रैव

[क]परिवप्य इति होमनाम संव्यवहारार्थम् । जुहूग्रहणादिहैव हिरण्यहोमे जुह्वामुपस्तरणाभिघारणे। शतकृष्णलायामुपस्तरणाभिघारणे न भवत इति ख्याप्यते। नावदानमन्त्रौ वपायाः। कृत्स्ना यस्माद्धूयते नाऽवखण्ड्यते, तस्मादर्थलोपान्नि[1]वृत्तिः ॥ ८ ॥

एवं पञ्चावत्ता भवति । चतुरवत्तिनोऽपि पञ्चावत्तैव स्यात् ॥ ९ ॥

इति विंशी कण्डिका

शकलाभ्यां सह पञ्चावत्ता। चतुरवत्तिनोऽपीति वचनात्। स्रुवेण चावदानम्। [2]वपावदानं[ख] हस्तेनेत्युपदेशः ॥ ९ ॥ ( २० )

इन्द्राग्निभ्यां छागस्य वपाया मेदसोऽनुब्रूहि, इन्द्राग्निभ्यां छागस्य वपाया मेदसः प्रेष्येति सम्प्रेषौ ॥ १ ॥

[१]"जातवेदो वपया गच्छ देवान्" इति वषट्कृते हुत्वा प्रत्याक्रम्य "देवेभ्यस्स्वाहा" इत्युत्तरं परिवप्यं हुत्वा वपोद्धरणमभिघारयत्युत्तरतास्तिष्ठन् ॥ २ ॥

वषट्कारहोमेष्वपि मन्त्रवत्सु स्वाहाकारः, प्रस्तरे स्वाहाकारप्रतिषेधात् भरद्वाजमताच्च। हुतानुमन्त्रणं वपाहविषोः-"इन्द्राग्न्योरहं देवयज्ययेन्द्रियावी भूयासम्" इतीन्द्रयाजिनः। यस्य महेन्द्रस्य प्राप्तिः

क. परितो वपां हूयेते इति परिवप्यौ इति रुद्रदत्तः ।

ख. स्रुवादीनां सामर्थ्यानुसारेणैवावदानसंबन्धदर्शनात् वपाया मांसत्वेऽपि सामर्थ्याद्धस्तेनैवावदानमिति । see सामर्थ्याधिकरण पू. मी. १. ४. १०.

1. Ad Ms. adds मन्त्रस्य before निवृत्तिः

2. B. Ms. omits वपादानं हस्तेनेत्युपदेशः

१. जातवेदो वपया गच्छ देवान् त्वं हि होता प्रथमो बभूथ। घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतं हविरदन्तु देवाः स्वाहा देवेभ्यो देवेभ्यः स्वाहा ॥ ( तै. ३।१-४-४ )

तस्य " जेमानं महिमानं गमेयम् " इति । [क]उपदेशः पुरोडाशवदनुमन्त्रणम् ॥ १, २ ॥

"प्रतिप्रस्थाताऽऽहवनीये वपाश्रपणी प्रहरति स्वाहोर्ध्वनभसं मारुतं गच्छतम्" इति प्राचीं द्विशूलां प्रतीचीमेकशूलाम् । एतद्वा विपरीतम् ॥ ३ ॥

अथैने अध्वर्युस्संस्रावेणाऽभिजुहोति ॥ ४ ॥

संस्रावेणाभिजुहोति वपाश्रपण्यौ तूष्णीम् ॥ ४ ॥

अत्र यजमानो वरं ददाति—अनडाहं तिस्रो वा धेनूस्तिस्रो वा दक्षिणाः ॥ ५ ॥

वरो वरयितव्यः । अनः शकटम्, तद्वहतीत्यनड्वान् तं वरयितव्यमनड्वाहं ददातीति । केचिद्वरं ददातीति गोजातिमात्रम्, अथवा अनड्वाहमित्याहुः । दक्षिणा चोदनासु गोजातिरेव प्रसिद्धा । " [ख]देवांश्च याभिर्यजते ददाति च " इति लिङ्गात् ॥ ५ ॥

समुत्क्रम्य सहपत्नीकाः पञ्चभिश्चात्वाले मार्जयन्ते । [1]"आपो हिष्ठा मयो भुवः" इति तिस्रः । इदमापः प्रवहतावद्यञ्च मलं च यत् । यद्वाहमभिदुद्रोहानृतं यद्वा शेपे अभीरुणम् । आपो मा तस्मादेनसो विश्वान्मुञ्चत्व १

क. उपदेशमते पशोः पुरोडाशविकारत्वात् तदनुसारेण " इन्द्रियाव्यन्नादो भूयासम् " इत्यनुमन्त्रणं कर्तव्यमिति ।

ख. गोसूक्ते " देवाꣳश्च याभिर्यजते ददाति च ज्योगित्ताभिस्सचते गोपतिस्सह " ( तै. ब्रा. २. ८. ) इति सामान्येन दक्षिणादानादौ गोजातीयस्यैव प्राप्त्यनुवादादिति।

१. आपो हिष्ठा मयो भुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ १ ॥
योवश्शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ २ ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ ३ ॥

हसः। निर्मा मुञ्चामि शपथान्निर्मा वरुणादधि। निर्मा यमस्य पड्बीशात्सर्वस्माद्देवकिल्बिषादथो मनुष्यकिल्बिषात् ॥६॥

इत्येकविंशी कण्डिका

समुत्क्रमणं समुदितैर्गमनं सह पत्न्या चात्वालसमीपे। मार्जनञ्च युगपदेवेत्युपदेशः ॥ ६ ॥ २१ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिविरचिते

सप्तमप्रश्ने षष्ठः पटलः

सप्तमः पटलः

पशुपुरोडाशस्य पात्रसंसादनादि कर्म प्रतिपद्यते। यथार्थं पात्रप्रयोगः ॥ १ ॥

पश्वर्थः पुरोडाशः पशुपुरोडाशः पशुदेवतासंस्कारः। अन्यदेवत्योऽपि पशुदेवतां वर्धयतीत्याश्वलायनमतिः ॥ १ ॥

निर्वपणकाले व्रीहिमयं पशुपुरोडाशं निर्वपत्येकादशकपालं द्वादशकपालं वा ॥ २ ॥

यद्देवतः पशुस्तद्देवतो भवति ॥ ३ ॥

व्रीहिमयो न यवमयः। [क]कपालसंख्या चान्यदेवत्यस्याप्येषैव। यान्यासादितानि पात्राणि तानि पुनः पुनर्न साद्यन्ते। पशुपुरोडाशस्यापि तान्युपकुर्वन्ति। [1]अपरिसमाप्तत्वात्तन्त्रस्य। कपालशूर्पादीन्यष्टापरतः पात्रीं, प्राशित्रहरणम्, अश्मानं, सोमविधे पुरतः प्रणीता-

क. ऐन्द्राग्नत्वादेवैकादशद्वादशकपालसंख्ययोः प्राप्तौ पुनरत्र संख्याग्रहणमन्यदेवताकेऽपि पशावेषैव कपालसंख्येति ज्ञापनार्थमिति। एवं विकल्पेन व्रीहियवयोः प्राप्तौ पुनर्व्रीहिग्रहणं यवनिषेधार्थमिति।

1. Ad. Ms. reads अपरिसमाप्तौ for अपरिसमाप्तत्वात्

प्रणयनं चेष्टिविधे । आसादितान्यप्यासाद्यन्ते [क]जुहूपभृद्वर्जानि । अन्यच्चेडापात्रम् । [ख]प्रणीताप्रणयनं [1]नित्यमित्युपदेशः । इतरथा तु न्यायः । पवित्रे कृत्वा 'यजमान वाचं यच्छ' इत्युक्त्वा संमृश्य पात्राणि अग्निहोत्रहवण्यादानादि हविष्कृदन्तम् । इष्टिविधे प्रणीताप्रणयनमपि । [2]उपदेशेन चानिष्टिविधेऽपि । यज्ञयोगश्च । नेह यज्ञयोगः [ग]कृतत्वात् ॥ २, ३ ॥

**हविष्कृता वाचं विसृज्य पशुं विशास्ति ॥ ४ ॥**

विशास्ति विशसति शमिता ॥ ४ ॥

**[१]हृदयं जिह्वा वक्षो यकृद्वृक्यौ सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमिति दैवतानि । दक्षिणं दोरसव्या श्रोणिर्गुदतृतीयमिति सौविष्टकृतानि । क्लोमानं प्लीहानं पुरीततं वनिष्ठुमध्यूध्नीं मेदो जाघनीमित्युद्धरति ॥ ५ ॥**

वक्षः उरः, श्येनाकृति यथा भवति तथा गृह्यते । यकृत् [3]कालकमन्तर्भवति । वृक्यौ पार्श्वयोराम्रफलाकृती । सव्यं दोः सव्यो बाहुः ।

क. 'पूर्वमाज्यभागं प्रति स्रुचावदत्ते न निदधात्यास्विष्टकृतः' ( आप. श्रौ. २–१८–७ ) इति जुहूपभृतोर्गृहीतयोः स्विष्टकृत्पर्यन्तं निधानप्रतिषेधात् तयोर्धारणं कर्तव्यम् । तदशक्तावन्यत्र स्थापयितव्ये । न तु तयोरासादनम् । तदितरेषां पात्राणान्तु यथोपयोगमासादनम् । पाशुकादिडापात्रादन्यत्पुरोडाशार्थमिडापात्रमासादनीयम् ।

ख. इष्टिविधे सोमविधे चेत्युभयत्रापि प्रणीतापात्रमासादनीयमित्युपदेशमतम् । पूर्वं प्रयुक्तानामसमाप्तकार्याणामत्राप्युपकारकत्वसम्भवात् अप्रयुक्तानामेवासादनमिति न्यायमतमिति ।

ग. पश्वर्थं यज्ञयोगस्य कृतत्वात् तेनैव प्रसङ्गादुपकारसिद्धेर्न पुनः पुरोडाशार्थं यज्ञयोग इति ।

1. 'घ' reads प्रणयनमित्युपदेशः
2. B. Ms. 2, reads उपदेशो नानिष्टिविधेऽपि
3. Ibid, कालखण्डमन्तर्भवति

१. हृदयं पुण्डरीकाकृति । यकृत् कालवर्णो मांसः । श्रोणी पृष्ठभागपादमूले । क्लोमा प्लीहा दक्षिणपार्श्वे स्थितं स्वादु मांसम् । इति तालवृन्तनिवासी । क्लोमा यकृत्प्रदेशं तिलकाख्यं मांसम् । प्लीहा गुल्मः इति रुद्रदत्तः ।

पार्श्वे षड्विंशत्या वङ्क्रिभिस्सह । श्रोणिः स्फिक् दक्षिणा । गुदकाण्डं येन शकृन्निर्गच्छति । स्विष्टकृदर्थे अवदधाति । दक्षिणं बाहुं सव्याश्च श्रोणिम् गुदश्च । [1]तस्योत्तरत्र विभागः । क्लोमानं [2]पिष्टलवः । प्लीहानं पुरीततं वारि । वनिष्ठुं स्थविरान्त्रम् । अध्यूध्नी ऊधसो मांसम् । मेदः चन्द्रकम् वृक्कयोः हृदये च तद्भवति । जाघनी येन मशकानपनयति । एतानि समस्तानि । 'अनूनं कृणुतात्' इति ॥ ५ ॥

गुदं मा निर्ल्लेषीर्वनिष्ठुं मा निर्ल्लेषीरिति संप्रेष्यति । मा विपर्यास्था इत्यर्थो भवति ॥ ६ ॥

मा [क]विपर्यास्थाः मा विपर्यासं कुरु । गुदकाण्डस्य स्थविरान्त्रस्य च योऽभ्यन्तरप्रदेशः तं बहिर्मा कुरु । बहिः परिवृत्य हि लोके शोधयन्त्यान्त्राणि इत्याशङ्क्याह-मा निर्ल्लेषीरिति ॥ ६ ॥

उदकपवित्रे कुम्भ्यां पशुमवधाय शूले प्रणीक्ष्य हृदयं शामित्रे श्रपयति ॥ ७ ॥

गार्हपत्यविकारः शामित्रः । हृदयशूलकुम्भीशाखापवित्रोपवेषाणां प्रतितपनादि शाखापवित्रात्याधानान्तं कृत्वा । "देवस्त्वा सविता पुनातु" इत्यवदानानि कुम्भ्यां पवित्रवत्यां क्षिपति । मांसस्य विप्रुषामभावात् न विप्रुषोऽनुमन्त्रणम् । स्थगयति यथा न निर्गच्छत्यूष्मा । शूले प्रणीक्ष्य आवपयित्वा शूलेन शामित्रे श्रपयति हृदयं शमिता ॥

अवहननादिकर्म प्रतिपद्यते ॥ ८ ॥

अवहननाद्याप्यलेपनिनयनान्तं कृत्वा पवित्रापिसर्गः । स्तीर्णे प्रस्तरे मन्त्रेण तत उद्वासनाद्यासादनान्तम् । अभिमर्शनञ्चासन्नस्य ।

क. मा विपर्यास्त इति पाठः प्रामादिक इति रुद्रदत्तः । See P. 447 A. S. B. ed. Vol. I.

1. Ad Ms. reads गुदस्योत्तरत्र; B. Ms.2, omits गुदश्च and reads गुदस्योत्तरत्र
2. B. Ms has एष्टलवः for पिष्टलवः

केचिद्विभज्य प्राशित्रस्य [1]सम्मार्गमपि । तदनुपपन्नम् । अप्रधानत्वात् पशुपुरोडाशस्य । साकंप्रस्थायीये तु प्रधानत्वाद्विभागः ॥ ८ ॥

**[१]वपया प्रचर्य पुरोडाशेन प्रचरति । शृते वा पशौ ॥ ९ ॥**

वपया प्रचर्येति पुनर्वचनात्पशुमालभ्येत्युपाकृतमात्रेऽपि पशुपुरोडाशो लभ्यते । पात्रसंसादनाद्यासादनान्तम् । ततः पशुकर्म । उपाकरणात्परं प्रचर्य वपया पुरोडाशेन प्रचारः । पक्वे वा प्रचरति । आसाद्य विरमति ॥ ९ ॥

**‘इन्द्राग्निभ्यां पुरोडाशस्याऽनुब्रूहि, इन्द्राग्निभ्यां पुरोडाशस्य प्रेष्य’ इति सम्प्रैषौ । ‘इन्द्राग्निभ्यां पुरोडाशस्याऽवदीयमानस्याऽनुब्रूहि, इन्द्राग्निभ्यां पुरोडाशस्याऽवदीयमानस्य प्रेष्य’ इति वा ॥ १० ॥**

यदावदीयमानस्येति प्रैषः, तदा अवद्यन् सम्प्रैष्यति ॥ १० ॥

**‘अग्नयेऽनुब्रूह्यग्नये प्रेष्य’ इति स्विष्टकृतस्सम्प्रैषौ ॥ ११ ॥**

इति द्वाविंशी कण्डिका

[क]हुत्वा नारिष्ठानग्नयेऽनुब्रूहीत्युपदेशः । पुरस्ताद्वनस्पतेर्नारिष्ठास्तानेवोपजीवन्ति यथाऽनूयाजादीनिति न्यायः । ऐन्द्राग्नवत्पशुपुरोडा-

क. पुरोडाशे नारिष्ठहोमानां स्विष्टकृतः पूर्वभावित्वेन तान् हुत्वा स्विष्टकृदर्थं ‘अग्नयेऽनुब्रहि’ इति सम्प्रैषः कर्तव्यः । किञ्च ‘इडान्तस्सन्तिष्ठते’ ( आप. श्रौ. ७-३-२ । इति पशुपुरोडाशस्येडान्तत्वविधानात्तावतैव तत्परिसमाप्तेः तदनन्तरमनुष्ठितैर्नारिष्ठहोमैस्तत्रोपकारसम्पादनायोगादपि स्विष्टकृतः पूर्वं नारिष्ठाः कर्तव्या इत्युपदेशमतम् । नात्र पृथङ्नारिष्ठहोमानुष्ठानम्, पशुयागार्थं वनस्पतियागात्पूर्वमनुष्ठास्यमानैरेव तैः प्रसङ्गादुपकारसिद्धेः । अतः स्विष्टकृद्विकारभूताद्वनस्पतियागात्पूर्वमेव तेषामनुष्ठानमिति न्याय इति ।

1. Ad Ms. reads संसर्गमपि for सम्मार्गमपि.

१. श्रुतिवाक्यस्याऽनुकृतिरियम् ।

शस्य [क]हुतानुमन्त्रणम् 'अग्नेरहं देवयज्ययाऽऽयुष्मान्" इति स्विष्टकृतः। इडान्तः मार्जनान्तः। [ख]यजमानभागप्रतिषेधात् पिष्टलेपफलीकरण-[1]होमयोरपि निवृत्तिः। वचनकृतत्वादि[2]डान्तत्वस्य। सूत्र[ग]कारैस्तु बन्धनमनपेक्ष्य श्रुतिं ये कुर्वन्ति तेषां यजमानभागप्रतिषेधो वचनकृतः। हविराहुतिप्रभृति च यदा कृतावाज्यभागौ। यदा त्वकृतौ तदा कृत्वाऽऽज्यभागौ हविराहुतिः ॥ ११ ॥

प्राशित्रमवदायेडां न यजमानभागम् ॥ १ ॥

हविराहुतिप्रभृतीडान्तः सन्तिष्ठते ॥ २ ॥

उपहूतां मैत्रावरुणषष्ठा भक्षयित्वा पूर्ववत्प्रस्तरे मार्जयित्वा स्रुवेण पृषदाज्यस्योपहत्य वेदेनोपयम्य त्रिः पृच्छति "शृतꣳहवी ३ श्शमितः" इति ॥ ३ ॥

भक्षण एव मैत्रावरुणषष्ठः प्रकृतवदुपहवः। न चान्वारभते। नापि 'उपहूत' इत्याह, [घ]यजेति वचनात् अध्वर्युविकारोऽपि सन्नुभयं पूर्ववद्भक्षणं मार्जनञ्च [3]मन्त्रेण मैत्रावरुणस्यापि। पूर्ववद्वच-नादिडाभक्षणाङ्गं मार्जनमिहाऽविधानात्। अत इडान्ते क्रियतेऽन्यत्रापि। उपघातो ग्रहणं पृषदाज्यस्य स्थालीगतस्य हृदयाभिघारणे वनस्पतौ च।

क. 'इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम्" इति स्वरूपमनुमन्त्रणस्येति।

ख. 'पशुमालभ्य पुरोडाशं निर्वपति' इत्यादिना निखिलाङ्गप्रासावपि विशिष्येडान्तत्वविधा-नात उपरितनानामङ्गानां निवृत्तिरिति।

ग. ये तु सूत्रकारैः कृतमेतद्विधिरूपं बन्धनमुपेक्ष्य पूर्वोदाहृत श्रुत्यवलम्बेन सर्वाङ्गानुष्ठानं कुर्वन्ति, तेषां यजमानभागप्राशनस्यापि प्राप्तौ वचनबलात्तन्निवृत्तिरिति मन्तव्यमिति।

घ. प्रकृतौ दर्शपूर्णमासयोः 'यज' इति प्रैषोऽध्वर्योः। स चेह मैत्रावरुणेन कर्तव्यः। तत्कर्तृत्वात् यद्यप्यध्वर्युकार्यकारी सम्भवति, तथापि पूर्ववदिति वचनाद्भक्षणं मार्जनं च मन्त्रेणैव कर्तव्यं न तूष्णीमिति।

1. Ad Ms. reads होमयोस्तु
2. B. Ms. reads इडान्तत्वम्
3. B. Ms. cites तन्त्रेण for मन्त्रेण.

इतरस्यानूयाजार्थत्वात्। उपदेशः पृषदाज्यधानीस्थस्येति। उपयमनमधस्ताद्धारणम् ॥ ३ ॥

**श्रृतमितीतरः प्रत्याह ॥ ४ ॥**

श्रृतमिति शमिता। स पक्ता पशोः, [क]नाग्नीध्रः। अर्थलक्षणस्य हि पक्ता सः ॥ ४ ॥

**अर्धाध्वे द्वितीयं प्राप्य तृतीयम् ॥ ५ ॥**

अर्धमध्वनः [1]अर्धाध्वम्। तत्र द्वितीयं पृच्छति। प्राप्य कुम्भीं तृतीयं पृच्छति। यदा त्वश्रृतं तदा श्रृतमिति न वक्तव्यम्, दोष[ख]वचनात्। मा द्वितीयं पृच्छेति प्रतिषेद्धव्योऽध्वर्युः। तेन च पाकः प्रतीक्ष्यः तदे[ग]शस्थेन ॥ ५ ॥

**"पूषा मा पशुपाः पातु" इति प्रथमेऽभिप्रव्रजति। "पूषा मा पथिपाः पातु" इति द्वितीये। "पूषा माधिपाः पातु" इति तृतीये ॥ ६ ॥**

**शूलात्प्रवृह्य हृदयं कुम्भ्यामवधाय "सन्ते मनसा मनः" इति पृषदाज्येन हृदयमभिघारयत्युत्तरतः परिक्रम्य ॥ ७ ॥**

**आज्येन पशुं "यस्त आत्मा पशुषु प्रविष्ट" इति ॥ ८ ॥**

क. यद्यपि प्रकृतौ 'आग्नीध्रो हवींषि सुश्रृतानि करोति' इत्याग्नीध्रस्यैव हविःश्रपणकर्तृत्वात् स एवात्राप्यतिदेशेन प्राप्नोति, तथापि 'श्रृतꣳहवी ३ऽशमितः' इति प्रैषस्य शमितृविषयकत्वात्स एव पक्तेति।

ख. "योऽश्रृतꣳश्रृतमाह स एनसा" (युज्यते) इति शमितुर्दोषश्रवणादिति।

ग. हविः प्राप्त्यर्थं गन्तुं प्रक्रान्तेनाध्वर्युणा प्रथमः प्रश्नः कर्तव्यः। तदा यदि न श्रृतं हविः तर्हि द्वितीयं मा पृच्छेति शमित्राऽध्वर्युर्निषेद्धव्यः। यत्र स्थितेन निषेधोऽध्वर्युणा श्रुतः तत्रैव तेन स्थातव्यम्। नाग्रे गन्तव्यम्। तत्र स्थितेनैव पाकः प्रतीक्ष्य इति।

1. B. Ms. 1, reads अर्धाध्वनः for अर्धाध्वम्; B. Ms. 2, omits this word.

शूलादपनीय हृदयं " स्वाहेन्द्राग्निभ्यां त्वा जुष्टमभिघारयामि " इत्यभिघारणम्। हृदयस्योत्तरतो गच्छति पशोः तृतीयेन "पूषा माधिपा" इति। अन्योऽस्याज्यस्थाल्या आज्यमानयत्यभिघारणार्थं गमनमिति। पृषदाज्येन हृदयमभिघारयत्युत्तरतः परिक्रम्येति सूत्रच्छेदः। तृतीयेन [1]गमनमन्त्रेणोत्तरतः परिक्रामति, ततोऽभिघारयति हृदयमुत्तरतः स्थित आज्येन पशुम्। [क]उपदेशः–उत्तरतः परिक्रमणमाज्येनाभिघारणार्थम्। हृदयाभिघारणार्थमेव गमनमिति न प्राप्नोति। " [2]पूषा माधिपा " इति मन्त्रो न प्राप्नोत्युत्तरत्र परिक्रमणे। पूषा माधिपा इति ईषद्गत्वा हृदयमभिघारयति ॥ ६-८ ॥

"स्वाहोष्मणो व्यथिष्या" इत्युद्यन्तमूष्माणमनुमन्त्रयते ॥

उद्यन्तमूर्ध्वं यन्तमूष्माणम् ॥ ९ ॥

पशुं हरन् पार्श्वतो हृदयशूलं धारयत्यनुपस्पृशन्नात्मानमितरांश्च ॥ १० ॥

कुम्भीपार्श्वे धार्यते। हृदयशूलो बद्धः यथैनं न स्पृशति प्राकृतानि इतरांश्चेति ॥ १० ॥

अन्तरा यूपमाहवनीयञ्च दक्षिणातिहृत्य पञ्चहोत्रा षड्ढोत्रा वा दक्षिणस्यां वेदिश्रोण्यामासाद्य चतसृषूपस्तृणीते जुहूपभृतोर्वसाहोमहवन्यां समवत्तधान्यामिति ॥ ११ ॥

क. उपदेशमते 'शूलात्प्रवृह्य' इत्यादि 'अभिघारयति' इत्यन्तमेकं सूत्रम्। उत्तरत इत्यारभ्य प्रविष्ट इत्यन्तमपरम्। तच्च प्रथमसूत्रेण कुम्भीं प्राप्य तृतीयं पृष्ट्वा श्रृतमित्युक्ते 'पूषा माधिपा' इति मन्त्रेणेषद्गत्वा हृदयमभिघारयतीत्येतावद्विधीयते। द्वितीयसूत्रेण च ततस्तूष्णीमुत्तरतः परिक्रम्य 'यस्त आत्मा पशुषु' इति मन्त्रेण पशुमभिघारयतीति। एवं च प्रथमपक्षे तृतीयमन्त्रेणोत्तरतः परिक्रमणम्। उपदेशमते च तूष्णीमिति फलितम्।

1. 'ज' omits गमन
2. B. Mss. 1,2 omit from पूषा to क्रमणे

समवत्ता गृहीता यस्यां पश्विडा धार्यते। सा समवत्तधानी॥ ११॥

जुहूपभृतोर्हिरण्यशकलाववधाय बर्हिषि प्लक्षशाखायामवदानान्यवद्यन् सम्प्रेष्यति॥ १२॥

इति त्रयोविंशी कण्डिका

मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति॥ १॥

अवदानमन्त्रेण छिनत्ति स्वधितिना हृदयम्। पश्चान्मनोतासम्प्रैषः॥ १॥

हृदयस्याग्रेऽवद्यति। अथ जिह्वाया अथ वक्षसो याथाकामीतरेषाम्॥ २॥

अवदानेऽ[1]वदाने मन्त्रावृत्तिः, भिन्नत्वात्। [2]स्वधितिना च हरणमवदानस्य। [क]उपदेशः—नावदानमन्त्रः। न [3]स्वधितिना च हरणम्। यस्मिंश्च काले विभज्यते गुदः तस्मिन्नेवोपभृति इडायां च क्षिप्यते॥२॥

मध्यतो गुदस्याऽवद्यतीत्युक्तम्॥ ३॥

यथोद्धृतं वा॥ ४॥

यदि च दैवतानां मध्ये अन्ते वा गुदविभागः। दैवतार्थं यदा गुदं विभजति तदा मन्त्रः॥ ३, ४॥

क. 'मा भेर्मा संविक्था' इत्यवदानमन्त्रे 'अवदानानि ते प्रत्यवदास्यामि (See आप. श्रौ. २. १८. ९) इति दर्शनात् प्रत्यभिघारणसम्बन्धिनामेव हविषामवदानमन्त्र इत्यवगमात् हृदयादीनां प्रत्यभिघारणाभावात् नावदानमन्त्रः। पुरोडाशविकारत्वाच्च न स्वधितिना हरणमित्युपदेशमतम्। किञ्चावदानरूपत्वाच्छेदनस्य यदा त्रेधा विभागो गुदस्य तदानीमेव त्रिषु स्थानेषु जुह्वामुपभृति इडायाञ्च क्षेप इति।

1. Ad Ms. reads अवदाने only.
2. B. Ms.1, reads स्वधितिनावहरणम्.
3. B. Ms. reads स्वधितिनावहरणम्

दैवतानां द्विर्द्विरवदाय जुह्वामवदधाति। उपभृति सौविष्टकृतानां सकृत्सकृत् ॥ ५ ॥

सर्वाणि दैवतानि गृहीत्वा सौविष्टकृतानि प्रत्यभिघार्यावद्यति। उपदेशस्तु यदा गुदविभागः, तदा सौविष्टकृतान्यपि गृहीत्वा ॥ ५ ॥

गुदं त्रेधं विभज्य स्थविमदुपयड्भ्यो निधाय मध्यमं द्वैधं विभज्य दैवतेष्ववदधाति । अणिमत्सौविष्टकृतेषु । अपि वा द्वैधं विभज्य स्थविमदुपयड्भ्यो निधायेतत् त्रैधं विभज्य मध्यमं द्वैधं विभज्य दैवतेष्ववदधाति । अणिमत्सौविष्टकृतेषु ॥ ६ ॥

उपयड्यागार्थम् स्थविमत् स्थूलतमम्, अनूयाजानां वषट्कृते वषट्कृते हूयते। अणिमत् अणुतमम्। तद्दैवतानि गृहीत्वा सौविष्टकृतेषु क्षिप्यते। पञ्चावत्तिनां त्रिस्त्रिर्दैवतानि सौविष्टकृतानि द्विर्द्विः ॥ ६ ॥

स्थविष्ठमिडायाम् ॥ ७ ॥

स्थविष्ठमिडायाम्। ऐडानि सप्त गृहीत्वाऽवदधाति मेदश्च ॥ ७ ॥

त्रेधा मेदोऽवद्यति द्विभागं स्रुचोस्तृतीयं समवत्तधान्याम् ॥ ८ ॥

यूषे मेदोऽवधाय मेदसा स्रुचौ प्रावृत्य हिरण्यशकलावुपरिष्टात्कृत्वाभिघारयति ॥ ९ ॥

समवत्तधान्यां षडाद्यानीडां समवद्यति वनिष्ठुं सप्तमम्। षड्भ्यो वा वनिष्ठोः सप्तमात् ॥ १० ॥

सौविष्टकृतानि गृहीत्वा [क]यूषे मेदो[ख]ऽववायेत्येवमाद्यभिघारणान्तं कृत्वा ऐडानि गृह्णाति । नेडामन्त्रः । यदा ससभ्यः तदा मन्त्रः पुनः पुनस्तेभ्यश्च दक्षिणार्धात् ॥ ८–१० ॥

अनास्थिभिरिडां वर्धयति ॥ ११ ॥

येषामस्थीनि न विद्यन्ते तदा जाघनीवर्ज्यानि सहाध्युद्धिना तैर्वर्धयतीडाम् । [ग]नाध्युद्धिरुपदेशेन । तिष्ठत्येव जाघनी पत्नीसंयाजार्थम् ॥ ११ ॥

क्लोमानं प्लीहानं पुरीततामित्यवधाय यूष्णोपासिच्याभिघारयति ॥ १२ ॥

इति चतुर्विंशी कण्डिका

यः पशुरसस्तेनोत्सिच्याभिघारयति ॥ १२ ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिविरचिते

सप्तमप्रश्ने सप्तमः पटलः

अष्टमः पटलः

"अपां त्वौषधीनाꣳरसं गृह्णामि" इति वसाहोमहवन्यां वसाहोमं गृह्णाति ॥ १ ॥

[घ]वसा पशुरस [1]एव ॥ १ ॥

क. यूषशब्देन मांसेन सह पक्वं जलमुच्यते ( See तै. सं. भा. १-३-१० पृ. ४८२ ) An. ed. Vol.

ख. जीर्णपटसदृशं हृदयवेष्टनं मेद इति सायणः Do. पृ. ४८१ Do.

ग. उत्तरत्र पुरीतत्पर्यन्तस्यैव ग्रहणात् वनिष्ठोस्सप्तमादित्येतावन्मात्रस्योपदेशाच्चेति ।

घ. मांसपाकभाण्डे स्थितः स्नेहात्मको द्रव्यविशेषो वसा इति सायणः ( See also महीधरभाष्य of शु. य. सं. ६. १८ )

1. 'घ' & 'ङ' read वसा होमः पशुरस एव

स्वधितिना धारां छिनत्ति । द्विः पञ्चावत्तिनः ॥ २ ॥

स्वधितिना छुरिकया धाराच्छेदः ॥ २ ॥

[१]" श्रीरसि " इति पार्श्वेन वसाहोमं प्रयौति ॥ ३ ॥

[२]" वातस्य त्वा ध्रज्या " इति तेनैवापिदधाति । स्वाधितिना वा प्रयौति । स्वधितिनाऽपिदधातीत्येके ॥ ४ ॥

प्रयौति घट्टयति तेनैव । [1]स्थगयति ॥ ३, ४ ॥

अथ यन्न शीर्ष्णोऽवद्यति नांसयोर्नाणूकस्य नापरसक्थ्योरनवदानीयानि ॥ ५ ॥

यस्मादेतान्यनवदीयानि शिरआदीनि अत एभ्यो नावद्येत् । अंसः बाहुफलकयोरन्तरालः । अणुकः पृष्ठकाण्डः । अपरसक्थी पश्चिमभागयोरन्तरा । एभ्यो नाऽवद्यति ॥ ५ ॥

तानि शृतैस्सन्निधाय सम्मृश "त्यैन्द्रः प्राणो अङ्गे अङ्ग " इति ॥ ६ ॥

सकलान्येवैतानि अशृतानि दैवतसौविष्टकृतैडैस्सन्निधायैकीकृत्याभिमृशति । उभयानि शृताशृतानि मदन्त्वित्यन्तेन ॥ ६ ॥

अथ हविषा प्रचरति । " इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहि " " इन्द्राग्निभ्यां छागस्य हविषः प्रेष्य " इति सम्प्रैषौ ॥ ७ ॥

अथ शब्दोऽर्थकृत्यप्रतिषेधार्थः ॥ ७ ॥

1. B. Ms. adds again घट्टयति before स्थगयति

१. श्रीरस्यग्निस्त्वा श्रीणात्वापस्समरिणन्

२. वातस्य त्वा ध्रज्या अपामोषधीनांरोहिष्यै ।

**याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहोति [२]"घृतं घृतपावानः पिबत" इति ॥ ८ ॥**

आदावन्ते वा स्वाहाकारः प्रदानार्थः । "पुरस्तात्स्वाहाकारा वा अन्ये देवाः" इति लिङ्गात् । [क]मध्यमे स्वाहाकारो न प्रदानार्थः । अतस्स्वाहा त्वान्तरिक्षाय स्वाहेति वसाहोमे पुनस्स्वाहाकारः क्रियते ॥८॥

**उद्रेकेण [३]दिशः प्रदिश इति प्रतिदिशं जुहोति मध्ये पञ्चमेन ॥ ९ ॥**

उद्रेकः शेषः । तेन यागः प्रतिदिशम् । मध्ये जुहोति पञ्चमेन मन्त्रेण ॥ ९ ॥

**प्राञ्चमुत्तमं संस्थाप्य "नमो दिग्भ्य" इत्युपतिष्ठेत ॥ १० ॥**

**वषट्कृते जुहोति ॥ ११ ॥**

उत्तमं प्राञ्चं प्रागपवर्गं संस्थाप्य समासिमस्य कृत्वा । प्राचीनं षष्ठस्य । कृते दिगुपस्थाने याज्याशेषं होता ॥ १०, ११ ॥

**अत्र वा दिशः प्रतियजेत । उपरिष्टाद्वा वनस्पतेः स्विष्टकृतो वा ॥ १२ ॥**

क. "पुरस्तात्स्वाहाकारा वा अन्ये देवा उपरिष्टात्स्वाहाकारा अन्ये" इत्येव श्रुति दर्शनात् मध्यमस्वाहाकारस्य प्रदानार्थता नास्ति इत्यवगम्यते । अतो वसाहोममन्त्रे सत्यपि मध्ये स्वाहाकारे प्रदानार्थमन्ते पुनः स्वाहाकारः प्रयुज्यत इति ।

१. ऐन्द्रः प्राणो अङ्गे अङ्गे निदेध्यदैन्द्रोऽपानो अङ्गे अङ्गे विबोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत्सलक्ष्माणो भवथ देवत्रा यन्तमवसे सखायोऽनुत्वा माता पितरो मदन्तु । (तै. सं. १-३-१०-१)

२. घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहात्वान्तरिक्षाय स्वाहा (तै. १-३-१०-२)

३. दिशःस्वाहा । प्रदिशस्स्वाहा । आदिशस्स्वाहा । विदिशस्स्वाहा । उद्दिशस्स्वाहा ।

हुते वा हविषि दिशां [1]यागः । उपरिष्टाद्वा वनस्पतिहोमस्य स्विष्टकृद्धोमस्य वाऽऽकृते वैश्वानरे हविरिति प्रतिप्रस्थातुः । दिशां यागस्सर्वत्र ॥ १२ ॥

प्रत्याक्रम्य जुह्वामुपस्तीर्य सकृत्पृषदाज्यस्योपहत्य द्विरभिघार्य " वनस्पतयेऽनुब्रूहि, वनस्पतये प्रेष्य " इति संप्रैषौ । वषट्कृते जुहोति ॥ १३ ॥

दैवतानि हुत्वा प्रतिनिवृत्य नारिष्ठहोमाः । ततो वनस्पतिः । इह न नारिष्ठहोमाः । पशुपुरोडाश एवोपदेशेन । द्विः पृषदाज्यस्य ग्रहणं पञ्चावत्तिनः ॥ १३ ॥

स्विष्टकृद्वद्यजमानोऽनुमन्त्रयते ॥ १४ ॥

"स्विष्टकृद्वद्वनस्पतेरहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयम्" इत्यनुमन्त्रणम् ॥ १४ ॥

उपर्याहवनीये जुह्वामौपभृतानि विपर्यस्यन्नाह-"अग्नये स्विष्टकृतेऽनुब्रूह्यग्नये स्विष्टकृते प्रेष्य "इति सम्प्रैषौ ॥१५॥

तथागत एवाहवनीयस्योपरि जुह्वामौपभृतानि क्षिपन्नाह-अग्नये स्विष्टकृतेऽनुब्रूहि इति ॥ १५ ॥

वषट्कृते हुत्वा प्रत्याक्रम्याऽऽयतने स्रुचौ सादयति ॥१६॥

इति पञ्चविंशी कण्डिका

1. 'ज' Ms. reads दिशां होमः

प्रत्याक्रम्य वैश्वानरे हविरिति कृत्वा स्रुक्सादनम्। [क]अनाज्यभागपक्षेऽपीहैव स्रुक्सादनं यथा स्यान्न पूर्वमित्यतो विधीयते। उपदेशो यदा न कृतावाज्यभागौ, तदा पूर्वमपि स्रुक्सादनमिति ॥

## अत्रेडाया निरवदानमेके समामनन्ति ॥ १ ॥

निरवदानं ग्रहणम्। अत्र वा प्राकृतकाले न [ख]पूर्वम्। उपदे[1]शस्तु निश्शेषमवदानं निरवदानमिति। अत्रेडां गृह्णन्स्थीन्यपि हविश्शेषार्थं नावशे[ग]षयति। षड्भ्यो वेत्येतच्च न लभ्यत इति ॥ १ ॥

## अवान्तरेडामवद्यति। मेद उपस्तीर्य मेदसाभिघारयति ॥ २ ॥

सकृदुपस्तरणाभिघारणे मेदसाऽवान्तरेडायाः ॥ २ ॥

## "यं कामयेताऽपशुस्स्यादिति अमेदस्कं तस्मा" इत्युक्तम् ॥ ३ ॥

अपशुस्स्यादिति [2]प्रतिषेधः ॥ ३ ॥

क. यद्यपि 'वैश्वानरे हविरिदं जुहोमि' (आप. श्रौ. २. २१. ७) इत्यन्तः परिधिनिनयनानन्तरं विहितमत्रैव स्रुक्सादनं प्रकृतितोऽतिदेशप्राप्तं, तथापि स्रुगादानस्य प्रकृताज्यभागं प्रत्येव पूर्वमाज्यभागं प्रति स्रुचावादत्ते न निदधात्या स्विष्टकृतः। ("आप. श्रौ. २-१८-७) इति विधिप्रतीतेः तयोरेव च निधाननिषेधात् आज्यभागाभावपक्षे पूर्वमपि स्रुगासादनं भवितुमर्हतीति शङ्का स्यात्, तां निराकर्तुमत्र सूत्रे पुनर्विधानम्। आज्यभागाभावपक्षेऽप्यत्रैव स्त्रुक्सादनं कर्तव्यम् न पूर्वमिति। अतश्च शङ्खवेलायामागन्तव्यमितिवत् कालमात्रविधिः प्रकृताविति फलितम्। see also आश्वलायन श्रौतसूत्र३-१-४

ख. न प्रधानावदानकाल इति।

ग. यद्यस्मिन् काल इडावदनं तदा सर्वस्याप्यवदानम्। अत्रैव निरवशेषश्रवणात् पूर्वं तु सावशेषमिति।

1. B. Ms. adds इडां bofore उपदेशः
2. B. Ms.2, reads प्रतिषेधार्थः See Also तै. सं. ६-३-११ रिनग्धद्रण्यरहितं मां समभेदरकम्।

